| | पृष्ठा । | पंक्ति । |
|---|---|---|
| दण्डादण्डे दोषाः ... ... ... | ४ ... | १ |
| द्यूतकारदण्डः ... ... ... | १०७ ... | ५ |
| धनदण्डसंख्या ... ... ... | २२ ... | १ |
| निर्णयोत्तरकृत्यम् ... ... ... | ३५० ... | १ |
| पण्यनिर्म्माणोपजीविनो दण्डः ... ... | १०१ ... | ७ |
| परदाराभिमर्षणदण्डः ... ... ... | १५४ ... | २ |
| पुत्रादिहीनाया धनं गृह्णतः परस्य दण्डः ... | ३१९ ... | १६ |
| प्रकीर्णदण्डः ... ... ... | २५९ ... | १ |
| प्रकीर्णापहारिदण्डः ... ... ... | १४० ... | ५ |
| प्रनष्टगताधिकारः ... ... ... | २७२ ... | ११ |
| प्रहरणदण्डः ... ... ... | २५१ ... | ६ |
| प्रहरणोद्यमनदण्डः ... ... ... | २५० ... | १ |
| वन्धक्याद्यभिगमे दण्डः ... ... ... | १८८ ... | १ |
| बहूनामेकं प्रहरतां दण्डः ... ... ... | २४९ ... | १ |
| ब्राह्मणादीनां परस्पराक्षेपे दण्डः ... ... | २०० ... | १ |
| भिषजो दण्डः ... ... ... | १०४ ... | १२ |
| मनुष्यमारणदण्डः ... ... ... | ७० ... | १ |
| मान्त्रिकतान्त्रिकयोर्दण्डः ... ... ... | ११५ ... | १ |
| रजकदण्डः ... ... ... | ११२ ... | ६ |
| वाक्पारुष्यदण्डः ... ... ... | १९६ ... | १ |
| विवादपदानि ... ... ... | ३२५ ... | ८ |
| विप्रशिष्टशूद्रस्य नियमातिक्रमदण्डः ... ... | ३२१ ... | १ |
| व्यवहारविषयदण्डः ... ... ... | ३३२ ... | १ |
| व्यवहारिकी नैगमादिसंज्ञा ... ... | ३१ ... | १ |
| शिल्पकाभिज्ञकुशलाचार्य्याणां दण्डः ... ... | ११४ ... | १७ |
| सन्धिच्छिदो दण्डः ... ... ... | १२४ ... | १६ |
| सभ्यदण्डः ... ... ... | ३३७ ... | ५ |
| सभ्योपदेशः ... ... ... | १७ ... | १ |
| सम्यग्दण्डगुणाः ... ... ... | ८ ... | १ |
| साहसम् ... ... ... | २९३ ... | १ |
| स्तेयदण्डः ... ... ... | ८० ... | १ |

# दण्डविवेकः ।

श्रीगणेशाय नमः ।

पाणिभ्यामुपजातवेपथुतया यत्नेन यः कल्पितो
येन स्वेदजलौघपूरिततया नापेक्षितोऽम्बुग्रहः ।
सन्ध्यार्थत्वमवेत्य यो मुकुलिते सव्ये करे कम्बुना
सादृश्यं गतवान् स पातु शिवयोः सायन्तनोऽर्घ्या-
ञ्जलिः ॥ १ ॥

सार्द्धं राधिकया वनेषु विहरन्नस्याः कपोलस्थले
घर्म्माम्भोविसरं प्रसारिणमपाकर्त्तुं करेण स्पृशन् ।
[1]तत्र प्रत्युत सात्त्विकाम्बुमिलनादोजायमाने जवा-
द्व्याद्धो विफलप्रयासविकलो गोपालरूपो हरिः ॥ २ ॥

[2]कृष्णावतारकुतुकं बहुमन्यमानो
दण्डं वहन्नवति गां पुरुषोत्तमो यः ।
वाञ्छन्नसाननुगुणेन गुणेन बद्ध्वा
भूयः प्रचारयति गां भुवनान्तरेषु ॥ ३ ॥

यः श्रीकुसेनमपनीतसमस्तसेन-
मात्मीयसैनिकमिवात्ममते नियुङ्क्ते ।
गौड़ेश्वरप्रतिशरीरमतिप्रतापः
केदाररायमवगच्छति दारतुल्यम् ॥ ४ ॥

---

१ ग तत्र प्रच्युत— ।

२ घ पुस्तके तृतीयश्लोकादारभ्य नवमश्लोकं यावन्नास्ति ।

उच्छृङ्खलप्रखलखण्डनपण्डितेन
श्रीभैरवेण मिथिलापृथिवीश्वरेण ।
तेनानुकम्प्य सकृदप्यवलोक्यमाना
श्रीवर्द्धमानकृतिनोऽस्तु कृतिः कृतार्था ॥ ५ ॥

ज्यायान् गण्डकमिश्रः शङ्कर-
वाचस्पती च मे गुरवः ।
निखिलनिबन्धसमास-
प्रयासमेनं ममाऽनुजानन्तु ॥ ६ ॥

किञ्चालसमनसो ये
विविधनिबन्धावलोकने कृतिनः ।
ते परि पवित्रं कुर्व्वन्तु
हसन्तु दुर्जनाः किन्तैः ॥ ७ ॥

नाह्लयति [१]गुणगन्धा-
न्नोद्विजते दोषसम्बन्धात् ।
अविदितगुणदोषोऽपि हि
परकृतिरित्येव दुर्जनो ज्वलति ॥ ८ ॥

मन्त्री यत्र महार्णवो गुणगुरुः पृथ्वीपतिः पण्डितो
रूढाहङ्कृतयः पुराणकृतयः सभ्याः श्रुताभ्यासिनः ।
तत्र क्षुद्रमतेरिमां मम कृतिं कः श्रद्दधीताऽथवा
यो यद्वेत्ति स तत्र तस्य विभवस्तेनैव स श्लाघ्यते ॥ ९ ॥

दण्डस्यादौ परिकरस्ततः षट् तस्य हेतवः ।
उक्ता दण्डविवेकेऽस्मिन् परिच्छेदेषु सप्तसु ॥ १० ॥

---

१ ख गुणबन्धात् ।

तत्र दण्डप्रशंसायां मनुः,—

तदर्थं सर्वभूतानां गोप्तारं धर्ममात्मजम्।
ब्रह्मतेजोमयं दण्डमसृजत् पूर्वमीश्वरः॥

तस्य सर्व्वाणि भूतानि स्थावराणि चराणि च।
भयाद्भोगाय कल्पन्ते धर्म्मान्न विचलन्ति च॥

स राजा पुरुषो दण्डः स नेता शासिता च सः।
चतुर्णामाश्रमाणाञ्च धर्म्मस्य प्रतिभूः स्मृतः॥

दण्डः शास्ति प्रजाः सर्व्वा दण्ड एवाभिरक्षति।
दण्डः सुप्तेषु जागर्त्ति [1]दण्डं धर्म्मं विदुर्बुधाः॥

तदर्थमिति राज्ञो यः प्रजारक्षणाख्यो धर्म्मस्तदर्थमिति रत्नाकरः। राजार्थमिति नारायणः। युक्तञ्चैतत् राज्ञ एव प्रक्रमात्। धर्म्मं धर्म्मव्यवस्थापकम्। अभेदोपचार आदरार्थः। आत्मजं पुत्रं, ब्रह्मतेजोमयमिति न पाञ्चभौतिकमपितु हिरण्यगर्भतेजःप्रकृतिकम्। अयमपि स्तुतिवाद आदरार्थः। ईश्वरः प्रजास्रष्टा राजा प्रकृति-रञ्जनात्। पुरुष इति स एव पुरुषस्ततोऽन्येषां तद्विधेय-त्वेन स्त्रीतुल्यत्वादिति मनुटीका। पुरुषः परमपुरुष-तुल्यः। प्रजानां हृदिस्थितत्वादिति रत्नाकरः। नेता स्वधर्म्मप्रापयिता। जागर्त्ति जाग्रतः कार्य्यं चौरादिभय-वारणं करोति॥

---

१ क ख ङ पुस्तकत्रये दण्डे।

# अथ दण्डादण्डे दोषाः।

तत्र मनुः,—

यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः।
शूले मत्स्यानिवापक्ष्यन् दुर्ब्बलान् बलवत्तराः[१] ॥
स्वाम्यञ्च न स्यात् कस्मिंश्चित् प्रवर्त्तेताऽधरोत्तरम् ॥

शूल इति। शूले कृत्वा यथा मत्स्याः पच्यन्ते तथा विवशान् दुर्ब्बलान् अपक्ष्यन् तेषां हिंसामकरिष्यन्नित्यर्थः। शूलेन मत्स्यानिति मेधातिथि-गोविन्दराजाभ्यां पठितम्। शूले मत्स्यानिवाभिद्युरिति क्वचित् पाठः। सर्व्वत्र बलवन्तो दुर्ब्बलान् हिंस्युरिति मात्स्यन्यायप्रसङ्गे तात्पर्य्यम्। स्वाम्यञ्च न स्यात्। स्वत्वविषयेऽपि पराक्रान्ते यथेष्टविनियोगाभावात्। अधरोत्तरमुत्कर्षापकर्षवैपरीत्यम्।

तथा,—

अंशांशं तस्कराद् यस्तु बलिं गृह्णाति पार्थिवः।
तस्य प्रक्षुभ्यते राष्ट्रं स्वर्गाच्च परिहीयते ॥

परिहीयते पार्थिव इत्यर्थः। अत्र तस्करानिति प्रक्षोभहेतूनां पारदारिकादीनामप्युपलक्षणम्।

उक्तञ्च कामन्दकीये,—

आमुक्तकेशाच्चौरेभ्यः परेभ्यो नृपवल्लभात्।
पृथिवीपतिलोभाच्च मानुषं पञ्चधा भयम् ॥

---

१ घ बलवन्नराः।

बलिमित्यप्युपलक्षणम् ।

यदाह मनुरेव,—

योऽरक्षन् बलिमादत्ते करं शुल्कञ्च पार्थिवः ।
प्रतिभोगञ्च दण्डञ्च सः सद्यो[१] नरकं व्रजेत् ॥

बलिर्धान्यादेः षड्भागादिः । करो ग्रामपुरादिवासिभ्यः प्रतिमासग्राह्यम् । शुल्कं वणिगादिभ्यो द्वादशभागादिः । प्रतिभोगः फलकुसुमशाकाद्युपायनं प्रात्यहिकम् । प्रीतिभोगमिति क्वचित्पाठः । तत्र प्रीत्या भोगार्थमुपढौकितं फलादीत्यर्थः । दण्डः प्रसिद्धः ।

तथा,—

सर्व्वतो धर्म्मषड्भागो राज्ञो भवति रक्षणात् ।
अधर्म्मादपि षड्भागो भवत्यस्य ह्यरक्षणात् ॥

तथा,—

दण्डो हि सुमहत्तेजो दुर्द्धरश्चाकृतात्मभिः ।
धर्म्माद्विचलितं हन्ति नृपमेव सबान्धवम् ॥
ततो दुर्गञ्च राष्ट्रञ्च मुनीन् देवांश्च पीड़येत् ।

देवानां पीडा साधूपप्लुतैः, साधुभिर्हविःप्रदानाभावात् । प्रदानजीवना देवा इति स्मरणात् ।

मनुः,—

अधर्म्मदण्डनं लोके यशोघ्नं कीर्त्तिनाशनम् ।

जीवतः ख्यातिर्यशो मृतस्य ख्यातिः कीर्त्तिरिति मनुटीकायां कुल्लूकभट्टः । यशो बहुभिर्गुणानां ज्ञानं कीर्त्तिस्तु कथनमिति नारायणः ।

---

१ क पुस्तके स दण्डः ।

तथा,—

अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकञ्चैव गच्छति ॥

तथा,—

यावानवध्यस्य बधे तावान् बध्यस्य मोक्षणे ।
अधर्म्मो नृपतेर्दृष्टो धर्म्मश्चैव नियच्छतः ॥

नियच्छतः बध्यस्य बधमबध्यस्याबधञ्च कुर्व्वतः ।

[1]कात्यायनः,—

राजानो मन्त्रिणश्चैव विशेषादेनमाप्नुयुः ।
अशासनात्तु पापानां नतानां दण्डधारणात् ॥

एनमिति छान्दसप्रयोगस्तेन पापमित्यर्थः । अथवा प्रक्रान्तमधर्म्ममित्यर्थः । क्वचिदेन इति ऋजुरेव पाठः । नतानां विनीतानां अदण्ड्यानामिति यावत् ।

वशिष्ठः,—

दण्डोत्सर्गे राजैकरात्रमुपवसेत्, त्रिरात्रं पुरोहितः । कृच्छ्रमदण्डने पुरोहितस्त्रिरात्रं राजा च ।

अदण्डन इत्यत्रादण्ड्यदण्डन इति क्वचित् पाठः । प्रकृतपाठेऽपि स एवार्थः । यथाश्रुतस्य दण्डोत्सर्गेणोक्तत्वात् । तेनानुपदेशे त्रिरात्रोपवासो विपरीतोपदेशे कृच्छ्रं पुरोहितस्य । अदण्डने एकरात्रमुपवासो राज्ञः । चकारात् सभ्यानामपि त्रिरात्रोपवासः ।

---

१ ग पुस्तके कात्यायनपदं नास्ति ।

अथ याज्ञवल्क्यः,—

राज्ञाऽन्यायेन यो दण्डो गृहीतो वरुणाय तम् ।
निवेद्य दद्याद्विप्रेभ्यः स्वयं त्रिंशद्गुणीकृतम् ॥

अन्यायेन अयथाशास्त्रम् ।

अत्र मिताक्षराकारः ।

अन्यायेन यो दण्डो राज्ञा लोभादिना गृहीतः, तं त्रिंशद्गुणीकृतं वरुणायेदमिति संकल्प्य ब्राह्मणेभ्यः स्वयं दद्यात् । यस्माच्च दण्डतया यावद्गृहीतं तावत्तस्मै प्रतिदेयमन्यथाऽपहारदोषात् । अन्यायदण्डग्रहणे पूर्व्वस्वामिस्वत्त्वानपायादित्याह ॥

# अथ सम्यग्दण्डगुणाः।

तत्र मनुः,—

तं राजा प्रणयन् सम्यक् त्रिवर्गेणाभिवर्द्धते।

तथा,—

समीक्ष्य स धृतः सम्यक् सर्वा रञ्जयति प्रजाः।

याज्ञवल्क्यः,—

सम्यग् दण्डयनं राज्ञः स्वर्गकीर्त्तिजयावहम्।
यो दण्ड्यं दण्डयेद्राजा सम्यक् वध्यांश्च घातयेत्॥
इष्टं स्यात् क्रतुभिस्तेन सहस्रशतदक्षिणैः॥

इह राजेति हननाधिकारी श्रुत एव। यत्र विशेषवचनं नास्ति तत्रापि बधार्थमुपदेशो राज्ञ एव राजवृत्तेरेव वा तस्यैव प्रजापालनवृत्तत्वात्[१]। न द्विजातिमात्रस्य।

ब्राह्मणः परीक्षार्थमपि न शस्त्रमुपाददीतेति बौधायनेन,—

आयुधग्रहण-नृत्यगीतवादित्राणीति राजाधीनेभ्योऽन्यत्र न विद्येरन्।

इत्यापस्तम्बेन च तस्य शस्त्रग्रहणनिषेधस्वरसात्।

अत्र मिताक्षराकारः,—

यदा राज्ञो निवेदने कालविलम्बेन कार्य्यातिपातः शङ्क्यते तदा स्वयमेव चौरादीन् हन्यात्, तत्र मनुना शस्त्रं द्विजातिभिर्ग्राह्यमित्यादिनाऽभ्यनुज्ञानादित्याह।

---

१ ग घ पुस्तकद्वये प्रवृत्तत्वात्।

एतच्चाशक्यधारणे पलायितदुर्लभे चौरादौ द्रष्टव्यम्। मन्वादिवचनानां गत्यन्तराभावविषयकत्वात्।

तथाहि मनुः,—

शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्राऽवरुध्यते।
द्विजातीनाञ्च वर्णानां विप्लवे कालकारिते॥
आत्मनश्च परित्राणे दक्षिणानाञ्च सङ्गरे।
स्त्रीविप्राभ्युपपत्तौ च घ्नन् धर्मेण न दूष्यति॥

अत्र मनुटीकायां ब्राह्मणादिभिर्वर्णैः खड्गाद्यायुधं ग्रहीतव्यं यदा साहसिकादिभिर्वर्णाश्रमिणां धर्मः कर्त्तुं न दीयते। तथा अराजके राष्ट्रे परचक्रागमादिकालजनिते विप्लवे स्त्रीसङ्करादौ प्राप्ते तथा आततायिभ्य आत्मरक्षार्थं तथा दक्षिणाभागापहारसंग्रामे स्त्रीब्राह्मणरक्षार्थञ्च धर्म्मज्ञत्वेनानन्यगतिकतया परान् हिंसन् दोषभागी न भवति। अतोऽत्र परमारणेऽपि साहसदण्डो न कार्य्य इति कुल्लूकभट्टेन व्याख्यातम्।

यदपि,—

गुरुं वा बाल-वृद्धं वा ब्राह्मणं वा बहुश्रुतम्।
आततायिनमायान्तं हन्यादेवाविचारयन्॥
नाततायिबधे दोषो हन्तुर्भवति कश्चन।

इति मनुवचनम्।

तस्यायमर्थो गुर्व्वादीनामन्यतमं बधोद्यतं पलायनादिनात्मनिस्ताराशक्तौ निर्विचारं हन्यादिति।

नहि वचनस्य दृष्टार्थत्वे सम्भवत्यदृष्टार्थत्वं युक्तम्।

अस्ति च सर्वत्रात्मानं गोपायीतेत्यात्मरक्षणस्य विहित-त्वात् तदेव दृष्टं प्रयोजनं तच्चेदन्यथाऽपि सम्भवति तदा तत्रापि बधोऽदृष्टार्थः स्यादित्येव।

नारायणेन तु मनुवचनमन्यथा व्याख्यातम्।

आततायिनं हननप्रवृत्तं हन्यादेव अङ्गच्छेदादिरूपेण नत्वत्यन्तम्। अन्यच्च गोब्राह्मणादिति गौतमस्मृतेः।

हन्तुर्बधकर्त्तुर्न कश्चन, ब्रह्महत्यादिकृतमपि तादृशं पापं न भवति। तथाहि प्रायश्चित्तमपि तत्राऽल्पमेव स्मृतिनिबन्धकारैर्निबद्धमिति। मिताक्षराकारस्याप्यत्रैव स्वरसः।

मेधातिथि-गोविन्दराजौ तु,—

आचार्य्यञ्च प्रवक्तारं मातरं पितरं गुरुम्।
न हन्याद्ब्राह्मणान् गाश्च सर्वांश्चैव तपस्विनः॥

इत्याहतुः।

अविशेषेण सर्वभूतानां हिंसा निषिद्धा पुनर्वचन-माचार्य्यादीनां मातापित्रादीनामतिनिषेधार्थम्।

यच्च गुरुं वा इत्यादिकमनुवादः, गुर्वादिकमपि हन्यात् किमुतान्यमिति सोऽस्यैव प्रतिप्रसवः।

अथवा,—

[1]दुरुक्तभाषणमेवात्र हिंसा। वाग्भिस्तैस्तैर्जघन्यताम्।

इतिवचनात्।

अथवा प्रतिकूलाचरणे हन्तिप्रयोगो यथा चात्र प्रति-भाति तथा द्वैतविवेके वक्ष्यामः॥

---

१ ध — दिरुक्तभाषणम्।

अङ्गिराः,—

राजा गुरुर्यमश्चैव शासद्धर्मेण[1] युज्यते।
कर्त्ता च मुच्यते पापात् न च पापेन लिप्यते॥

गुरुरुपदेष्टा पापात् पूर्वकृतात् दण्डनिमित्तीभूतात्।

तथाहि,—

[2]स गोघ्नो निष्कृतिं कार्य्यो दाप्यो वा प्रथमं दमम्।

इत्यत्रोक्तदण्डप्रायश्चित्त[3]विकल्पदर्शनात् दण्डेनापि पापं गच्छतीत्याहुरिति।

राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा॥

इत्यत्र मनुवाक्ये कुल्लूकभट्टोऽप्याह दण्डस्यापि प्रायश्चित्तवत् पापक्षये हेतुत्वमिति।

अतएव यमस्यापि धर्मयोगः, तत्कर्त्तव्यनिर्वाहात्।

अतएवाह नारदः,—

गुरुभिर्ये न शास्यन्ते राज्ञा वा गूढकिल्विषाः।
ते नरा यमदण्डेन शास्ता यान्त्यधमां गतिम्॥

पापेन उदीच्येन दण्डभिया पुनरकरणात्।

---

१ ख पुस्तके शासन् धर्मेण।

२ क ख पुस्तकद्वये स गोघ्नवन्निष्कृतिं।

३ घ पुस्तके दण्डप्रायश्चित्तयोः।

# अथ दण्डप्रणयनोपकरणानि ।

तत्र मनुः,—

शुचिना सत्यसन्धेन यथाशास्त्रानुसन्धिना ।
दण्डः प्रणयितुं शक्यः सुसहायेन धीमता ॥

शुचिना अर्थशौचवता अलुब्धेनेति यावत् धीमता— ऊहापोहज्ञानवता ।

व्यवहारविषये बृहस्पतिः,—

नृपाधिकृतसभ्याश्च स्मृतिर्गणक-लेखकौ ।
हेमाग्न्यम्बु स्वपुरुषाः साधनाङ्गानि वै दश ॥

अधिकृतः प्राड्विवाकः, सभ्यो मन्त्रिपुरोहितब्राह्मणादिः, स्मृतिर्मन्वादिप्रणीतं धर्मशास्त्रम्, एतदर्थशास्त्रादेरप्युपलक्षणम्, स्वपुरुषा राज्ञः काष्ठिकादयः ।

तथा,—

एषां मूर्द्धा नृपोऽङ्गानां मुखञ्चाधिकृतः स्मृतः ।
बाहू सभ्याः स्मृतिर्हस्तौ जङ्घे गणक-लेखकौ ॥
हेमाग्न्यम्बु दृशौ हृच्च पादौ स्वपुरुषास्तथा ।

हेमेति हेमाग्नी दृशौ अथ हृदित्यर्थोऽन्वयः ।

तत्र,—

वक्ताऽध्यक्षो नृपः शास्ता सभ्याः कार्य्यपरीक्षकाः ।
स्मृतिर्विनिर्णयं ब्रूते जयदानं दमं तथा ॥
शपथार्थे हिरण्याग्नी अम्बु तृषितमुग्धयोः ।
गणको गणयेदर्थं लिखेन्न्यायञ्च लेखकः ॥

प्रत्यर्थि-सम्यानयनं स्वाक्षिणाञ्च स्वपूरुषः ।
कुर्यादलग्नकं रक्षेदर्थि-प्रत्यर्थिनौ तथा ॥

अथ कात्यायनः,—

एकाहद्व्यहाद्यपेक्षं देशकालाद्यपेक्षया ।
दूताय साधिते कार्य्यें तेन भक्तं[1] प्रदापयेत् ॥

दूताय वादिनमानीतवते तेन वादिना ।

याज्ञवल्क्यः,—

उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्य्यनिर्णये ।

कार्य्यनिर्णय इति आहिताग्न्यादिपाठात् कार्य्यस्य पूर्वनिपातः, तेन निर्णयकार्य्य इत्यर्थः ।

तच्च साधितधनदानं दण्डदानञ्च तस्मिन्, प्रतिभूरिति प्रतिभवति तत्कार्य्यें तद्वच्च भवतीति प्रतिभूः प्रतिनिधिः ।

कात्यायनः,—

अथ चेत् प्रतिभूर्नास्ति कार्य्ययोगस्य वादिनः ।
स रक्षितो दिनस्यान्ते दद्याद्दूताय वेतनम् ॥

अथ मनुः,—

व्यवहारान् दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः ।
प्रणम्य लोकपालेभ्यः कार्य्यदर्शनमारभेत् ॥

पार्थिवः पृथिवीपतिः क्षत्रियादन्योऽपि ।

महाभारते,—

अर्थिनामुपसन्नानां यस्तु नोपैति दर्शनम् ।
सुखे प्रसक्तो नृपतिः स तप्येत नृगो यथा ॥

उपसन्नानां निर्णयार्थमुपगतानाम् ।

---

१ घ — भुक्तम् ।

व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह ।

इत्यत्र मिताक्षराकारः,—

ब्राह्मणैरिति तृतीयादर्शनात्तेषामप्राधान्यं "सह युक्तेऽप्रधाने" इति स्मरणात्। अतश्चादर्शनेऽन्यथादर्शने च राज्ञ एव दोषो न ब्राह्मणानामित्याह ।

अथ कात्यायनः,—

यदा कार्य्यवशाद्राजा न पश्येत् कार्य्यनिर्णयम् ।
तदा तत्र नियुञ्जीत ब्राह्मणं शास्त्रपारगम् ॥

तदभावे त्वाह,—

यत्र विप्रो न विद्वान् स्यात् क्षत्त्रियं तत्र योजयेत् ।
वैश्यं वा धर्मशास्त्रज्ञं न तु शूद्रं कदाचन ॥

मनुः,—

यस्य राष्ट्रे प्रकुरुते शूद्रो धर्मविवेचनम् ।
तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यतः ॥

व्यासः,—

द्विजान् विहाय यः पश्येत् कार्य्याणि वृषलैः सह ।
तस्य प्रक्षुभ्यते राष्ट्रं बलं कोषश्च नश्यति ॥

मनुः,—

समाः शत्रौ च मित्रे च नृपतेः स्युः सभासदः ।

वृहस्पतिः,—

सभ्याधीनः सत्यवादी कर्त्तव्यस्तत् स्वपूरुषः[1] ।

---

१ ख चारपुरुषः ।

कात्यायनः,—

सभ्यानां ये विधेयाः स्युर्युक्तास्ते राजपुरुषाः ।
गणको लेखकश्चैव सर्वांस्तान् विनिवेशयेत् ॥

तान् सभ्यविधेयान् ।

अथ बृहस्पतिः,—

राजा कार्य्याणि सम्पश्येत् प्राड्विवाकोऽथवा द्विजः ।

वादि-प्रतिवादिनौ पृच्छतीति प्राट्, तदुक्तं विविनक्ति विचारयति वा सभ्यैः सह विविच्य वक्तीति वा विवाकः । स चासौ स चेति प्राड्विवाको धर्माधिकरणेऽधिकृतः ।

मनुः,—

सोऽस्य कार्य्याणि संपश्येत् सभ्यैरेव त्रिभिर्वृतः ।

गौतमः,—

सर्वधर्मेभ्यो गरीयः प्राड्विवाके सत्यवचनम् ।

बृहस्पतिः,—

ये त्वरण्यचरास्तेषामरण्ये करणं भवेत् ।
सेनायां सैनिकानान्तु सार्थेषु वणिजां तथा ॥
राज्ञा ये विदिताः सम्यक् कुल-श्रेणि-गणादयः ।
साहसन्यायवर्ज्ज्यानि कुर्य्युः कार्य्याणि ते नृणाम् ॥
कुल-श्रेणी-गणाध्यक्षाः प्रोक्ता निर्णयकारकाः ॥
[1]विचार्य्यं श्रेणीभिः कार्य्यं कुलैर्यन्न विचारितम् ।
गणैश्च श्रेण्यविज्ञातं गणाऽज्ञातं नियुक्तकैः ॥

---

१ ग विचार्य्यं ।

कुलादिभ्योऽधिकाः सभ्यास्तेभ्योऽध्यक्षः स्मृतोऽधिकः।
कुलानि श्रेणयश्चैव गणास्त्वधिकृता नृपः॥
प्रतिष्ठा व्यवहाराणां गुर्व्वेभ्यस्तूत्तरोत्तरम्॥

करणं सभा, साहसन्यायः साहसविषयो न्यायः। कुलं वादिप्रतिवादिनोः स्वकुलं, श्रेणिः शिल्पिवणिगादिसमूहः। एकधर्म्मप्रवृत्ता वणिक्कृषीवलादय इति कल्पतरुः। गणो विप्रसमूहः, धर्म्मार्थकामप्रधानानामनियतवृत्तीनां सङ्घो वा। नियुक्तकोऽच सभ्यः। अध्यक्षः प्राड्विवाकः।

कुलानीत्यादिश्लोके गणाधिकृतयोर्मध्ये सभ्यो द्रष्टव्यः। एषामपि साहसविषये संशये राजैव निर्णयेदिति तात्पर्य्यम्।

वृहस्पति-कात्यायनौ,—

तपस्विनान्तु कार्य्याणि त्रैविद्यैरेव कारयेत्।
माया-योगविदाञ्चैव न स्वयं कोपकारणात्॥

नारदः,—

यच सभ्यजनः सर्व्वः साध्वेतदिति मन्यते।
स निःशल्यो विवादः स्यात् सशल्यः स्यादितोऽन्यथा॥

साध्वेतदिति निर्णयपरं, शल्यमधर्म्मरूपम्॥

---

# अथ सभ्योपदेशः ।

तत्र सभ्यानां कश्चिद्दोषोऽनियुक्त-सामाजिक-साधारणः कश्चिदसाधारण इति मिताक्षराकारः ।

तत्राद्यो यथा मनु-नारदौ,—

सभां वा न प्रवेष्टव्यं वक्तव्यं वा समञ्जसम् ।
अब्रुवन् विब्रुवन् वापि नरो भवति किल्विषी ॥

अत्र च न प्रवेष्टव्यमिति सामान्याभिधाने विशेष-जिज्ञासायां सभामित्युपतिष्ठते एवमपि [1]पदसंस्कार-स्याभियुक्तैरिष्टत्वात् द्विगुरेकवचनमिति ज्ञापकात् यथा-युक्तमर्थं परीक्षितुमित्यादौ यथा वा शक्यं श्वमांसादिभि-रपि तत् प्रतिहन्तुमिति महाभाष्यफक्किकायाम् ।

कुल्लूकभट्टस्तु सभामुद्दिश्येत्यध्याहारमाह ।

मेधातिथिना तु सभा वा न प्रवेष्टव्येति ऋज्वेव पठितम्। मिताक्षराप्येवमेव ।

मनु-नारद-हारीत-बौधायनाः,—

पादोऽधर्म्मस्य कर्त्तारं पादः साक्षिणमृच्छति ।
पादः सभासदः सर्व्वान् पादो राजानमृच्छति ॥

सभासदः अधर्म्मप्रवृत्त्यनिवारकानिति कुल्लूकभट्टः ।

यत्र राजानुमत्या व्यवहारस्य दुर्दृष्टत्वं तत्रैव तद्दोष इति मिताक्षराकारः । पादोऽधर्म्मस्येत्यादौ तत्तुल्यपापान्तरो-

---

१ क पदजन्यसंस्कार— ।

त्यक्तौ तात्पर्य्यमन्यकृतस्य पापस्यान्यत्र संक्रमानुपपत्तेः। एवमेव गोविन्दराजः ।

नारायणसर्व्वज्ञोऽप्येवमाह । पारिजातकृतोऽप्ययमेव स्वरसः। एवमेव प्रदीपदीपिकादयः। अर्थवादमात्रमेतदिति मेधातिथिः ।

कुल्लूकभट्टस्त्वत्र कर्त्तृपापमेव भागशः साक्ष्यादिषु सङ्क्रामति तथैव श्रवणात्, न चात्र प्रतिपक्षानुमानादिविरोधः, तस्योपजीव्येन शास्त्रेण वाधात्। सुकृतदुष्कृतयोः शास्त्रैकप्रमाणकत्वेन प्रकृतेऽन्यत्र सङ्क्रमणयोग्ययोरेव तयोः कल्पनात् भगवता वादरायणेनाप्यस्यार्थस्योपगमादित्याह ।

तच्चिन्त्यं शास्त्रस्यान्यथाप्युपपत्तौ उक्तार्थकल्पनानवकाशात् बहुविरोधात् ।

मनुः,—

राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः ।
एनो गच्छति कर्त्तारं निन्दार्हो यत्र निन्द्यते ॥

नारदः,—

युक्तरूपं ब्रुवन् सभ्यो नाप्नुयाद्द्वेष-किल्विषौ ।
अन्यथास्त्वन्यथा सभ्यस्तदेवोभयमाप्नुयात् ॥

बृहस्पतिः,—

लोभद्वेषादिकं त्यक्त्वा यः कुर्य्यात् कार्य्यनिर्णयम् ।
शास्त्रोदितेन विधिना तस्य यज्ञफलं भवेत् ॥

नारद-यम-कात्यायनाः,—

श्रुतिस्मृतिविरुद्धञ्च भूतानामहितञ्च यत् ।
न तत् प्रवर्त्तयेद्राजा प्रवृत्तञ्च निवर्त्तयेत् ॥

न्यायाऽपेतं यदन्येन राज्ञाऽज्ञानकृतं भवेत् ।
तदप्याम्नायविहिते पुनर्न्याये निवेशयेत् ॥

श्रुतिस्मृतिविरुद्धं प्रमाणविरुद्धं तेन प्रमाणविरोधेन विचारितमपि पुनर्विचारयेदिति प्रथमश्लोकार्थः ।

नृपान्तरेणाज्ञानात् कृतमपि शास्त्रविहितेन मार्गेण पुनर्निरूपयेदिति द्वितीयश्लोकार्थः ।

कात्यायनः,—

अधर्म्माज्ञां यदा राजा प्रयुञ्जीत विवादिनाम् ।
विज्ञाप्य नृपतिं सभ्यस्तदा सम्यक् निवर्त्तयेत् ॥
सभ्येनावश्यवक्तव्यं धर्म्मार्थसहितं वचः ।
शृणोति यदि नो राजा स्यात्तु सभ्यस्ततोऽनृणः ॥
न्यायमार्गादपेतं तु ज्ञात्वा चित्तं महीभुजः ।
वक्तव्यं तत्प्रियं तच्च न सभ्यः किल्बिषी ततः ॥

अधर्म्माज्ञामधर्म्मानुवर्त्तिनी[1]माज्ञां, अनृणः अनपराधः ।

तथा, तत्रैव—

अधर्म्मतः प्रवृत्तन्तु नोपेक्षेरन् सभासदः ।
उपेक्षमाणाः सनृपा नरकं यान्त्यधोमुखाः ॥

सोऽयमसाधारणसभ्यदोषः, तदेवमनियुक्तानां सभासदामनभिधानेऽयथाभिधाने च पापम्, नियुक्तानान्तु सभ्यानामधर्म्मप्रवृत्तस्य राज्ञोऽनिवर्त्तनेऽपि नरकम्। प्रयत्नादप्यनिवर्त्तमाने तस्मिन्नप्रियोक्तावपि न दोष इति स्थितम्।

---

१ ग — न धर्म्मार्थवर्त्तिनीम् ।

# अथ दण्ड-भेदाः ।

तत्र वृहस्पतिः,—

वाग् धिक् धनं बधश्चैव चतुर्द्धा कथितो दमः ।
पुरुषं विभवं दोषं ज्ञात्वा तं परिकल्पयेत् ॥

तत्र वाग्दण्डो न त्वयेदं सम्यक् कृतमित्यादि निन्दा । ताड़यैनमिति वाञ्चाचमिति नारायणः । धिग्दण्डो धिक् त्वां पापीयांसमकार्य्यकारिणमित्यादिभर्त्सनम् । धनं द्विविधं व्यवस्थितमव्यवस्थितञ्च । तत्र व्यवस्थितं नियत-संख्यं साहसरूपं, तत् त्रिविधं प्रथमं मध्यममुत्तममिति ।

यत्रापराधानुबन्धादिना संख्याधिक्यं कल्प्यते तदव्यव-स्थितं तत्सामान्यतो द्विविधं पणादिरूपं माषादिरूपञ्च सर्व्वमिदमनुपदं वक्ष्यते ।

बधस्त्रिविधः, पीड़नमङ्गच्छेदः प्रमापणञ्च । तेषु पीड़नं चतुर्विधम्; ताड़नमवरोधनं बन्धनं विड़म्बनञ्च । तत्र ताड़नं कशाद्यभिघातः, अवरोधनं कारावासादिना कर्म्मनिरोधः, बन्धनं निगड़ादिभिरस्वातन्त्र्योत्पादनम्, विड़म्बनमनेकप्रकारं यथा— मुण्डनं गर्द्दभारोहणं चौर्य्यादिचिह्नाचरणं डिण्डिमादिना तत्तदपराधख्यापनं पुरनगरभ्रामणमित्यादि ।

अङ्गच्छेदश्च छेद्याङ्गभेदाच्चतुर्दशविध इति वृहस्पतिः ।

तान्याह,—

हस्ताङ्घ्रि-लिङ्ग-नयनं जिह्वा-कर्णौ च नासिका।
जिह्वा-पादार्द्धसंदंश-ललाटौष्ठगुदं कटिः॥

अर्द्धपदं जिह्वायामप्यन्वेति द्वन्द्वोत्तरश्रुतत्वात्, अन्यथा जिह्वेति पुनरभिधानानर्थक्यात्। सन्दंशस्तर्ज्जन्यङ्गुष्ठौ मिलितौ, अत्र पादार्द्धस्यापि दर्शनात्।

उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम्।
चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च॥

इति मनुवचने हस्तादौ द्वित्वमविवक्षितं पक्षप्राप्तानुवादो वा, एवञ्चास्य दशविधत्वाभिधानमपि न्यूनसंख्याव्यवच्छेदपरम्।

देहग्रहणञ्चात्र प्रमापणपरं यदाह। कुल्लूकभट्टः,—

देहदण्डो मारणमिति।

प्रमापणं द्विविधं शुद्धं मिश्रञ्च। तयोः शुद्धं द्विविधमविचित्रं विचित्रञ्च, तत्राविचित्रं खड्गपातादिकृतं, विचित्रं शूलारोपणादि-विचित्रोपायप्रयुक्तं; मिश्रमङ्गच्छेदादिपूर्व्वकं मिश्रणं च दण्डान्तराणामपि यथायथमूहनीयम्।

---

# अथ धनदण्ड-संख्या ।

अत्र शङ्खलिखितौ,—

चतुर्विंशतिरेकनवतिश्चेति प्रथम-साहसः । द्विशतः पञ्चशतश्चेति मध्यमः, षट्शतः साहस्रश्चेति उत्तमः । यथासारापकारं सर्व्वेषामानुपूर्व्वेण ।

चतुर्विंशत्यादिरेकनवतिपर्य्यन्तः प्रथम-साहसाख्यो दण्डः एवं द्विशतादावपि । यथासारापकारमिति सारो धनं दण्डस्य अपकारोऽपराधस्तस्यैव तदनुसारेण तयो-र्लाघवगौरवाभ्यां प्रथमादिसाहसविकल्प इत्यर्थः ।

एवञ्च नारद-याज्ञवल्क्यादिवचने प्रथमादिसाहसेषु न्यूनाधिकसंख्याविसम्बादो व्याख्यातः । तस्य दण्ड्यगत-वित्तापराधलाघवगौरववैचित्र्येण सामञ्जस्यात् । तदुक्ते दण्डे तदुक्तद्रव्यसंख्या ग्राह्येति व्यवस्थोपगमाद्वा ।

तत्र नारदः,—

चत्वारिंशाऽवरः पूर्व्वः परः षण्णवतिर्भवेत् ।
शतानि पञ्च [1]तु परो मध्यमो द्विशताऽवरः ॥
[2]साहस्रस्तूत्तमो ज्ञेयः स तु पञ्चशताऽवरः ।

चतुर्विंशावर इति क्वचित् पाठः ।

---

१ क पुस्तके पञ्च त्वपरः ।
२ घ साहस्रस्तूत्तमः स्मृतः ।

अथ मनु-विष्णू,—

पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः।
मध्यमः पञ्च विज्ञेयः सहस्रन्त्वेव चोत्तमः॥

याज्ञवल्क्यः,—

साशीतिपणसाहस्रो दण्ड उत्तमसाहसः।
तदर्द्धं मध्यमः प्रोक्तस्तदर्द्धमधमः स्मृतः॥

यत्तु,—

कार्षापणसहस्रन्तु दण्ड उत्तमसाहसः।

इत्यादि बृहस्पतिवचनं, तत्र कार्षापणः पण एव द्वयोः पर्य्यायत्वात्। अत्र [1]चतुर्विंशतिरित्यादौ सर्व्वत्र संख्येयाकाङ्क्षायां पणो द्रष्टव्यः, पणानामिति विष्णुवचनात्।

कल्पतरुकारादयश्च मनुवचनानुसारेणैव तत्र तत्र साहसान् वक्ष्यन्ति।

अथात्र मानसंज्ञायां मनुः,—

लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि।
ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः॥
सर्षपाः षट् यवो मध्यस्त्रियवं त्वेव[2] कृष्णलम्।

लोकव्यवहारार्थं प्रवक्ष्यामीत्यर्थः। मध्यो नातिस्थूलो नातिकृश इत्यर्थः।

त्रियवन्त्वेवेति,—

गुञ्जा तु स्यात् त्रिभिर्यवैः।

इत्यगस्तिप्रोक्तदर्शनात् कृष्णलव्यवहाराणां गुञ्जानां

---

१ क चतुर्विंशत्यादौ।
२ ग घ ङ त्वेककृष्णालं।

गुरुत्वमनियतमतो यथोक्तमेव कृष्णलं ग्राह्यम् । क्वचि-द्वेकेतिपाठः । सेयं कृष्णलसंज्ञा सुवर्णरजतसाधारणी ।

अगस्तिप्रोक्ते,—

अष्टभिर्भवति व्यक्तैस्तण्डुलो गौरसर्षपैः ।
स वैणवो यवः प्रोक्तो गोधूमं चापरे जगुः ॥

मनुः,—

पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश ।
पलं सुवर्णाश्चत्वारः पलानि धरणं दश ॥

दशपलानि धरणमित्यन्वयः ।

चतुर्थाध्याये माषाधिकारे विष्णुः,—

तद्द्वादशकमक्षकमेव सचतुर्माषकं सुवर्णः ।

सचतुर्माषकं माषचतुष्टयसहितं षोड़शमाषात्मक-मित्यर्थः ।

अभिधानकोषे तु,—

. . . . . . गुञ्जाः पञ्चाद्यमाषकः ।
ते षोड़शाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम् ॥

इत्युक्तम् ।

अन्ये त्वाहुः,—

स्वक्षेत्रे यथावन्मध्यपाककाले निष्पन्ना धान्यमाषा दश सुवर्णमाषः, पञ्च वा गुञ्जाः सुवर्णमाषाश्च षोडश सुवर्णः, स एव कर्षः चतुःकर्षः[1] पलं पलानां शतेन तुला, विंशत्या तुलाभिर्भारः ।

---

१ ख ङ पुस्तकद्वये तच्चतुष्कं पलं ।

बालभूषणे चण्डेश्वरः,—

कर्षः पलपादः स्यात् कर्षार्द्धं तोलकः सोऽपि।
उक्तो वसुभिर्माषैर्लोके माषोऽपि गुञ्जाकैर्दशभिः॥

पलमत्र वैद्यकप्रसिद्धमष्टतोलकमिति।

याज्ञवल्क्यः,—

पलं सुवर्णाश्चत्वारः पञ्च वा परिकीर्त्तितम्।

मनुः,—

द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषकः।
ते षोड़श स्याद्धरणं पुराणश्चैव राजतम्॥
धरणानि दश ज्ञेयः शतमानस्तु राजतः।
चतुःसुवर्णिको निष्को विज्ञेयस्तु प्रमाणतः॥

ते षोड़शमाषका राजतं धरणं राजतञ्च पुराण इत्यर्थः।

याज्ञवल्क्यः,—

द्वे कृष्णले रूप्यमाषो धरणं षोड़शैव ते।
शतमानन्तु दशभिर्धरणैः पलमेव च॥
निष्कं सुवर्णाश्चत्वारः .......।

दशभिर्धरणैः शतमानं तदेव पलमित्युच्यते। निष्कमिते रजतप्रकरणे [1]स्वर्णशब्दोपादानं हेमप्रकरणोक्तमानप्राप्त्यर्थं तेन हेमप्रमाणभूतचतुःसुवर्णमानोन्मितं रजतं निष्कमिति महार्णवाभिधाने निबन्धे व्याख्यातम्। एवञ्च चतुःसुवर्णिको निष्क इति मनुवचनमप्येवमेवोन्नेयम्।

---

१ ग सुवर्ण —।

रजतप्रकरणाम्नानाऽविशेषात् । अतएवोक्तं प्रमाणत इति ।

रजताधिकारे विष्णुगुप्तः,—

अष्टाशीतिगौरसर्षपा रूप्यमाषकस्ते षोड़श धरणं निष्को वा विंशतिर्वा रूप्यपलं तद्दश धरणकम् ।

स्मृतिः,—

पञ्चसौवर्णिको निष्क इति ।

तथा,[1]—

साष्टं शतं सुवर्णानां निष्कमाहुर्मनीषिणः ।

अभिधानकोषे तु,—

निष्कमस्त्री साष्टहेमशते दीनारकर्षयोः ।

रक्षोऽलङ्करणे हेमपलेऽपि चेत्युक्तम् ।

मनुः,—

कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः ।

कार्षापणः पण इति द्वे संज्ञे ताम्रकर्षस्येत्यर्थः, इति रत्नाकरः ।

अभिधानकोषे तु,—

कार्षापणः कार्षिकः स्यात् कार्षिके ताम्रिके पणः ।

इत्युक्तम् ।

तन्मते सर्व्व एव कार्षिको मुद्राविशेषः कार्षापणः समाख्यासम्वादात् । स एव ताम्रिकः पण इत्युच्यते, इति गम्यते ।

---

१ ग पुस्तके यथा ।

तथा,—

पणोद्मानगण्डानां[1] तुर्य्यांशेऽपि च काकिनी।

इति रभसपालः।

पणगण्डकयोस्तुर्य्य उद्माने च काकिनी।

इति रुद्रः।

बृहस्पतिः,—

ताम्रकर्षकृता मुद्रा विज्ञेयः कार्षिकः पणः।

स एव चान्द्रिकाः[2] प्रोक्तास्ताश्चतस्रस्तु धानिकाः॥

ता द्वादश सुवर्णस्तु दीनाराख्यः स एव तु।

विष्णुगुप्तः,—

सुवर्णसप्ततितमो भागो रोपक उच्यते।

दीनारो रोपकैरष्टाविंशत्या परिकीर्त्तितः॥

चतुर्वर्गचिन्तामणौ कात्यायनः,—

माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य तु।

काकिनी तु चतुर्भागो माषस्य च पणस्य च॥

नारदः,—

माषो विंशतिभागस्तु पणस्य परिकीर्त्तितः।

पणस्तु षोड़शो भागो ज्ञेयः कार्षापणस्य तु॥

काकिनी तु चतुर्भागो माषस्य च पणस्य च॥

पञ्चनद्याः प्रदेशेषु संज्ञेयं व्यवहारिकी।

कार्षापणप्रमाणन्तु तन्निबद्धमिहैव तु॥

---

१ क पुस्तके — गुञ्जानां। २ क पुस्तके चतुकाः।

कार्षापणास्त्रिका ज्ञेयास्ताश्चतस्रस्तु धानिकाः[1]।
ते द्वादश सुवर्णन्तु दीनारो धानिकः स्मृतः॥

अत्र रत्नाकरे वृद्धिप्रकरणीयः क्वचित् पलस्येति[2] पाठो लिपिप्रमादः। कामधेनु-कल्पतरु-कृत्यसार-मिताक्षरा-स्मृतिसारेषु मानप्रकरणे मूर्द्धन्यपाठदर्शनात् पण-कार्षापणादिप्रकरणे सुवर्णमाषस्य पलस्य[3] लक्षणायोगाच्च। पञ्चनद्या इति शास्त्रीयव्यवहारात् कार्षापणप्रमाणं तदेव निबद्धं यत् पञ्चनदीप्रदेशप्रसिद्धम्। इतरत्तु तत्र तत्रैव व्यवहारिकम्।

यथा नारदः,—

कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्त्तते।
पणैर्निबद्धः पूर्व्वस्यां षोड़शैव पणाः स तु॥

एवञ्च सौवर्णिको माषः पञ्चरत्तिकः। राजतो द्विरत्तिकस्तथा पुराणस्य विंशतिभागो माषः। कात्यायनदर्शनात्।

तथा,—

पणस्य विंशतितमो भागो माषः। नारदवचनात् तथा,—कार्षापणस्य चतुर्थो भागो माषः माषावरार्द्ध इत्यादिवक्ष्यमाणनारदवचनस्वरसाच्च।

तथा,—कार्षापणपादः[4] चतुःकाकिनीको माषः, वक्ष्यमाणनारदवचनात्। राजतश्चापरो माषो विष्णुगुप्तदर्शनात् कृष्णलस्य साधारण्यं युक्तमेव।

---

१ ग पुस्तके धानकः। २ क क्वाचित्कः पनस्येति।
३ ग पनस्य। ४ क पुस्तके—पदः।

एवञ्च माषादिशब्दानां नानार्थतया दण्डविधा[1]वन-ध्यवसाये व्यवस्थामाह ।

कात्यायनः,—

माषः पादो द्विपादो वा दण्डो यत्र प्रकल्पितः ।
अनिर्द्दिष्टन्तु सौवर्णं माषं[2] तत्र प्रकल्पयेत् ॥
यत्रोक्तो माषको दण्डो राजतं तत्र निर्द्दिशेत् ।
कृष्णलञ्चोक्तमेव स्यादुक्तं दण्डविनिर्णये ॥

यत्र माषको दण्ड इत्युक्तं तत्र राजतो माषको ग्राह्यः । यत्र माषो दण्ड इत्युक्तं तत्र सौवर्ण एव ग्राह्य इत्यर्थः । एतच्च विशेषविधेरन्यत्र द्रष्टव्यम् ।

स यथा प्रकीर्णके मनुः,—

हैरण्यं चैव माषकमिति ।

अतएव शस्यघातकदण्डे माषश्रुतावपि राजत एव माषो ग्राह्यो वचनात् ।

तथाहि रत्नाकरे भाष्यकारः,—

सौवर्णैर्माषकैः संख्या दण्डकर्म्मसु कथ्यते ।
पशूनां शस्यचरणे माषैरन्यैस्तु राजतैः ॥

मिताक्षरायान्तु,—

माषानष्टौ तु महिषी शस्यघातस्य कारिणी ।

इत्यत्र माषश्चात्र ताम्रिकपणस्य विंशतितमो भागः । माषो विंशतिभागस्तु पणस्येति नारदवचनादित्युक्तम् ।

इह सौवर्णं निष्कं दद्यादिति विशेषविधौ हेमप्रमाण-भूतस्वर्णचतुष्टयमितं सुवर्णं निष्कशब्दवाच्यमन्यत्र तु तावन्मितं रजतमेवेति महार्णवकृता व्यवस्था दर्शिता ।

१ ग पुस्तके दण्डविधानानध्यवसाये । २ घ माषिकं ।

सा चेहापि ग्राह्या अविरोधात् "मांसभेदी[1] तु षण्णिष्कान्" इति पारुष्यप्रकरणे मनूक्तदण्डसम्वादाच्च । सौवर्णस्य च निष्कस्य तत्रानुरूपत्वेनावाच्यत्वात् ।

यत्तु मांसभेदे तु मध्यम इत्यनुरूपो दण्डो बृहस्पतिनोक्तः, सोऽपि राजतेनैव निष्केण सम्वदति तस्य तावन्मूल्यकत्वात् ।

इह माषादौ वचनादेव व्यवस्था अन्यत्र तु स्मृतिशास्त्राऽभिधानशास्त्रयोर्विरोधे स्मृतिशास्त्रोक्तं ग्राह्यमन्तरङ्गत्वात् । तत्रापि यदुक्ता या संज्ञा तदुक्तदण्डादौ सैव ग्राह्या अन्तरङ्गतमत्वात् । अन्यत्राभिधानशास्त्रोक्तमेव ग्राह्यम् । पदार्थानिश्चयादनध्यवसाये तस्यैव निर्णायकत्वात् अभियुक्तस्मृतित्वात् । तस्याभिधानकोषान्तरविरोधेऽपराधगौरवादिना दण्डगौरवाद्यनुसारिणी व्यवस्था याज्ञवल्क्योक्तपलव्यवस्थावदिति प्रतिभाति ।

अथ कात्यायनः,—

कल्पितो यस्य यो दण्डस्त्वपराधस्य तत्त्वतः ।
[2]पणानां ग्रहणं तत् स्यात् तन्मूल्यं वाऽथ राजनि ॥

यस्यापराधस्य दण्डो दश पञ्चाशदित्यादिसंख्याविशेषो वा कथितस्तत्र संख्योक्ताकाङ्क्षायां पणो ग्राह्यः स च ताम्रकर्षमयी मुद्रा तदलाभे तन्मूल्यं ग्राह्यमित्यर्थः ।

यत्रापराधस्येत्यादि तृतीयमर्द्धं रत्नाकरे पठितं तच्चिन्त्यं तदर्थविसम्वादात् तस्योत्तरार्द्धेन चैकवाक्यतया वक्ष्यमाणत्वात् । धान्यादिमानन्तु धान्यापहारिदण्डे वक्ष्यते ।

---

१ ग पुस्तके मांसभेत्ता तु षण्णिष्कं ।　　२ ग पलानां ।

## अथ व्यवहारिकी नैगमादिसंज्ञा।

तत्र कात्यायनः,—

नानापौरसमूहस्तु नैगमः परिकीर्त्तितः।
नानायुधभृतो व्राताः समेताः परिकीर्त्तिताः॥
समूहो वणिगादीनां पूगः संपरिकीर्त्तितः।
प्रव्रज्यावसिता ये तु पाषण्डास्तु उदाहृताः॥
ब्राह्मणानां समूहस्तु गणः संपरिकीर्त्तितः।
शिल्पोपजीविनो ये ते शिल्पिनः[1] परिकीर्त्तिताः॥
अर्हतां सौगतादीनां समूहः सङ्घ उच्यते।
चाण्डालश्वपचादीनां समूहो गुल्म उच्यते॥
गण-पाषण्ड-पूगाश्च व्राताश्च श्रेणयस्तथा।
समूहस्थाश्च ये चान्ये वर्गाख्यास्ते बृहस्पतिः॥

नानायुधेति व्राताः प्रकीर्त्तिता इत्यन्वयः, गुल्म इति अत्र गुल्मः पदातिसमूह इति राजधर्म्मे लक्ष्मीधरः। तद्योगतामादायेति न विरोधः। अत्र श्रेणयो वणिक्समूह इति रत्नाकरः।

तथा,—

चतुर्वर्णस्य या स्मृतिरसजातिसमुद्भवा।
तस्या धर्म्मः समुद्दिष्टः साऽजातिः परिकीर्त्तिता॥

असजातिरसवर्णः।

---

१ क पुस्तके श्रेणयः।

# अथ दण्डनिमित्तानि।

तत्र नारदः,—

मनुष्यमारणं स्तेयं परदाराभिमर्षणम्।
द्वे पारुष्ये प्रकीर्णञ्च दण्डस्थानानि षड् विदुः॥

इति संग्रहः।

ननु विवादस्य लोभमोहादिमूलकत्वेन सर्व्वत्र सम्भवाद्वादिनोरेकतरस्य मिथ्याभियोगापह्नवयोरन्यतरनियमात्तन्निमित्तको दण्डोऽन्यत्राप्यस्ति चेत्, सत्यम्।

किन्तु चरैरावेदितानां राज्ञा स्वपुरुषैर्ग्राहितानां शिरोवादिनं विनाऽपि विचार्य्यमाणानामपराधिनां येषु दण्डस्तेषामिहोद्देशः। ते च मनुष्यमारणादय एव न ऋणादानादयः।

अतएवोक्तम्,—

साहसन्यायवर्ज्ज्यानि कुर्य्युः कार्य्याणि ते नृणाम्।
प्रकीर्णकः पुनर्ज्ञेयो व्यवहारो नृपाश्रयः॥

इति

अपि च ऋणादानादयो मनुष्यमारणादिवन्न स्वरूपेणापराधोऽपि त्वपह्नवादिकमपेक्ष्येति तेभ्यो भेदः।

किञ्च मनुष्यमारणादिकर्त्तॄणां दण्डार्थमाकारणं तदनुगुणतया त्वपराधविचारः। ऋणादानादिवादिनान्तु ग्रहणादितत्त्वनिर्णयार्थमाह्वानं तद्विचारप्रसङ्गेणापलापादिनिर्णयात् तत्कर्त्तुर्दण्ड इति।

किञ्चामी दुष्टबुद्धिपूर्व्वकत्वनियमादुत्सर्गतो भ्रमादि-मूलकेभ्योऽन्येभ्यो विशिष्यन्ते इति लोकोद्वेजकत्वादेष्वेव प्राधान्येन दण्डपदप्रयोगः।

अतएव मनुना,—

यस्य स्तेनः पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक्।
न साहसिक-दण्डघ्नौ स राजा शक्रलोकभाक्॥

इत्यत्र ऋणादानादिवादिनो न पठिता इति स्वस्थ-मेतत्।

अथ मनुष्यमारणेन गवादिमारणमप्युपलक्ष्यते। पर-दारेत्यस्य स्वदारान्यस्त्रीमात्रे तात्पर्य्यं कन्याभिगमनेऽपि दण्डाभिधानात्। मानुषीत्वञ्चात्रातन्त्रं गवादिगमनेऽपि दण्डोपदेशात्। पारुष्यं कलहः, तस्य वाग्दण्डरूपकरण-द्वैविध्यात् वाक्पारुष्यं दण्डपारुष्यमिति द्वैविध्यम्। पञ्च-विधञ्चैतत्।

यदाह वाग्दण्डपारुष्याधिकारे नारदः,—

विधिः पञ्चविधस्तूक्त एतयोरुभयोरपि।

तत्र वाक्पारुष्यप्रकारा निष्ठुरत्वादयस्त्रयो वक्ष्यन्ते। दण्डपारुष्यं द्विविधमभिद्रोहाभिघातरूपत्वात्।

यदाह स एव,—

परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः।
भस्मादिभिश्चाभिघातो दण्डपारुष्यमुच्यते॥

तत्राभिद्रोहो हिंसा, अभिघातस्ताड़नम्।

अत्र मिताक्षरायान्तु भस्मादिभिश्चोपघात इति पठितं व्याख्यातञ्च. उपघातः संस्पर्शनरूपं मनोदुःखोत्पादन-

मिति । तथा दण्ड्यतेऽनेनेति दण्डो देहस्तेन पारुष्यं विरूक्षीकरणं दण्डपारुष्यमिति । तदिदं रत्नाकरादिना पञ्चविधमुक्तम् ।

मिताक्षराकारस्त्वाह,—

द्वयोर्यः क्षमते तस्य दण्डाभावः पूज्यता च । तथा पूर्व्वं कलहप्रवृत्तस्य दण्डो गुरुरुत्तरकलहे बहुवैरानुसन्धातुरेव दण्डभाक्त्वम् । तथा द्वयोरपराधविशेषापरिज्ञाने[1] दण्डः समः । तथा श्वपचादिभिरार्य्याणामपराधे[2] कृते तैरेव तेषां दण्डनं तस्यासामर्थ्ये राज्ञा ।

तथा—राजा तान् घातयेदेव नार्थं तेभ्यो गृह्णीयात् । इति पञ्चप्रकारा विधयः[3] ।

युक्तञ्चैतदेषां वाग्दण्डपारुष्यसाधारण्यात्, मतान्तरे तु एतयोरुभयोरपि व्यर्थं स्यात् एतच्च स्पष्टमाचष्टे नारद एव ।

यतः समनन्तरमेव तद्विधिप्रतिपादकान् श्लोकानाह । अपारुष्ये सति सम्भवादिति-पूर्व्वमाक्षारयेद्य इति-द्वयोरापन्नयोस्तुल्य इति-पारुष्यदोषाच्च तयोरिति-श्वपाक-षण्ड-चाण्डालेति-मर्य्यादातिक्रम इति-यमेव ह्यीति-मला-ह्येत इति । तानेतानष्टश्लोकानुपरि व्याख्यास्यामः ।

अतएव कामधेनौ कल्पतरौ च वाग्दण्डपारुष्ये याव-न्नेदं प्रत्येकं लिखित्वा— अथ वाग्दण्डपारुष्ये नारद

---

१ ख —ज्ञानेन । २ ग घ पुस्तकद्वये अपचारे ।

३ ख पुस्तके पञ्चविधप्रकाराः ।

इत्युपक्रम्य विधिरित्यादिविभागश्लोकं पठित्वा पारुष्ये सतीत्यादिरेवाष्टश्लोकीससम्वादं पठिता । न तु परगात्रेष्वित्यादि न वा साक्षेपं निष्ठुरमित्यादि ।

प्रकीर्णकमाह नारदः,—

न दृष्टं यच्च पूर्व्वेषु सर्व्वं तत् स्यात् प्रकीर्णकम् ।

तदेतदनन्तप्रकारं विहितनिषिद्धकर्म्मविशेषाणामानन्त्येन तदनाचरणाचरणयोरानन्त्याच्च ।

---

# अथ दण्डनिमित्तेषु दण्डभेदव्यवस्था ।

तत्र,—

जातिर्द्रव्यं परिमाणं विनियोगः परिग्रहः ।
वयः शक्तिर्गुणो देशः कालो दोषश्च हेतवः ॥

इति व्यवस्थौपयिकवर्गसंग्रहः ।

अत्र परिग्रहो नृपदेवद्विजादेः । वयो धृतस्य पुरुषादेर्व्याल्यादिः । शक्तिरपराधिनो वित्तसम्पत्त्यादिः । गुणोऽपि तस्यैव न्यूनाधिकदण्डप्रयोजकः । देशो ग्रामारण्यादिः । कालो दिवारात्र्यादिः । दोषोऽपराधविशेषः ।

स द्विविधः, अनुबन्धोऽननुबन्धश्च तत्रानुबन्धो नाम पुनः पुनरिच्छया मन्दक्रियाकरणं चकारात् प्रत्यासत्त्यादिसंग्रहः। त इमे सामान्यतो दण्डस्य लघुगुरुभावहेतवो भवन्ति ।

तथाहि—जातितो विशेषो दृश्यते ।

यदाह विष्णुः,—

अष्टापाद्यं स्तेयकिल्विषं शूद्रस्य द्विगुणोत्तराणीतरेषां प्रतिवर्णं विदुषोऽतिक्रमे दण्डभूयस्त्वम् ।

अष्टभिरापाद्यते गुण्यते इत्यष्टापाद्यमष्टगुणमित्यर्थः । किल्विषमिह दण्डस्तेन विदुषोऽतिक्रमे दण्डभूयस्त्वमित्युपसंहारे हेतुवन्निगदस्वरसाद्यस्मिन्नपहारे यो दण्ड उक्तः स विद्वच्छूद्रकर्त्तृके तस्मिन्नष्टगुण आपादनीयः । प्रतिवर्णं द्विगुणोत्तराणि उत्तरोत्तरं द्विगुणानि किल्विषाणीत्यर्थोऽन्वयः ।

अत्रैव मनुः,—

अष्टापाद्यन्तु शूद्रस्य स्तेये भवति किल्बिषम्।
षोड़शैव तु वैश्यस्य द्वाविंशत्क्षत्रियस्य तु॥
ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतं भवेत्।
द्विगुणा वा चतुःषष्टिस्तद्दोषगुणवेदिनः॥

[1]अत्र ज्ञानतारतम्याच्चतुःषष्ट्यादिदण्डविकल्पः।

यत्तु ब्राह्मणस्य पक्षत्रयी[2] निर्गुणगुणवदतिगुणापेक्षया व्यवस्थितमिति सर्व्वज्ञेन व्याख्यातं[3] तत्रापि गुणो ज्ञानमेव अन्यथोपसंहारविरोधात्।

यद्यपि ब्राह्मणादेः शूद्राद्यपेक्षया दण्डापकर्ष उचितो दृष्टश्च। तथापि निन्दितं जानतस्तत्करणमपराधगौरवमापादयति ज्ञानञ्च हीनस्य कदाचिदवलुप्यतेऽपि न तूत्तमस्येति तस्य तारतम्ये जातिरुपयुज्यते।

एतच्च तद्दोषगुणविदुष[4] इति रत्नाकरे पठित्वा स्पष्टीकृतं तदेतदुदाहरणमाकरे दृष्ट्वा लिखितं स्पष्टन्तूदाहरणान्तरम्।

यथा कात्यायनः,—

येन दोषेण शूद्रस्य दण्डो भवति धर्म्मतः।
तेन विट्क्षत्रविप्राणां द्विगुणो[5] द्विगुणो भवेत्॥

एवं द्रव्यतो यथा नारदः,—

सर्व्वेषामल्पमूल्यानां मूल्यात् पञ्चगुणो दमः।

---

१ ग अथ। २ ख ग पक्षत्रयम्।
३ ख ग व्यवस्थितम्। ४ क— विद्भिरिति।
५ ग पुस्तके दण्डानाम्।

परिमाणतो यथा मनुः,—

धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिको दमः[1] ।

तथा नारदः,—

रत्नानाञ्चैव सर्व्वेषां शतादभ्यधिको वधः ।

विनियोगतो यथा कात्यायनः,—

वनस्पतीनां सर्व्वेषां विनियोगो यथा यथा ।
तथा तथा दमः कार्य्यो हिंसायामिति धारणा ॥

एवमन्यदपि वक्ष्यमाणदण्डदर्शनादूह्यम्। सेयं व्यवस्था अनेकविधा ।

तत्र,—

वाधाऽपकर्षसाम्यानामुत्कर्षपरिनिष्ठयोः ।
भेदेन दण्डभेदानां व्यवस्था पञ्चलक्षणा ॥

इति संग्रहः ।

तत्र वाधस्य साधारणो यथा आपस्तम्बः,—

आचार्य्य ऋत्विक् स्नातको राजेति त्राणं स्युरन्यत्र वध्यात् ।

राजा अवान्तरनरपतीनामिति प्रतिभाति आचार्य्यादयो दण्ड्यानां त्राणं स्युर्वध्यवर्ज्जमित्यर्थः ।

अत्र कल्पतरौ त्राणं स्युस्त्रातारो भवेयुर्न कथञ्चित् दौःशील्येन तिष्ठेयुरिति व्याख्यातम् ।

मनुः,—

क्षन्तव्यं प्रभुणा नित्यं क्षिपतां कार्य्यिणां नृणाम् ।
बालवृद्धातुराणाञ्च कुर्व्वतां हितमात्मनः ॥

---

१ क पुस्तके ह्यधिकं वधः, ग पुस्तके अभ्यधिके वधः ।

कार्य्यिणामर्थिप्रत्यर्थिनां दुःखेनाक्षेपोक्तिं रचयतां बालादीनां चाकार्य्यिणामपि क्षिपतां[१] राज्ञा क्षन्तव्यं न तु ते दण्ड्या इत्यर्थः ।

कार्य्यिणामित्यनेन धिगमुं[२] राजानमलसमकृतज्ञं वा योऽस्माननपराधान् परेण पीड्यमानानुपेक्षत इत्यादि निन्दायां तात्पर्य्यं गम्यते । कुर्व्वतामित्यादिकमप्येतत्पर-मेव । एवं हि दुःखितानामेवैषामाक्रोशं निशम्यावश्यं राजा तत्कृते प्रवर्त्तते तथाचाऽतथाविधे तदाक्रोशे तेषामपि दोष इति प्रतिभाति ।

दण्डपारुष्ये याज्ञवल्क्यः,—

मोहमदादिभिरदण्डनम् ।

मोहश्चित्तवैकल्यं, मदो मद्यादिजनिता विकृतावस्था आदिपदादुन्मादादिसंग्रहः ।

असाधारणान्तु[३] कात्यायनः,—

सचिह्नमपि पापं तु पृच्छेत् पापस्य कारणम् ।
तदा दण्डं प्रकल्पेत दोषमारोप्य यत्नतः ॥
प्राणात्यये तु यत्र स्यादकार्य्यकरणं कृतम् ।
दण्डस्तत्र तु नैव स्याद्देष धर्म्मः स्मृतो भृगुः ॥

कल्पेतेति अन्तर्भावितणिजर्थम् । दोषं चौर्य्यादि आरोप्य सर्व्वरूपेणारोपयित्वा स्थिरीकृत्य निर्णीयेति यावत् । प्राणात्यये पापकरणं विना सम्भाव्यमाने इति शेषः । तेन चिह्नादविनाभूताल्लोप्त्रादिरूपात् प्रमाणान्तराद्वा

---

१ ग पुस्तके व्याच्छिपताम् ।

२ क ख पुस्तकद्वये धिगस्तु ।

३ क असाधारणान्तमाह । ख पुस्तके असाधारणे तु कात्यायनः ।

चौर्य्यादौ निश्चितेऽपि तत् कारणं यदि यथोक्तः प्राणात्यय[१]-हेतुरवधार्य्यते तदा तस्य न दोषः, "आत्मानं गोपायीत" इति विधिदर्शनात् नित्यस्यास्य विधेरतिक्रमायोगात् ।

एतद्वचनस्वरसादेव पापस्यानुत्पत्तेः । उत्पत्तौ वा प्रायश्चित्तेनापनोदसम्भवात्, अतो न तन्मूलको दण्डः । तच्च हि तदभाव एव धर्म्म इति स्मृतः, भृगुराहेति समुदायार्थः । यच्च चौर्य्याधिकारे ब्राह्मणमुपक्रम्य गौतमवचनमवृत्तौ प्रायश्चित्ती[२] स इति तदप्येतत्समानविषयम् ।

तथाहि तदयमर्थः—अन्येन प्रकारेण जीवनानुपपत्तौ ब्राह्मणो न दण्ड्यः किन्तु प्रायश्चित्तं कार्य्यमिति ।

एवञ्चाततायिवधेनैकमूलकमेवेदम् । एतन्मूलकमेव वचनं पारदारिकेऽधिकरणे वात्स्यायनीयाः पठन्ति ।

आयुर्यशोरिपुरधर्म्मसुहृत् स चायम् ।
कार्य्यो दशाविपरिणामवशान्न कामात् ॥ इति ।

पथिकानामल्पापहारे न दण्ड इत्याह, मनुः,—

द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके ।
आददानः परक्षेत्रान्न दण्डं दातुमर्हति ॥

अत्र प्राणत्राणविधेः साधारण्येन न्यायसाम्यात् द्विज इति क्षत्त्रियादेरप्युपलक्षणम् ।

मत्स्यपुराणे द्विजोऽध्वग इत्यादौ तु,—

त्रपुषोर्व्वारुके[३] द्वे द्वे तावन्मात्रं फलेषु च ।
शाकं स्तोकप्रमाणेन गृह्णानो नैव दुष्यति ॥

---

१ घ पुस्तके प्राणात्यये ।　　२ घ पुस्तके प्रायश्चित्तं न ।
३ ग — धारुके ।

मनुः,—

चणक-व्रीहि-गोधूम-यवानां मुद्ग-माषयोः।
अनिषिद्धैर्ग्रहीतव्या मुष्टिरेका पथि स्थितैः॥

एतद्दर्शनात् पूर्व्ववाक्येऽप्यनिषिद्धे[1] दोषाभावो द्रष्टव्यः।

तथा,—

तथैव सप्तमे भक्ते भक्तानि षडनश्नता।
अश्वस्तनविधानेन हर्त्तव्यं हीनकर्म्मणः॥

यत्तु,—

वानस्पत्यं मूल-फलं[2] दार्व्वग्न्यर्थं तथैव च।
तृणञ्च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत्॥

इति मनुवचने व्याख्यातं नारायणेन।

वनस्पतिर्वृक्षमात्रं तद्भवं वानस्पत्यं तेनौषधिप्रभव-व्यवच्छेदः। एतच्चारण्यगतम्।

गोऽग्न्यर्थं तृणमेधांस्तु वीरुधो वनस्पतीनाञ्च पुष्पाणि स्ववदाददाति फलानि चापरिवृतानाम्।

इति गौतमस्मरणात्।

अपरिवृता अपरिगृहीता इहोक्ताः। अग्न्यर्थं वैतानिकाग्न्यर्थम्।

एवञ्च वृक्षतृणकाष्ठादीनि गृहाच्छादनाद्यर्थमरण्यादपि राजाननुमत्यानीतानि स्तैन्यनिमित्तान्येवेति।

तच्चौषधिप्रभवमात्रं न व्यवच्छेद्यमपि तु मत्स्यपुराणोक्ता-दन्यच्च कदलादिसमनन्तरोक्तविषयादन्यच्च धान्यमुद्गा-दीति नेयम्।

---

१ क ग पुस्तके ऽनिषेधे।

२ ग ङ पुस्तकद्वये फलं मूलं।

आवश्यकेषु च तृणादिषु राजरक्षितेषु तन्निषिद्धेषु वा तदनुमत्यपेक्षा नत्वन्यत्रापीति द्रष्टव्यम् ।

मिताक्षराकारस्त्वाह,—

द्विजस्तृणाद्यन्तराभावे गवाग्निदेवतार्थं तृणकाष्ठकुसुमानि परपरिग्रहादप्याहरेत् । फलानि त्वपरिगृहीतानीति गौतमवचनात् ।

यत्तु,—

तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम् ।
[1]अनापृच्छ्य हि गृह्णानो हस्तछेदनमर्हति ॥

इत्युक्तम् ।

तद्द्विजव्यतिरिक्तविषयमनापद्विषयं गवादिव्यतिरिक्तविषयं वेति ।

कात्यायनः,—

सहृत्तानान्तु सर्व्वेषामपराधो यदा भवेत् ।
अवशेनैव दैवात्तु तत्र दण्डं न कल्पयेत् ॥

सर्व्वेषां ब्राह्मणादीनामवशेन स्वस्येति शेषः । तेन भयादिपरवशतयेत्यर्थः । दैवात् प्रमादात् ।

तथा,—

परदेशाहृतं द्रव्यं वैदेशेन यदा भवेत् ।
गृहीत्वा तस्य तद्द्रव्यमदण्ड्यं तं विसर्ज्जयेत् ॥

वैदेशेन देशान्तरादागतेन इति हलायुधः । तदेतदसाधारणनिमित्तकमपि सर्व्वजातिसाधारणमुक्तम् ।

---

१ क ख पुस्तकद्वये अनापृष्ट्वा ।

अथ ब्राह्मणमाचस्यादण्डमाह नारदः,—

ब्राह्मणस्यापरीहारो मार्गादानञ्च गच्छतः।
भैक्ष्यहेतोः परागारे प्रवेशश्चानिवारितः[१] ॥
समित्पुष्पकुशादानेष्वस्तेयं सपरिग्रहात्।
[२]अनध्यक्षः परेभ्यश्च सम्भाषश्च परस्त्रियाः ॥

अपरीहारो दण्डाभावः, अनिवारित इति वचनाद्वारणे अपराध एव, अस्तेयं चौर्य्याभावः, सपरिग्रहादिति परपरिग्रहविषयस्यापि समिदादेरादानान्नापराध इत्यर्थः। अनध्यक्षः परेभ्य इति शत्रुभ्योऽप्यागतो ब्राह्मणोऽदुष्टाभिप्रायश्चेन्न दण्ड्य इत्यर्थः। सम्भाषश्च परस्त्रिया इति दोषाभावाभिप्रायम्।

तथा शङ्खलिखितौ,—

इन्धनोदक-काष्ठाग्नि-तृणोपल-पुष्प-फलपर्णादानेष्वग्रावचयं देवतीर्थाभिगमनं गृहकोष्ठप्रवेशनं पथि शस्त्रधारणमसम्बद्धमासनं प्रसृतेषु निवारणमसद्वासश्चेच्छिलोञ्छपदयोर्धान्यराशिग्रहणमग्रोत्सर्गं प्रसवद्वृद्धिकार्षापणशुल्कनदीतरेष्वनुपरोधनं परस्त्रीसम्भाषणं, राजस्त्रीदर्शनं व्यतिक्रमञ्च कोपात् सर्व्वमर्हति ब्राह्मणः।

इन्धनेत्याद्यावश्यकेन्धनादिपरं, देवोऽचान्यापरिगृहीतदेवालयः, एवं तीर्थमपि, गृहकोष्ठप्रवेशनं परस्येति शेषः, पथि देशान्तरवर्त्मनि, असम्बद्धमासनं प्रयोजनं विना यत्र क्वचनावस्थानम्।

---

१ क पुस्तके प्रवेशस्त्वनिवारितः।

२ घ ङ पुस्तकद्वये अनाध्यक्षः। मूले— अनपेक्षः.

प्रस्तृतेषु कार्य्यार्थं प्रस्थितेषु[१] अनिवारणं तन्मध्यगमनेऽनिषेधनम्। असद्वासः कार्य्यवशादसद्भिः सह वासः, चेच्छब्दः समुच्चये अव्ययानामनेकार्थत्वात्।

शिलोञ्छपदयोरिति शिल उञ्छ इत्यात्मवृत्तिभ्यां वर्त्तमानयोर्ब्राह्मणयोः शेषीभूतधान्यराशेर्ग्रहणम्, अग्रोत्सर्गमग्रत्यागपूर्व्वकमश्वस्तनविधिना ग्रहणमित्यर्थः। प्रसवः प्रसिद्धः, वृद्धिः कुषीदं, कर्षः कर्षणं, आपणं क्रयविक्रयव्यवहारः, नदीतरः नदीतरणं, एतेषु यद्देयं तदप्रयच्छतोऽनुपरोधनमनाक्रमणं, व्यतिक्रमणमाज्ञालङ्घनम्।

गौतमः,—

स एव बहुश्रुतो भवति वेदवेदाङ्गविद्वाकोवाक्येतिहासपुराणकुशलस्तदपेक्षस्तद्वृत्तिश्चाष्टाचत्वारिंशता संस्कारैः संस्कृतस्त्रिषु कर्म्मस्वभिरतः षट्सु सदाचारेषु विनीतः षड्भिः परिहार्य्यो राज्ञाऽवध्यश्चावेध्यश्चादण्ड्यश्चाबहिः कार्य्यश्चापरिवाद्यश्चापरिहार्य्यश्च।

एतद्बहुश्रुतादिविषयं तस्यैवोपक्रमात् न तु ब्राह्मणमात्रविषयं राजा सर्व्वस्येष्टे ब्राह्मणवर्ज्जमिति गौतमवचनं प्रशंसार्थकमिति मिताक्षराकारः।

वाकोवाक्यमचोक्तिप्रत्युक्तिमद्वेदवाक्यं तदपेक्षस्तद्विरोध्याचारशून्यस्तद्वृत्तिस्तदविरोधिव्यापारशीलः। अष्टचत्वारिंशत्संस्कारैर्गर्भाधानादिभिः। त्रिषु दानाध्ययनयागेषु, षट्सु यज्ञाध्ययन-दान-याजनाध्यापन-प्रतिग्रहेषु।

---

१ ग घ चेष्टितेषु।

हलायुधस्तु त्रिषु दानादिषु याजनादिषु वेति व्याख्याय षट्सु सदाचारेष्वित्यत्र समाचारिष्विति पठित्वा स्मार्त्त-शिष्टाचारेष्विति व्याख्यातवान्।

षड्भिर्बधादिभिः परिहार्य्यो बधादिभिरशास्योऽदण्ड्य इति शरीरार्थदण्डनिषेधपरं, वाक्धिक्दण्डयोर्वक्ष्यमाण-त्वात्। अपरिहार्य्य इति महापातकिषु निषिद्धे सह-भोजनादाववबहिष्कार्य्य इत्यर्थः।

वस्तुतस्तु षड्भिरिति संग्रहः, अबध्य[1] इत्यादि तद्वि-वरणम्।

तत्र निषेधमाह मनुः,—

असम्भोज्या ह्यसंयाज्या असम्पाठ्या विवाहिनः।
ज्ञातिसम्बन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः।
निर्द्दया निर्नमस्कारास्तन्मनोरनुशासनम्॥

असम्भोज्यास्तैर्मिलित्वा भोगगोष्ठी न कार्य्येत्यर्थ इति रत्नाकरः। मनुटीकायां नारायणोऽप्याह एकपङ्क्ति-भोजनानर्हा इति। कुल्लूकभट्टस्त्वाह अन्नादिकं नैते भोजनीया इत्यर्थः। असंयाज्या अयाजनीया असंपाठ्या अध्यापनानर्हा अविवाहिनो विवाहानधिकारिणः। ज्ञातयः पितृसम्बन्धिनः सम्बन्धिनो मातृसम्बन्धिनः[2]। निर्दया व्याध्यादियोगेऽपि सद्भिर्दयाविषयीकर्त्तुमनुचिताः, निर्नमस्कारा ज्येष्ठादिगुणयोगेऽपि नमस्कर्त्तुमनर्हाः।

तदेतद्बहुश्रुतादेरदण्ड्यत्वाभिधानं प्रमादकृतमहापात-कादिविषयमिति पारिजातः।

---

१ ग परिहार्य्यं। २ ख मातृबान्धवाः।

युक्तञ्चैतत् कामकृतेषु तेषु कात्यायनादिना निःसङ्ग-बन्धनादि-दण्डाभिधानात्।

अथ मनुः,—

ब्रह्महा च सुरापश्च तस्करो गुरुतल्पगः।
एते सर्व्वे पृथक् ज्ञेया महापातकिनो नराः॥
चतुर्णामपि चैतेषां प्रायश्चित्तमकुर्व्वताम्।
शरीरं धनसंयुक्तं धर्म्म्यं दण्डञ्च कल्पयेत्॥

चतुर्णामपि क्षत्रियादीनां शारीरो दण्डो बध एव, ब्राह्मणानामवरोधरूपः समनन्तरोक्तोऽङ्कनरूपो वा। न तु हस्तच्छेदबधादिः, तस्य बृहस्पतिना निषेधात्।

यदाह,—

दश स्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत्।
त्रिषु वर्णेषु तानि स्युरक्षतो ब्राह्मणो व्रजेत्॥

बृहस्पतिः,—

महापातकयुक्तोऽपि न विप्रो बधमर्हति।
निर्वासनाङ्कने मौण्ड्यं तस्य कुर्य्यान्नराधिपः॥

अत्र निर्वासनाङ्कनयोर्विकल्प इति रत्नाकरः।

तन्मते,—

न जातु ब्राह्मणं हन्यात् सर्व्वपापेष्ववस्थितम्।
राष्ट्रादेनं बहिः कुर्य्यात् समग्रधनमक्षतम्॥

इति मनुवचनं पक्षप्राप्ताभिप्रायकमस्तु समनन्तरन्तु बौधायनवचनं दुर्घटम्। दुर्घटतरञ्च यमोक्तमङ्कनस्य प्रख्यापनार्थत्वम्।

अङ्कनप्रकारमाह बौधायनः,—

ब्राह्मणस्य भ्रूणहत्या-गुरुतल्प-सुवर्णस्तेय-सुरापानेषु कवन्ध-भग-श्वपाद-ध्वजांस्तप्तेनायसेन ललाटेऽङ्कयित्वा स्वविषयान्ते निर्वासनम्।

नारदः,—

अशिराः पुरुषः कार्य्यो ललाटे द्विजघातिनः।
गुरुतल्पे भगः कार्य्यः सुरापाने सुराध्वजः॥
स्तेये तु श्वपदं कृत्वा शिखिपित्तेन पूरयेत्।

टङ्केन ललाटमुत्खाय मयूरपित्तेन पूरणमित्येतत् प्रकारान्तरं हरितिकेति प्रसिद्धम्।

अत्र यमः,—

ब्राह्मणस्यापराधेषु चतुर्ष्वेव विधीयते।
शिरसो मुण्डनं दण्डः पुरान्निर्वासनं तथा॥
प्रख्यापनार्थं पापस्य प्रयाणं गर्द्दभेन तु।
ललाटे चाङ्ककरणं कुर्य्याद्राजा यथाविधि॥

एतद्दर्शनादङ्कस्यापि प्रख्यापनार्थत्वेन गर्द्दभारूढभ्रामणेन सह तस्य विकल्प एव। सर्व्वञ्चैतत् कामकृते महापातके प्रायश्चित्ताकरणपक्षे द्रष्टव्यम्।

अन्यत्र त्वाह मनुरेव,—

प्रायश्चित्तन्तु कुर्व्वाणाः पूर्व्वे वर्णा यथोदितम्।
नाङ्क्या राज्ञा ललाटेषु दाप्यास्तूत्तमसाहसम्॥
आपत्सु ब्राह्मणस्यैषु कार्य्यो मध्यमसाहसः।
विवास्यो वा भवेद्राष्ट्रात् सद्रव्यः सपरिच्छदः॥

इतरे कृतवन्तस्तु पापान्येतान्यकामतः।
सर्व्वस्वहारमर्हन्ति कामतस्तु प्रवासनम्॥

पूर्व्वे ब्राह्मण-क्षत्रिय-वैश्याः, अकामत इत्युत्तरश्रुतमप्यन्वेतीति मनुटीका। इह क्षत्रियादिभिरेकोक्त्या निर्द्देशात् ब्राह्मणो निर्गुणो विवक्षितः, मध्यमसाहसस्तु गुणवत्-ब्राह्मणविषय इति न विरोधः। विवासनन्तूभयसाधारणम्।

सर्व्वञ्चैतत् बहुश्रुताद्यन्यविषयं विवास्यो वा इत्यादि सार्द्धश्लोकः प्रायश्चित्ताकरणपक्षे वाकारस्वरसात्। बृहस्पतिवाक्ये समभिव्याहृतस्याङ्कनस्याकामकृतत्वेन निवृत्तौ विवासनमात्रस्य पारिशेष्यात् मध्यमसाहसेन सह तस्य तुल्यवद्विकल्पायोगात्।

आहतुश्चैनमेवार्थं शङ्खलिखितौ,—

महत्स्वपि पातकेषु विवासनमङ्कनं ब्राह्मणस्य प्रायश्चित्तानि वा शोधनमपीड्यो हि ब्राह्मणः। इति।

अतएवाच प्रायश्चित्तपक्षेऽङ्काकरणादपीड्यता इति रत्नाकरकृता व्याख्यातम्। इतरे इति क्षत्रियादयस्त्रय इत्यर्थः।

सर्व्वस्वहारं सर्व्वस्वग्रहणमेतच्च पूर्व्वोक्तेन उत्तमसाहसेन सह वृत्ताद्यपेक्षया व्यवस्थापनीयम्। कामत इति पापानि कृतवन्तः। प्रवासनमत्र बधः—

प्रवासनं परासनं निसूदनं निर्हिंसनम्।

इत्यभिधानकोषपाठादिति मनुटीकायां कुल्लूकभट्टः।

नारायणस्त्वाह,—

कामकृतेऽनुक्तरूपं प्रवासनमङ्कनादिसहितं एतच्चाल्पारम्भविषयमारम्भमहत्त्वे तु हननमेवेति। तदेवमकामकृते महापातके बहुश्रुतादेर्दण्डाभावः। तदितरस्य गुणवतो मध्यमसाहसं निर्गुणस्योत्तमसाहसं दण्डः सर्व्वेषां प्रायश्चित्ताचरणञ्च तदनाचरणे देशान्निःसारणम्।

कामकृते तु तस्मिन् बहुश्रुतादेः प्रायश्चित्ताचरणमनाचरणे निःसारणं तदितरस्याङ्कनं निःसारणञ्च। क्षत्रियादेस्तु कामकृते तस्मिन् बधः। अन्यत्राङ्कनधनदण्ड-प्रवासनादीति व्यवस्था।

अथ धनदण्डोऽप्यमीषामनुशासनमात्रार्थ एव। समनन्तरमेव तस्य त्यागस्मरणात्।

तथाहि मनुः,—

नाददीत नृपः साधुः महापातकिनो धनम्।
आददानस्तु तल्लोभात्तेन पापेन लिप्यते॥

धनं धनदण्डरूपमिति नारायणः।

नाददीत पातकिसकाशादाकृष्टमपि न स्वीकुर्व्वीत। किं तर्हि कुर्य्यादित्याह,—

अप्सु प्रवेश्य तं दण्डं वरुणायोपकल्पयेत्।
श्रुतवृत्तोपपन्ने वा ब्राह्मणे प्रतिपादयेत्॥
ईशो दण्डस्य वरुणो राज्ञां दण्डधरो हि सः।
ईशः सर्व्वस्य जगतो ब्राह्मणो वेदपारगः॥

वृत्तमाचार इति नारायणः। मनूक्तं गुरुपूजादीति तत्त्वम्। राज्ञामिति-राज्ञामपि दण्डधरः शास्ता यतः।

यमः,—

पतितस्य धनं हृत्वा राजा पर्षदि दापयेत् ।

पर्षदि सभायां दापयेत् सभ्येभ्य इति शेषः ।

अथ दण्डापकर्षः ।

तत्रानेककर्म्मकलापसाध्ये स्तेयादौ कात्यायनः,—

आरम्भे प्रथमो दण्डः प्रवृत्ते मध्यमः स्मृतः ।

आरम्भे तत्फलावच्छिन्नकर्म्मकदम्बान्तर्भूतार्थे एककर्म्मकृत्यामित्यर्थः[१] । प्रथमः कथितः सम्पूर्णदण्डचतुर्थभागात्मकः । प्रवृत्ते तथाविधानेककर्म्मफलकृत्यां मध्यमो दण्डोऽर्द्धात्मकः ।

व्यासः,—

गुप्तायाः संग्रहे दण्डो यथोक्तः परिकल्पितः ।
इच्छन्त्यामागतायान्तु गच्छतोऽर्द्धदमः स्मृतः ॥

एवमन्यदुदाहरणीयम् ।

अथ दण्डसाम्यम् ।

तत्र पूर्व्वोक्त एव विषये कात्यायनः,—

यस्य योऽभिहितो दण्डः पर्य्याप्तस्य स वै भवेत् ।

पर्य्याप्तिस्तत्पापजनकसकलकर्म्मकृतिः[२] तद्वतः पुरुषस्य यथोक्तो दण्डो भवेत् ।

---

१ ग पुस्तके कर्म्मफलकृत्यां ।

२ क ग पुस्तकद्वये कर्म्मजनककृतिः ।

## अथ दण्डोत्कर्षः ।

तत्र कात्यायनः,—

अर्थवन्तो यतः सन्तो यथोक्तानपि ते दमान् ।
दद्युर्नैवोपशाम्येरन् तस्मात्तेषु न निश्चयः ॥
तस्माद्व्याहताः पापा येन येनाशुभं पुनः ।
न कुर्य्युस्तत्तदेवास्य कर्त्तव्यमिति निश्चयः ॥

न निश्चयो न विहितदण्डसंख्यानियमः, इति निश्चय इति सिद्धान्तः ।

अत्रापराधेषु नियम[1]माहुर्गार्गीयमानवाः,—

दण्डनीयः स शैथिल्यात् प्रथमं वेति गौतमः ।

इति पूर्व्वश्लोकं पूर्व्वं लिखित्वा अव्याहताः पापा इत्यत्रापोहताः पापा इति पठित्वा हलायुधेन व्याख्यातम् ।

अस्य सर्व्वस्यायमर्थः । अपराधेषु यो यस्य दण्डो विहितः स प्रथमे च न कर्त्तव्यः किन्तु यदा तस्मिन् दण्डे प्रयुज्यमाने दण्डनीयस्यापराधक्रियायां शैथिल्यं वैमुख्यमवगतं भवति तदा प्रणेतव्यः । ये तु विहितदण्डकरणेऽपि पापादुपशान्ता न भवन्ति ते राज्ञा पापानपोहता येन येन पुनः पापक्रियायां न प्रवर्त्तन्ते तं तमेव दण्डं तेषां प्रयुञ्जीतेति ।

यत्तु रत्नाकरे— शैथिल्याद्दण्डहेतुकर्म्मनिश्चयशैथिल्यात् तदनिश्चयादिति पूर्व्वार्द्धं व्याख्यातम् ।

तच्चिन्त्यम् । अपराधासिद्धौ दण्डस्य प्राप्त्यभावेन प्रतिषेधायोगात् । विषयभेदेन मतभेदोपन्यासायोगाच्च ।

---

१ ग नियतम् ।

तथाहि पूर्व्वश्लोकार्थः ।

तेषु तेष्वपराधेषु मन्वाद्युक्ततत्तद्दण्डनियमं गार्गीय-मानवा गर्गशिष्या वदन्ति । गौतमस्तु नियमं न मन्यते । दण्डस्य दुर्वृत्तनिवर्त्तकतया दृष्टार्थत्वेन यावता तन्निवृत्ति-स्तावत एव शास्त्रार्थत्वात् । तन्निवृत्तौ तस्य तस्यौत्सर्गिक-त्वेन मन्वादिभिस्तथातथाभिधानादिति ।

एतन्न्यायमूलकमेव संग्रहप्रकरणीयम् ।

बृहस्पतिवचनम्,—

त्रयाणामपि चैतेषां प्रथमोत्तममध्यमः ।
विनयः कल्पनीयः स्यादधिको द्रविणाधिकः ॥ इति

तथा कार्षापणं भवेद्दण्ड्य इत्यादि मनुवचनं तन्न्याय-मूलकमेव ।

यच्चाधिकृतगुरुविप्राणामाक्रोशे निर्भर्त्सनं ताडनं गोमयालेपनं खरारोहणं दर्पहरो दण्डो वेति शङ्खलिखिताभ्यामुक्तं तस्याप्युक्त एवार्थो तात्पर्य्यम् । कात्यायनीयेनैकमूलकत्वे लाघवात् ।

आध्यादीनां विहर्त्तारमित्यादियाज्ञवल्क्यवचने मिता-क्षराकारः । दण्डो दमनादित्याहुस्तेनादान्तान् दमयेत् इत्यनेन दण्डस्य दमनार्थत्वावगमाद् यस्य तत्समदण्डेन विहितेन दमनं न भवति तस्य तदधिको दण्डो निर्धनस्य तु यावता पीडा तावानेवेति एतदुक्तं वेति स्फुटम् ।

तदेवं यस्मिन् कर्म्मणि शृङ्गग्राहिकया यो दण्डो विहितः, तं दत्त्वाऽपि यस्तस्मिन्नेव प्रवर्त्तते तस्य तदधिको

दण्डः। यदि तु विहितस्य दण्डस्य पुनःप्रवृत्तिनिवर्त्तनासामर्थ्यं दण्डस्योच्छृङ्खलत्वादिना[1] प्रथममेवावगम्यते तदा यावता तन्निवृत्तिः सम्भाव्यते तावान् दण्डः प्रथममेव प्रणेतव्य इति स्थितम्।

यदि तु प्रथमेऽपराधे यथाविहितो दण्डः पुनस्तज्जातीये पतिते यावता दमनं[2] तावान् दण्ड इति मतम्। तदा यस्य प्रथम एवापराधे विहितदण्डदानासामर्थ्यं ततोऽल्पीयसैव दमनं तत्र का गतिः। कर्म्मणा विहितदण्डपूरणमिति चेत् कस्तर्हि निर्धनः सर्व्वेषां कर्म्मसंभवात्।

व्यासः,—

समूहस्थाः प्रवृत्ताश्चेत्पापेषु पुरुषाधमाः।
यथोक्ताद्विगुणं दण्डमेकैकं तान् प्रदापयेत्॥

समूहस्थाः मिलिताः। यथोक्तादिति एकाकिनः पुरुषस्य पापे प्रवृत्तस्य यो दण्डस्तस्मादित्यर्थः। अथापराधानुबन्धगौरवादिना दण्डाधिक्ये द्वैगुण्यादिविशेषानभिधानेन तदुत्कर्षसीमामाह।

नारदः,—

काकिन्यादिस्तु यो दण्डः स तु माषपरः स्मृतः।

[3][काकिन्यादिः काकिन्यादिपरः। माषपरो माषान्तः। तेन यत्रापराधे काकिन्यात्मको दण्ड उक्तस्तत्र निमित्तवशात् सातिशयोऽपि माषपर्य्यन्त एव कार्य्यः। एवमुत्तरत्रापीत्याह।]

१ क पुस्तके उत्कर्षादिना। २ क यावद्दमनम्।
३ घ पुस्तके [ ] चिह्नितांशः पतितः।

माषावराद्धो यः प्रोक्तः कार्षापणपरस्तु सः ।
कार्षापणावराद्यस्तु चतुःकार्षापणावरः[१] ॥
द्यवरोऽष्टपलान्तश्च त्र्यवरो द्वादशोत्तरः ॥

अत्र कार्षापणपदान्माष इति गम्यते ।

यत्तु,—

काकिन्यादिस्त्वर्थदण्डः सर्व्वस्वान्तस्तथैव च ।

इति शङ्खेनोक्तं [२][तन्नानुबन्धतारतम्यविषयम्, अपि तूत्कर्षावधिकथनपरम् । यथा नारदेनैव शङ्खेनैव चोक्तम् ।

शारीरस्त्ववरोधादिर्जीवितान्तस्तथैव चेति ।]

उक्तानुक्तसर्व्वसाधारणीं सीमामाह ।

कार्षापणाद्या ये प्रोक्ताः सर्व्वे ते स्युश्चतुर्गुणाः ।
एवमन्येऽपि विज्ञेयाः प्रागेते पूर्व्वसाहसात् ॥

पूर्व्वसाहसः सार्द्धं पणशतद्वयम् । तस्मात्प्राग् ये दण्डविशेषास्ते ऽनुबन्धगौरवात् पापातिशये चतुर्गुणा ग्राह्याः । पूर्व्वसाहसादौ तु पापातिशयेऽपि चातुर्गुण्यं नास्तीत्यर्थ इति रत्नाकरः ।

एवञ्च शारीरादिदण्डसमुच्चयस्तत्रापि न विरुद्धः ।
योज्यः समस्तश्चैकस्य महापातककारिणः ॥

इत्यादौ वाग्धिग्धनदण्डादिसमुदायविधानात् ।

मनुः,—

कार्षापणं भवेद्दण्ड्यो यत्राऽन्यः प्राकृतो जनः ।
तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा ॥

---

१ ग चतुःकार्षापणः परः ।

२ ग पुस्तके [ ] चिह्नितांशः पतितः ।

यत्रेति तत्रेति ऐश्वर्य्यापेक्षया राजामात्यादीनामप्यधिकदण्ड्यत्वमुक्तं युक्तम् । एवमेव नारायणः ।

अचात्मदण्डञ्च राजा प्रकल्पयेत् । तच्च ब्राह्मणेभ्यो दद्यात् अप्सु वा क्षिपेत् । ईशो दण्डस्य वरुण इत्यादेर्मनुनैवाभिधानादिति कुल्लूकेन मनुटीकायामुक्तम् ।

तच्च प्रतिभाति महापातकिनां धनदण्डं विचार्य्य तस्य स्वयं विनियोगे राज्ञस्तत्पापमतिदिश्य वरुणब्राह्मणान्यतरप्रतिपत्तिं विधाय मनोरयमनुवादो दण्डवाधप्रकरणपरिसमाप्तौ दर्शितः ।

न चायं राज्ञः स्वदण्डं स्पृष्टुमीष्टे प्रतिपत्त्या तदाक्षेप इति चेन्न तस्यानियतविषयत्वात् । आरभ्याधीतत्वात्, तं दण्डमिति वचनाच्च ।

तस्माद्राज्ञामवान्तरनरपतीनामिति रत्नाकरोक्तमेव न्याय इति द्रष्टव्यम् । स्वस्य स्वयं दण्डनानुपपत्तेः ।

यत्तु नारायणेन— किं बहुना सोऽपि दण्ड्य एवेत्याहेति कृत्वा वचनमिदमवतारितं तचापि शब्दस्वरसात्कैमुतिकन्यायो मूलं तस्य चान्येषां दण्डदार्ढ्ये तात्पर्य्यम् ।

वरुणब्राह्मणयोरन्यतरस्मिन् श्रुतराजदण्डसमद्रव्यप्रक्षेपस्तु न दण्डः । तत्त्वेन तत्प्रतिनिधित्वेन वाऽनुपदेशात् । प्रत्युत समनन्तरमेव—

"यत्र वर्जयते राजा पापकृद्भ्यो धनागमम् ।"

इत्यादिना तद्धनत्यागस्यैवोपसंहारात् ।

एवं सति प्रधानस्य राज्ञो दण्डाभावे पापान्निवृत्तिः

कुतः-विपक्षे बाधकाभावादिति चेत्। नरकश्रवणात्। प्रायश्चित्ताचरणक्लेशप्रतिसन्धानात्। अयशोभयादकीर्त्तिभयात्।

अन्यथा स्वदण्डनेऽपि प्रवृत्तिस्तस्य कुतः विपक्षबाधकाभावादिति तुल्यम्। [1]रागौत्कट्यान्नरकश्रुत्यादिकं विस्मृत्य कृतपापस्य राज्ञः का गतिरिति चेत्। समर्थस्य प्रायश्चित्तमसमर्थस्य तत् प्रत्याम्नायतया श्रुतं गोदानादि। तच्च द्रव्यं ब्राह्मणादिभ्यो देयमिति। नारायणव्याख्यानमप्येवमेव नेयम्।

असामर्थ्ये दण्ड एव कुतो न स्यादिति चेत् गवाद्यपेक्षया गुरुत्वात्। गुरुरपि स एव न्याय्यो दण्डप्रायश्चित्तयोर्वैकल्पिकत्वात्। प्रत्याम्नायस्यानुकल्पकत्वादिति चेत् तर्हि गोदानादिकमपि न स्यात्। दण्डाभावे सावकाशमिति चेत् न दण्डस्य सर्व्वत्र श्रुतत्वात्। सर्वदा सम्भवाच्च। अस्तु वा तस्य वाग्दण्डो धिग्दण्डश्च तयोः प्राड्विवाकपुरोहितप्रवर्त्तनीयत्वात्।

एतदेवाभिसन्धायाह नारायणो-हलायुधश्च "राजदण्डस्तु सभ्यैरेव कर्त्तव्य इति।

अथ शारीरदण्डेऽवधिमाह कात्यायनः,—

शारीरस्त्ववरोधादिर्जीवितान्तस्तथैव च॥

---

१ ख घ रागोत्कर्षात्।

# अथ दण्डपरिनिष्ठा।

सा च दण्डस्य तत्प्रकारस्य नियमोऽस्य समुच्चयस्तस्य संकलनं दण्डान्तरेणेति चतुर्विधेति संग्रहः।

तत्र दण्डनियमः।

पित्रादीनां राज्ञां हिंसाव्यतिरिक्तेऽपराधे वाग्दण्ड एव। प्रव्रजितादीनां धिग्दण्ड एवेत्यादिः।

तत्र मनुः,—

पिताचार्य्यः सुहृन्माता भार्य्या पुत्रः पुरोहितः।
नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्म्मे न तिष्ठति॥

याज्ञवल्क्यः,—

ऋत्विक् पुरोहितामात्यपुत्रसम्बन्धिबान्धवाः।
धर्म्माद्विचलिता दण्ड्या निर्वास्या राजहिंसकाः॥

तेषां दण्डमाह बृहस्पतिः,—

गुरून् पुरोहितान् पूज्यान् वाग्दण्डेनैव दण्डयेत्।

कात्यायनः,—

पित्रादिषु प्रयुञ्जीत वाग्दण्डं धिक् तपस्विनाम्।

धिक् धिग्दण्डनम्। एवञ्च यदमीषामदण्ड्यत्वाभिधानं तदर्थ-शारीरदण्डाभिप्रायम्।

यथा शङ्खलिखितौ,—

अदण्ड्यौ मातापितरौ स्नातकपुरोहितौ परिव्राजक-वानप्रस्थौ। जन्मकर्म्मश्रुतशीलशौचाचारवन्तः। ते हि

धर्म्मप्रतिकरा राज्ञः स्त्रीबालवृद्धास्तपस्विनस्तेभ्यः क्रोधं नियच्छेत्[१]।

जन्म शुद्धकुलता। कर्म्माग्निहोत्रादि। श्रुतं वेदवेदाङ्गगोचरं ज्ञानम्। शौचं वाह्यमाभ्यन्तरञ्च[२]। एतद्युक्ता अपि न दण्ड्याः। यतस्ते राज्ञो धर्म्मप्रतिकराः षड्भागरूपधर्म्मोपार्जनेनोपकारिणः।

अत्र स्त्रीबालवृद्धा इत्यनेन स्त्र्यादीनामप्यदण्ड्यत्वमुक्तमिति रत्नाकरः। तपस्विन इति विशेषणदर्शनाद्धेतुमन्निगदस्वरसाच्च तेषामपि तपस्विनामेवादण्डः। बालादीनामपि वृहस्पतिना ताडनस्मरणात्। स्त्रिया अपि भागिनेयादिगमने लिङ्गच्छेद-बधयोर्हीनागमने कर्णकर्त्तनस्य च याज्ञवल्क्येन स्मरणादिति प्रतिभाति।

यथा च कात्यायनः,—

आचार्य्यस्य पितुर्मातुर्बान्धवानां तथैव च।
एतेषामपराधेषु दण्डो नैव विधीयते॥

वृहस्पतिः,—

प्रतिलोमास्तथा चान्त्याः पुरुषाणां मलाः स्मृताः।
ब्राह्मणातिक्रमे बध्या न दातव्या दमं क्वचित्॥

दातव्याः दापयितव्याः।

कात्यायनः,—

अस्पृश्य-धूर्त्त-दासानां म्लेच्छानां पापकारिणाम्।
प्रातिलोम्यप्रसूतानां ताडयेन्नार्थतो दमः॥

---

१ घ नियच्छेत।

२ घ पुस्तके इति पदमधिकम्।

पापकारिणः पापकरणशीलाः। प्रातिलोम्यप्रसूता निषादादयः सूतमागधादयश्च। अन्ये चैवमादयो वाक्-पारुष्यप्रकरणे वक्ष्यन्ते।

यच्च चौरमधिकृत्य वृद्धमनुवचनम्,—

अन्यायोपात्तवित्तत्वाद्धनमेषां मलात्मकम्।
ततस्तान् घातयेद्राजा नार्थदण्डेन दण्डयेदिति॥

तदपि प्रतिलोमादिविषयमेकमूलकत्वकल्पने लाघवात्। एतच्च महापातकविषयमिति मिताक्षराकारः।

तथा,—

परतन्त्रास्तु ये केचिद्दासत्वं ये च संस्थिताः।
अनाथास्ते तु निर्द्दिष्टास्तेषां दण्डस्तु ताडनम्॥

परतन्त्रा भार्य्यापुत्रादयः। संस्थिताः प्राप्ताः। अनाथा अनीश्वराः। निर्द्दिष्टा निर्द्धना एकत्र गृहजातादयः पञ्च दासा विवक्षिताः। अन्यत्रानाकालभृतादयो दशेत्यपौन-रुक्त्यम्।

ताडनं बन्धनञ्चैव तथैव च विलम्बनम्।
एष दण्डो हि दासस्य नार्थदण्डो विधीयते॥

तथा,—

बालवृद्धातुरस्त्रीणां न दण्डस्ताडनं दमः।

न दण्डान्तरमपि तु ताडनमेवेत्यर्थः॥

तथा,—

स्त्रीधनं दापयेद्दण्डं धार्म्मिकः पृथिवीपतिः।
निर्द्धना चाप्तदोषा स्त्री ताडनं दण्डमर्हति॥

यदि धनवती स्त्री तदा तस्य दोषे सति धनं दण्डो धनाभावे तु ताडनमित्यर्थः ।

मनुः,—

स्त्रीबालोन्मत्तवृद्धानां दरिद्राणाञ्च रोगिणाम् ।
शिफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम् ॥

दरिद्रोऽत्र कर्म्मण्यक्षमो निर्द्धनः। दमं दमनं नियमनमित्यर्थः । तच्च शिफादिताडनेनैव नार्थेनेत्यर्थः । शिफा लता, विदलं वल्कलमिति हलायुधः। एतच्च विशेषविहितदण्डेतरविषयम् ।

अत्रैव शङ्खलिखितौ,—

शिल्पिनः कारवः शूद्रास्तेषां व्यभिचारेषु शिल्पोपकरणानि रक्षेत, तुलामानप्रतिमानानि वणिक्पथानां, क्षेत्र-बीज-भक्त-गोशकटकर्षणद्रव्याणि कर्षकाणां, वाद्यभाण्डालङ्कारवासांसि रङ्गोपजीविनां, गृहशयनालङ्कारवासांसि वेश्यानां, शस्त्राणि चायुधजीविनां, सर्व्वेषां कारुद्रव्याण्यनाहार्य्याणि राज्ञा धार्म्मिकेण। अस्वा हि पुरुषाः पापबहुलाश्चाविधेयाश्च भवन्ति तेभ्यः पापांशभाग्राजा। तस्मान्नाधनान्नानुपकरणान् कुर्य्यात्। तन्मूला हि वृत्तिर्वृत्तिमूलो निवासस्तैर्निवसद्भिः स्फीतं राष्ट्रमिहोच्यते ।

शिल्पिनश्चित्रलेखादिकर्त्तारः। व्यभिचारेषु सर्व्वस्वापहारयोग्यापराधेष्वपि। तुलेत्यत्र समुत्थानानीति कल्पतरौ पठितम्। तत्र समुत्थानं वणिग्वृत्तिसाधनभूतं द्रव्यम्। भक्तं कृषिसिद्ध्यर्थमन्नम्। कर्षणद्रव्यं हलादि। वाद्यभाण्डं पटहादि। रङ्गोपजीविनां नृत्यवृत्तीनाम् ।

नारदः,—

यत्र यस्योपकरणं येन जीवन्ति कारवः।
सर्व्वस्वहरणेऽप्येतन्न राजा हर्त्तुमर्हति॥

उपकरणं जीवनोपकरणम्। एतच्च चौर्य्योपकरणं विना द्रव्यम्।

अत्रैव यमः,—

सर्व्वस्वन्तु हरन्राजा चतुर्थञ्चावशेषयेत्।
भृत्येभ्योऽन्नं स्मरन् धर्म्मं प्राजापत्यमिति स्थितिः॥

सर्व्वस्वे गृह्यमाणे चतुर्थमंशं दण्ड्यमानपुरुषभृत्यानामन्नार्थमवशेषयेदित्यर्थः।

अत्र हलायुधः—कृपादिवशेन चतुर्थमंशं न गृह्णीयादित्याह।

एतच्च वचनं यद्यपि पतितमुपक्रम्य पठितं तथापि ततोऽन्यत्रापि द्रष्टव्यम्। न्यायसाम्यात्।

द्यूतप्रकरणे बृहस्पतिः,—

सर्व्वस्वं जितं सर्व्वं न दापयेत्।

तत्र न सर्व्वमिति चतुर्थभागनिषेधपरं यमवचनेनैकमूलत्वात्।

बृहस्पतिः,—

साहसं पञ्चधा प्रोक्तं बधस्तत्राधिकः स्मृतः।
तत्कारिणो नार्थदण्डैः शास्या बध्याः प्रयत्नतः॥

तत्कारिणः साक्षाद्धन्तारः।

व्यापादने तु तत्कारी बधं चित्रमवाप्नुयात्।

इत्यच तत्कारी साक्षाद्वधकारीति रत्नाकरव्याख्यान-दर्शनात्।

तेन मन्यूत्पादनद्वारा विषादिखादिनो[1] बधे नायं दण्ड इति गम्यते।

तथा,—

मित्रप्राप्त्यर्थलोभैर्वा राज्ञा लोकहितैषिणा।
न मोक्तव्याः साहसिकाः सर्व्वलोकभयावहाः॥

मित्रेति मित्रप्राप्तिलोभादर्थलोभादेवंजातीयादन्यतो वा हेतोर्न मोक्तव्या इत्यन्वयः। एवञ्च न मोक्तव्या अपि तु बध्या एवेत्यर्थः। न तु दण्डसामान्यपरमिदं अर्थलोभै-रित्यभिधानविरोधात्।

सोऽयं दण्डनीयपुरुषविशेषाद्दण्डनियमविशेष उदा-हृतः। एवमेव दण्डनिमित्तभेदादप्यूहनीयः। तथा हि उपस्थमुदरं जिह्वेत्यादौ कुल्लूकभट्टेनोक्तं तत्तदङ्गस्यापराध-गौरवलाघवापेक्षया च्छेदनताडनादि कार्य्यमल्पापराधे यथाश्रुतो धनदण्डो महापातके बध इति।

अथ दण्डप्रकारनियमो यथा।

मनुः,—

ब्राह्मणान् वाधमानन्तु कामादवरवर्णजम्।
हन्याच्चित्रैर्बधोपायैरुद्वेगजनकैर्नृपः॥

वाधमानमिति पीडयन्तम्। अवरवर्णजं शूद्रम्। चित्रैः शूलाग्रनिवेशनादिभिः। अर्थदण्डापेक्षया शारीरस्य

---

१ ग विषादिदायिनः।

दण्डस्याधिक्येन तत्रापि बधस्योत्तरावधित्वादपराधगौरवात् विषयोत्कर्षः[1]। तस्याप्युत्कर्षन्यायाद्वा वचनाद्वा प्राप्ते तत्र वैगुण्यादेरसम्भवात् ब्राह्मणपीडनविषये शूद्रस्य बधोपायोऽनेन नियम्यते।

सर्व्वज्ञेन तु चित्रैर्नानाविधैर्हस्तपादादिभिरिति व्याख्यातम्। एवमन्यदपि द्रष्टव्यम्।

अथ दण्डसमुच्चयो यथा।

बृहस्पतिः,—

स्वल्पेऽपराधे वाग्दण्डं धिग्दण्डं पूर्व्वसाहसे।
मध्योत्तरे धनं दण्डं[2] राजद्रोहे च बन्धनम्॥
निर्वासनं निरोधोऽपि कार्य्यमात्महितैषिणा।
योज्यः समस्त एकस्य महापातककारिणः॥

तत्र मनुः,—

वाग्दण्डं प्रथमं कुर्य्यात् धिग्दण्डं तदनन्तरम्।
तृतीयं धनदण्डन्तु बधदण्डमनन्तरम्॥
बधेनापि यदा त्वेनं निग्रहीतुं न शक्यते।
तदेषु सर्व्वमेवैतत् प्रयुञ्जीत चतुष्टयम्॥

बधदण्डमङ्गच्छेदम्। बधस्ताडनमिति कल्पतरुः। सर्व्वमेवैतदिति दशविधं दण्डं प्रागुक्तं वाग्दण्डादिचयं चेति सर्व्वज्ञेन व्याख्यातम्।

बृहस्पतिः,—

वाग्दण्डो धिग्दण्डश्चैव विप्रायत्तावुभौ स्मृतौ।
अर्थदण्ड-बधावुक्तौ राजायत्तावुभावपि॥

---

[1] ख ग विषयोत्कर्षात्। [2] क ख धनदण्डम्।

विप्रोऽत्र प्राड्विवाकः ।

अथैकत्र दण्डे दण्डान्तरसंकलनं यथा,

बृहस्पतिः,—

बधार्हस्तु स्वर्णशतं दमं दाप्यस्तु पूरुषः ।
अङ्गच्छेदार्हस्तदर्द्धं सन्दंशार्हस्तदर्द्धकम् ॥

कात्यायनः,—

सुवर्णशतमेकन्तु बधार्हो दण्डमर्हति ।
अङ्गच्छेदे तदर्द्धन्तु विवासे पञ्चविंशतिम् ॥

अङ्गच्छेदेऽर्द्धमेवं विवासे तदर्द्धम् । प्रसक्तबधो ब्राह्मणः शतं सुवर्णान् दण्ड्य इति मिश्राः । विवास इत्यत्र विनाश इति क्वचित्पाठः । तत्रापि तद्देशवासस्य विनाश इत्येक एवार्थ इति रत्नाकरः ।

कुलीनार्य्यविशिष्टेषु [१]निकृष्टेष्वनुसारतः ।
सर्व्वस्वं वा निगृह्यैतान् पुराच्छीघ्रं विसर्जयेत् ॥
निर्द्धना बन्धने धार्य्या बधं नैव प्रवर्त्तयेत् ।
सर्वेषां पापयुक्तानां विशेषार्थस्तु शास्त्रतः ॥

कुलीन उत्तमकुलजातः । आर्य्यः स्वधर्म्मनिरतः । विशिष्टो गुणवान् । एतेन निकृष्टेषु बधार्हेषु[२] अनुसारतो देशकालापेक्षया दण्डः ।

तत्र याज्ञवल्क्यः,—

ज्ञात्वाऽपराधं देशञ्च कालं बलमथापि वा ।
वयः कर्म्म च वित्तञ्च दण्डं दण्ड्येषु कल्पयेत् ॥

---

१ क क्लिष्टेषु । ख कृच्छ्रेष्वर्थानुसारतः ।

२ क पुस्तके क्लिष्टेष्वल्पधनेषु बधार्हेषु ।

मनुः,—

अनुबन्धं परिज्ञाय देश-कालौ च तत्त्वतः।
सारापराधौ चालोक्य दण्डं दण्ड्येषु पातयेत्॥

अनुबन्धो मन्दक्रियानुवृत्तिः। सारोऽत्र शक्तिः। अयञ्च दण्डः सुवर्णशताद्यसम्भवे, तस्याप्यसम्भवे सर्व्वस्वमिति व्यवस्थेति रत्नाकरः।

अथापस्तम्बः।

पुरुषवधे स्तेये भूम्यादान इति स्वान्यादाय बध्यः। चक्षुर्निरोधस्त्वेतेषु ब्राह्मणस्य।

स्वानि धनानि। अत्र रत्नाकरे बध्यस्ताड्यः, चक्षुरवरोधश्चक्षुरुत्पाटनं ब्राह्मणस्याधमतमस्येति व्याख्यातम्। स्तेयं सुवर्णहरणं ब्राह्मणस्याधमस्येति मिश्राः।

वस्तुतस्तु बध्यो घात्य इत्येवार्थः। स चाऽब्राह्मणविषयस्तुशब्दस्वरसात्। ब्राह्मणपदञ्चासङ्कुचितम्।

तथाहि मिताक्षरायां। ब्राह्मणस्य पुरान्निर्वासनसमये वस्त्रादिना चक्षुर्निरोधः कार्य्यो न तु चक्षुरुत्पाटनम्। अक्षतो ब्राह्मणो व्रजेदिति—न शारीरो ब्राह्मणदण्ड इति, मनु-गौतमवचनविरोधादित्युक्तम्।

एवञ्च यत्र क्षत्त्रियादेर्बधस्तत्र ब्राह्मणस्य प्रवासनं बहुशः श्रुतमिहापि प्राप्तम्। तथाच त्यज्यमानं स्वदेशं पश्यतो मन्युरस्य स्यादिति युक्तं चक्षुःपिधानमिति भावः।

कात्यायनः,—

बधाङ्गच्छेदार्हो विप्रो[1] निःसङ्गे बन्धने विशेत् ।
तदा कर्म्मविमुक्तोऽसौ वृत्तस्थस्य दमो हि सः ॥
कूटसाक्ष्येऽपि निर्वास्यो विख्याप्योऽसत्प्रतिग्रही ।
अङ्गच्छेदी वियोज्यः स्यात् स्वधर्म्मे बन्धनेन तु ॥

बधाङ्गच्छेदार्हो यस्मिन्नपराधे बधो वाऽङ्गच्छेदो वाऽर्हति तद्वान् । विप्रोऽत्र सदाचारनिष्ठः । वृत्तस्थस्येति विशेषणं दुर्वृत्तस्य दण्डान्तरं सूचयतीति कल्पतरुः । निःसङ्गे क्रियायोगशून्ये । यत्र बद्धः सन् स्वधर्म्मं कर्त्तुं न पारयति तदा कर्म्मविमुक्तः स्यादिति शेषः । स एव सदाचारस्य दमो यत् स्वधर्म्मवियोजनं नाम । विख्याप्यस्तेन रूपेण लोके प्रकाशनीयः । अङ्गच्छेदी परस्याऽङ्गच्छेत्ता वियोज्यः स्वधर्म्मे स्वधर्म्मं कर्त्तुं स्वातन्त्र्यमस्य बन्धनेनापहरेत् ।

कात्यायनः,—

मानवाः सद्य एवाहुः सहोढानां प्रवासनम् ।
सहोढमसहोढं वा सर्व्वस्वैर्विप्रयोजयेत् ॥
अयःसन्दानगुप्ताश्च मन्दभक्ता महाबलाः ।
कुर्य्युः कर्म्माणि नृपतेरामृत्योरिति कौशिकः ॥

अयःसन्दानेति पूर्व्वं बलान्विताः सन्तोऽयःसन्दानगुप्ता लोहनिगड़बद्धाः । मन्दभक्ताः कर्म्मयात्रोपयिकबलजनकभोजनभाजः । कर्म्माणि कुर्य्युरामृत्योरिति योजना ।

ब्राह्मणविषयञ्चैतद्वचनम् । तेन वृत्तस्वाध्यायवतः प्रवा-

---

१ ख घ पुस्तकद्वये बधाङ्गच्छेदने विप्रः ।

सनम्। तच्छून्यस्य धनवतः सर्व्वस्वहरणम्। निर्द्धनस्य तु तथाविधस्य बन्धनादिकमभिप्रेतमिति रत्नाकरः।

साहस-चौर्य्ययोर्यमः,—

न शारीरो ब्राह्मणस्य दण्डो भवति कर्हिचित्।
गुप्ते तु बन्धने बद्धा राजा भक्तं प्रदापयेत्॥
अथवा बन्धनं रज्वा कर्म्म वा कारयेन्नृपः।
मासार्द्धमासं कुर्व्वीत कार्य्यं विज्ञाय तत्त्वतः॥
यथापराधं विप्रन्तु विकर्म्माण्यपि[1] कारयेत्॥

गुप्ते रक्षिते यतः पलायनं न भवति। बन्धने कारागारे। विकर्म्माणि उच्छिष्टमार्जनादीनीति रत्नाकरः।

अत्र बृहस्पतिः,—

वृत्तस्वाध्यायवान् स्तेयी बन्धनात् क्लिश्यते चिरम्।
स्वामिने तद्धनं दाप्यः प्रायश्चित्तञ्च कार्य्यते॥

वृत्तमाह मनुः,—

गुरुपूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः।
प्रवर्त्तनं हितानाञ्च सर्व्वं तद्वृत्तमुच्यते॥

कात्यायनः,—

धनदानासहं बुद्धा स्वाधीनं कर्म्म कारयेत्।
अशक्तो बन्धनागारं प्रवेश्यो ब्राह्मणादृते॥
क्षत्रविट्शूद्रयोनिस्तु दण्डं दातुमशक्नुवन्।
आनृण्यं कर्म्मणा गच्छेत् विप्रो दद्याच्छनैः शनैः॥

---

१ घ पुस्तके विंकर्म्माण्यपि।

कर्म्मणाऽर्थनिस्तारानुरूपव्यापारेण[1]। विप्रस्तु न कर्म्मणानृण्यं गच्छेदपि तु क्रमेण दद्यादेवेति रत्नाकरः।

इह ब्राह्मणस्य कर्म्मकरणादिबोधकनानावचनविरोधे व्यवस्था प्रतिभाति।

यच्च ब्राह्मणस्य धनदण्डः क्रियते तच्च धनिकस्य यथा-विहितं सर्व्वस्वहरणं सहस्रपणादिग्रहणञ्च। साहसादिकञ्च निर्द्धनेनापि तेन यथोदयं देयमेव न तु कर्म्मणा परि-शोध्यम्। यस्य तु क्रमेणापि धनोदयसम्भावना नास्ति स धनदानासहः। तस्य कर्म्मणैव परिशोधनम्।

यच्च धनश्रुतिर्नास्ति तच्चोत्तमस्य वृत्तस्वाध्यायवतः समा-पत्तिसंभावनायां यथापराधं निगडेन रज्ज्वा वा रहसि बन्धनं प्रायश्चित्तानुष्ठापनञ्च। असमापत्तौ च प्रवासनम्। असमापत्तौ नाश इति प्रकीर्णकप्रक्रमोपक्रमे वक्ष्य-माणापस्तम्बवचनसंवादात्।

हीनस्य तु हानितारतम्याद्ब्राह्मणानुचितस्य परिचर्य्या-देरुच्छिष्टमार्जनादेर्वा विकर्म्मणः करणम्। प्रवासितस्या-समापन्नस्य हीनस्याहीनस्य वा वैवास्यादागत्य तथैव मन्द-क्रियानुवर्त्तिनो यावज्जीवं यावत्समापत्ति वा बन्धनमिति।

अथ बृहस्पतिः,—

साक्षिलेख्यानुमानेन सम्यग् दिव्येन वा जितः।
यो न दद्याद्देयदमं स निर्वास्यस्ततः पुरात्॥

---

१ क कर्म्मणा स्वनिस्तारार्थस्वरूपव्यापारेण।

जित इति निर्णीतदोषपुरुषमात्रपरम् न्यायसाम्यात्। एवञ्च साक्षिलेख्येत्यादिकमपि प्रमाणमात्रपरम्। वाकारो ऽनास्थायां देयं विवादविषयीभूतं दममपराधमूलकं दण्डम्।

सेयं भेदप्रभेदाभ्यां सम्भूयाष्टविधा व्यवस्था दण्डमातृके-त्युच्यते। इयञ्च सर्व्वत्रानुसन्धेया॥

इति श्रीवर्द्धमानकृतौ दण्डविवेके दण्डपरिकरपरिच्छेदः

प्रथमः॥ १॥

---

# अथ मनुष्यमारणदण्डः।

अविज्ञाते हन्तरि[1] तज्ज्ञानोपायमाह याज्ञवल्क्यः,—

अविज्ञातहतस्याशु कलहं सुतबान्धवाः।
प्रष्टव्या योषितश्चास्य परपुंसि रताः पृथक्॥

केन सहाऽस्य कलहो जात इति मृतस्य सुतादयः प्रष्टव्या इत्यर्थः।

प्रश्नप्रकारमाह स एव,—

स्त्रीद्रव्यवृत्तिकामो वा केन वाऽयं गतः सह।
मृत्युदेशसमापन्नं[2] पृच्छेच्चापि जनं शनैः॥

बृहस्पतिः,—

हतः संदृश्यते यत्र घातकस्तु न दृश्यते।
पूर्व[3]वैरानुमानेन ज्ञातव्यः स महीभुजा॥
प्रातिवेश्यानुवेश्यौ च तस्य मित्रारिबान्धवाः।
प्रष्टव्या राजपुरुषैः सामादिभिरुपक्रमैः॥

ज्ञातस्य हन्तुर्दण्डमाह बौधायनः,—

क्षत्रियादीनां ब्राह्मणवधे बधः सर्व्वस्वहरणञ्च। तेषामेव तुल्यापकृष्टबधे[4] यथाबलमनुरूपञ्च दण्डं कल्पयेत्। क्षत्रियबधे गोसहस्रं राज्ञ उत्सृजेत् वैरनिर्य्यातनार्थम्। शतं वैश्ये दश शूद्रे वृषभश्चात्राधिकः। शूद्रबधेन स्त्रीबधो

---

१ ग पुस्तके कर्त्तरि।　　२ मूले—समासन्नम्।

३ मूले—वैरानुसारेण।

४ घ ङ पुस्तकद्वये तुल्यावकृष्टबधे।

गोवधश्च व्याख्यातोऽन्यत्रात्रेय्या धेन्वनडुहोरन्ते चान्द्रायणं चरेत्। आत्रेय्या वधः क्षत्रियवधेन व्याख्यातः। हंस-भास-बर्हिण-चक्रवाक-वलाका-काकोलूक-मण्डूक-नकुलाहि-खञ्जरीट-वभ्रुनकुलादीनां वधे शूद्रवत्।

वैरनिर्य्यातनार्थमिति यो येन हन्यते स तमवध्यं हन्ति, अतः प्रायश्चित्तं कुर्य्यात्। तथा सति नासौ तेन हन्यत इति तन्निर्य्यातनं भवतीत्यापस्तम्बसूत्रे कपर्द्दि-भाष्यम्।

एवञ्चापस्तम्बीयेन समं बौधायनीयस्यैकरूपत्वात्। अथोदासीनं क्षत्रियं हत्वा पूतो भवतीत्युशनःसूत्र-संवादाच्च। यद्यपि प्रायश्चित्तपरत्वमस्य प्रतीयते।

तथापि राज्ञ इति लिङ्गात् दण्डपरत्वस्यापि प्रतीतेः प्रायश्चित्तरूप एवायं दण्डः। अभिगमदूषिताया ब्राह्मण्या यथोक्तशिरोमुण्डनादिवत्।

अतएव कामधेनौ धर्म्मपादे चार्थपादे च तुरीयांशे वचनमिदमवतारितम्। कल्पतरौ तु प्रायश्चित्तकाण्ड-व्यवहारकाण्डयोरवतारितम्।

आत्रेयी ऋतुमती स्त्री।

रजस्वलामृतुस्नातामात्रेयीमाहुरत्रये यदपत्यं भवतीति वशिष्ठदर्शनात्।

अत्रिगोत्रजा चात्रेयी। अत्रिगोत्रां वा नारीमिति विष्णुस्मरणादिति मिताक्षरा।

नकुलो जलनकुलः । बभ्रुनकुलः स्थलनकुलः । मण्डूकेत्यादिर्यथालिखितः पाठः कल्पतरौ दृष्टः । कामधेनौ तु मण्डूक-नकुलादीनामिति पाठः । एवमेव हलायुधनिबन्धः ।

खञ्जरीटिस्थाने तित्तिरि[१]केति रत्नाकरे पाठः । तद्व्याख्यानञ्च प्रमादः । वलाकेत्यत्र प्रचलाकेति पठित्वा प्रचलाकः कृकलास इति हलायुधेन व्याख्यातम् । आदिपदादन्येऽपि तिर्य्यञ्चो गृह्यन्ते ।

यदा क्षत्रियवैश्यशूद्रा ब्राह्मणं घ्नन्ति तदा तेषां सर्व्वस्वं गृहीत्वा बधः कार्य्यः । यदा तेषामेव क्षत्रियादीनां मध्ये तुल्यावकृष्टजातीयबधो भवति—यथा क्षत्रियः क्षत्रियवैश्यशूद्रान् हन्ति, वैश्यो वैश्यशूद्रौ, शूद्रः शूद्रमिति । तदा यथाबलं यथासामर्थ्यमनुरूपञ्च दण्डमुत्तमसाहसादिरूपं शारीरं वा दण्डं कल्पयेदिति रत्नाकरः ।

हलायुधेनानुरूपमित्यन्तरमुत्तमसाहसादिरूपं शारीरं वेति शूद्रमध्य एव पठितम् । अत्र शारीरो दण्डोऽङ्गच्छेदो न तु बधः शारीरेण व्यपदेशादन्यथा बध इत्येव ब्रूयात् इत्येकपक्षः ।

बधश्च शारीरस्तस्यैव शरीरसम्बन्धात् । आत्मनोऽवध्यत्वात् ।

शारीरस्त्ववरोधादिर्जीवितान्तस्तथैव च ।

इति नारदसंवादाच्च ।

---

१ क तिकतेरिकेति । ग तिकतेति ।

अङ्गच्छेदस्याङ्गेनैव व्यपदेष्टुमौचित्यात् साक्षात् सम्बन्धात्,—अङ्गिनः शरीरस्य परम्परया तदन्वयात् "शारीरोऽङ्गच्छेदो वा भवेत्"॥ इति शङ्खलिखितयोर्विकल्पोक्तिस्वरसात्।

उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम्।
चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च॥

इति मनुवचने दण्डस्थाने शरीरस्य पृथगुपादानस्वरसाच्च देहदण्डो मारणमिति कुल्लूकभट्टव्याख्यानादित्यपरः पक्षः।

अत्र प्रतिभाति। [1]स्वजातीयबधे बध एव हन्तुः। तत्र तस्यैवानुरूपत्वात् "घातने तु प्रमापणम्" इत्यापस्तम्बवचनसंवादाच्च।

विजातीयबधे तु ब्राह्मणकर्त्तृकेषु क्षत्रियादिबधेषु गोदण्डे दशम दशमभागक्रमेणापकर्षदर्शनात् तत्तुल्यन्यायात्। तथा तुल्यापकृष्टजातीयबधे उत्तमसाहसमत्यन्तापकृष्टजातीयबधे मध्यमसाहसमिति धनदण्डकल्पनम्।

तथा द्वयोर्हस्तयोरेकस्य हस्तस्य च्छेद इत्यादिशारीरदण्डकल्पनमुचितमानुरूप्यात्।

एवञ्च कल्पयेदिति विधिस्वरसोऽपि घटते। आर्थशारीरयोस्तु दण्डयोर्विकल्पो धनवत्त्वाधनवत्त्वाभ्यां बुद्धिपूर्व्वकत्वाबुद्धिपूर्व्वकत्वाभ्यामन्यथा स्थानान्तरवदेव व्यवस्थाप्य इति।

---

१ ख ग सजातीयबधे इति पाठः।

एवं क्षत्रियादिकर्तृके बधे व्यवस्थामभिधाय पारिशेष्यात् ब्राह्मणकर्तृके तामाह ।

क्षत्रियबध इत्यादि । ब्राह्मणस्य क्षत्रियबधे गोसहस्र-वृषभादिकं दण्डः ।

वैश्यबधे गोशतवृषभादिकम् । शूद्रबधे गोदशकवृषभादिकमित्यर्थः ।

तथा आत्रेयीव्यतिरिक्तस्त्रीबधे धेन्वनडुहव्यतिरिक्तगोबधे च शूद्रवत् । आत्रेयीबधे धेन्वनडुहबधे च क्षत्रियबधवत् । हंसभासादीनां बधे शूद्रबधवद्दण्ड इति रत्नाकरः ।

एवञ्च ब्राह्मणादीनां मध्ये यो यस्य क्षत्रियशूद्रयोर्बधे दण्डः स एव तेनात्रेय्या बधे देय इति गम्यते ।

अत्र परकीयाणामेषां बधे हन्तुः[१]-तत्स्वामिने तत्प्रतिनिधि-तन्मूल्ययोरेकतरदानमपीति दण्डपारुष्यप्रकरणे स्फुटम् ।

अत्रैव मनुः,—

हस्त्यश्वरथहन्तृंश्च हन्यादेवाविचारयन् ।

अविचारयन् तथाविधकर्म्मणि निश्चिते अविलम्बमानः ।

अत्र मर्म्मघाति-तदघातिषु प्रहर्तृषु विशेषमाह—बृहस्पतिः ।

एकस्य बहवो यत्र प्रहरन्ति रुषाऽन्विताः ।
मर्म्मप्रहारदो यस्तु घातकः स उदाहृतः ॥
मर्म्मघातिनमेतेषां यथोक्तं दापयेद्दमम् ।
[२]आरम्भकृत् सहायश्च दोषभाजस्तदर्द्धतः ॥

---

१ ख ग हन्ता ।   २ क ख ङ पुस्तकत्रये आरम्भकः ।

यथोक्तमिति यज्जातीयस्य प्राणिनो घातकतामधिकृत्य यो दण्ड उक्तस्तं मर्म्मघातिनमेव दापयेत्। यस्तु तत्रा-रम्भकृत् यश्च सहायस्तयोर्यथोक्तदण्डादर्द्धदण्डः।

अथ प्रेरकदण्डमाह—याज्ञवल्क्यः,—

यः साहसं कारयति स दाप्यो द्विगुणं दमम्।
तथैवमुक्ताहं दाता कारयेत् स चतुर्गुणम्॥

कारयेद्वचसेति रत्नाकरः। तथा यश्चाहं दातेत्येव-मुक्ता कारयति तस्य चतुर्गुणो दण्डो वर्णोत्कर्षादित्यर्थ—इत्याह।

कल्पतरावपि—अहं तुभ्यं दास्यामि धनं त्वमेवं कुर्वि-त्यभिधाय यः कारयति स चतुर्गुणं दाप्य इत्युक्तम्।

तथान्येषामपि केषाञ्चिद् घातकत्वमतिदिशति—कात्यायनः,—

आरम्भकृत् सहायश्च तथा मार्गानुदेशकः।
आश्रयः शस्त्रदाता च भक्तदाता विकर्म्मिणाम्॥
युद्धोपदेशकश्चैव तद्विनाशप्रवर्त्तकः।
उपेक्षाकार्य्ययुक्तश्च दोष[1]वक्ताऽनुमोदकः॥
अनिषेद्धा क्षमो यः स्यात् सर्व्वे ते कार्य्यकारिणः।
यथाशक्त्या(क्त्य)नुरूपञ्च दण्डमेषां प्रकल्पयेत्॥

सहायो व्यवहितः—अन्यस्य बध्यत्वात्। तद्विनाश-प्रवर्त्तको। युद्धोपदेशं विनैव विषदानादिना नाशप्रवर्त्तक इति रत्नाकरः। तद्विनाशोपायोपदेशक इति कल्पतरुः।

---

१ ग पुस्तके—रन्नानुमोदकः।

उपेक्षाकारी निषेधे साक्षाद्क्षमोऽपि परद्वाराऽपि [1]निषेधानुकूल्याकारी। अयुक्तो दोषवक्तेति राज्ञा अनियुक्तोऽपि घातनीयदोषवक्ता—इत्यर्थः। अयुक्तो घातकासम्बन्ध इत्यन्ये।

हलायुधेन तु अयुक्तस्येति पठित्वा अयुक्तस्यान्याय्यस्य सामर्थ्ये सत्युपेक्षाकारीति व्याख्यातम्।

तथा पैठीनसिः,—

हन्ता मन्त्रोपदेष्टा च तथा संप्रतिपादकः।
प्रोत्साहकः सहायश्च तथा मार्गानुदेशकः॥
उपेक्षकः शक्तिमांश्च दोषवक्ताऽनुमोदकः।
अकार्य्यकारिणामेषां प्रायश्चित्तन्तु कल्पयेत्।
यथाशक्त्यनुरूपञ्च दण्डञ्चैषां प्रकल्पयेत्॥

एवमन्येऽप्यवकाशदानादिना घातकोपकारिणः स्तेयप्रकरणीया इहोदाहरणीयाः।

व्यासः,—

ज्ञात्वा तु घातकं सम्यक् ससहायं सबान्धवम्।
हन्याच्चित्रैर्बधोपायैरुद्वेगजनकैर्नृपः॥

सहायोऽत्रात्यन्तसन्निहितो विवक्षितः। बान्धवाश्च ये साहसकर्त्तारं ज्ञात्वाऽपि न तं परित्यजन्ति त एवाचोक्ता इति रत्नाकरः।

अत्र साक्षात्प्रयुक्त्यनुग्रहानुमतिनिमित्तभेदात् पञ्चविधो बधः स चास्माभिर्द्वैतविवेके भेदप्रभेदाभ्यां विस्तरेण प्रपञ्चितः।

---

१ ग पुस्तके निषेधानवनुकूलकारी।

तत्रानुग्राहकादीनां प्रत्यासत्तिव्यवधानापेक्षया व्यापार-गतगुरुलाघवापेक्षया च फलगुरुलाघवात् प्रायश्चित्तगुरु-लाघवं तत्रैव व्यवस्थितम्। यथा अनुग्राहकस्य पादोनं प्रयोक्तुरर्द्धम्। अनुमन्तुः सार्द्धपादः। निमित्तिनान्तु पाद इति।

एवं व्यवस्थिते प्रायश्चित्ते यत्र विशेषवचनं नास्ति तत्र दण्डोऽप्येवमेव द्रष्टव्यः। द्वयोस्तुल्ययोगक्षेमत्वात्। उभयत्र व्यवधानाऽव्यवधानयोरनुरोध्यत्वात्। पैठीनसिवाक्ये द्वयो-स्तुल्यवत् कल्पनीयत्वोपदेशाच्च।

निमित्तिनस्तु आक्रोशनादिदण्ड एव न तु हिंसा-दण्डोऽपि तत्र तस्याभिसन्धानाभावात्। अतएवाततायिनि प्रमादमृते दण्डाभावमाह मिताक्षराकारः।

यत्र तु विधिप्राप्तमाक्रोशनादि तत्र तद्दण्डोऽपि नास्ति। उक्तञ्च भवदेवभट्टेन। यदा विहितवाग्दण्ड-धनदण्ड-शारीरादिदण्डेष्वपराधानुरूपेषु गलपाशादिना म्रियते तदाऽपि न दोषः। मन्यूत्पादनेऽपि दण्डानां विहितत्वेन निषेधानवकाशात्। यतो न हिंस्यादित्यनेन साक्षात्-परप्राणवियोगफलव्यापारकर्त्तृत्वं निषिध्यते।

न च निमित्तिनो वाग्दण्डनिमित्तातिरिक्तव्यापारे कर्त्तृत्वमस्ति तदेव हि मन्यूत्पादनद्वारेण परम्परया बध-कारणमतः कथं तस्य निषेधविषयत्वमपीति।

एवञ्च प्रयोज्यस्यापि विध्यतिक्रमनिबन्धनं पापमात्रं न तु दण्डोऽपि। स्थपतेः स्वर्ग इव हिंसायां तस्य स्वरसा-

भावात्। परप्रयुक्त्या प्रवर्त्तमानस्य तत्पुत्रादिस्थानीयत्वात्। स्वामिप्रयुक्त-हय-हस्ति-कुक्कुर-वानरादिवत् प्रवृत्तेः पराधीनत्वात्।

एवञ्च यथा तत्र स्वामिन एव दण्डः। पुत्रापराधेन पितेत्यादि दण्डपारुष्य-दण्डमातृकालिखितनारदवचनस्वरसात्। एवमिहापि प्रयोजक एव दण्ड्यो न तु प्रयोज्योऽपि न्यायसाम्यात्। दर्शितञ्चैव तदर्थं बृहस्पतिवचनं स्तेयदण्डमातृकायाम्।

इत्थमपराधानुसारेण दण्डव्यवस्थितौ ज्ञात्वा तु घातकमित्यादिव्यासवाक्ये रत्नाकरीयं बान्धवव्याख्यानं चिन्त्यम्।

न हि साहसिकापरित्यागमात्रं प्ररूढो दोषो येन तत्र बधः स्यात्। साहसानभिसन्धायिनोऽपि स्नेहादिनाऽपि तत्सम्भवात्। तस्माद् ये बान्धवाः साहसिनं न निवारयन्ति प्रत्युत साहसफलार्थितया स्वयमपराधयन्तः परं प्रेरयन्ति तेषां तत्तुल्ययोगक्षेमत्वादयं दण्डविधिः।

अन्यथा घातकाश्चोपघातकाः स्वशरीरेण दण्ड्याः स्युरिति यमवचने स्वशरीरेण दण्डोऽप्यत्रापराधानुरूपो विवक्षित इति रत्नाकरीयमेव व्याख्यानं विरुध्यते।

अथ नारदः,—

अयुक्तं साहसं कृत्वा प्रत्यासत्तिं भजेत यः।
ब्रूयात् स्वयं वा सदसि तस्यार्द्धविनयः स्मृतः॥

[1]गूहमानस्तु दौःशील्यात् यदि पापः स जीवति ।
सभ्याश्चास्य प्रदुष्यन्ति तीव्रो दण्डश्च पात्यते ॥

अत्र प्रत्यासत्तिं विनयकर्त्तृसान्निध्यं यः कुर्य्यात् । यो मयेदं साहसं कृतमिति ब्रूयात् स साहसमगूहमानः । तस्यानधिको दण्डः । गूहमानस्य त्वधिक इति श्लोकार्थ इति रत्नाकरः ।

हलायुधस्तु—साहसकार्य्यमन्यायसाहसं कृत्वा प्रत्यासत्तिं प्रायश्चित्तं यदि भजते स्वयमेव सदसि साहसकर्त्तृत्वं निवेद्य दण्डो मे क्रियतामिति वा वदेत् तस्य यथोक्तदण्डादर्द्धदण्डः । यस्तु दौःशील्यं गूहमानस्तस्मादेव जीवति तस्य चेङ्गितादिभिः सभ्याः साहसकारित्वं निश्चित्य तस्य स्वल्पेऽपि साहसे तीव्रो दण्ड इत्यर्थ इत्याह ।

द्वयमपि चैतदर्थगत्या युक्तमेव ।

अत्र यः साहसं कारयतीत्यादिवचनानां रत्नाकरे पञ्चविधं साहसमुपक्रम्यावतारणाद् याज्ञवल्क्य-नारद-वचनयोः साहसस्यैव श्रवणात् कात्यायनवचने तदश्रुतावपि रत्नाकरकृता तदुभयमध्यपाठस्वरसात् स्तेयादिष्वप्येष दण्डो दण्डविशेषश्च द्रष्टव्यः ॥

इति श्रीवर्द्धमानकृतौ दण्डविवेके मनुष्यमारणदण्डपरिच्छेदो द्वितीयः ॥

---

१ क ख ग पुस्तकेषु गृह्यमाणस्तु ।

# अथ स्तेयदण्डः ।

तत्र स्तेयं नाम अनैयायिकं परस्वग्रहणमिति स्थितिः । तत्र विशेषमाह मनुः,—

स्यात् साहसं त्वन्वयवत् प्रसभं कर्म्म यत्कृतम् ।
निरन्वयं भवेत् स्तेयं कृत्वाऽपव्ययते च यत् ॥

अन्वयवत् रक्षिपुरुषसमक्षम् । अपव्ययते अपह्नुते । तेन प्रसभं बलात्कारेण रक्षकमभिभूय यत्रापहारस्तत्र साहसमेव न तु स्तेयम् ।

अगोपनाद् यत्र छलेन रक्षिसमक्षकृतोऽप्यपहारो गोप्यते, तदेकं स्तेयं ग्रहणस्यापह्नवात् । यत्र तु रक्षिणोऽन्वय एव नास्ति किन्तु ततोऽपहार्य्यापहारस्तदपरं स्तेयम् । उभयत्र स्तेयमुक्तमपह्नव इति कात्यायनसंवादात् ।

तेन प्रथमाऽपहर्त्ता वस्तुतस्तस्करोऽपि साहसोक्तदण्डप्राप्त्यर्थं साक्षिविशेषदिव्यविशेषपरिग्रहार्थं च साहसिक इत्युच्यते । द्वितीयः प्रकाशतस्करो रक्षिणः प्रकाश्यैवापहारात् । तृतीयोऽप्रकाशतस्करः सुप्त-मत्त-प्रमत्तार्त्तानामप्रकाशमपेक्ष्यापहारात् । सर्व्वत्र चात्रापहर्त्तुः सकाशादपहृतं द्रव्यं स्वामिनो दापयित्वा तं तमपराधं लोके कथयित्वा दण्डः कार्य्यः ।

तथाच बृहस्पतिः,—

संसर्गलोप्त्रचिह्नैश्च विज्ञाता राजपूरुषैः ।
प्रदाप्यापहृतं शास्या दमैः शास्त्रप्रदेशितैः ॥

इह संसर्गादिकं राजपुरुषाणां ग्रहणनिमित्तं न तु निश्चायकमविनाभावाभावात्।

अतएव नारदः,—

अन्यहस्तात् परिभ्रष्टमकामादुद्धृतं पथि[1]।
चौरेण वा प्रतिक्षिप्तं लोप्त्रं यत्नात् परीक्षयेत्॥

तस्माच्चौरत्वनिश्चयो दृष्टेनादृष्टेन वा प्रमाणेनैवेति स्थितम्।

मनुः,—

तेषां दोषानभिख्याप्य स्वे स्वे कर्म्मणि तत्त्वतः।
कुर्व्वीत शासनं राजा सम्यक् सारानुसारतः॥

येषु पुनः स्तेनत्वमृषिभिरतिदिष्टं तेषां दण्ड एव। उपदेशादतिदेशस्य तदेकार्थत्वात् न तु हृतदानमस्मरणात्। के पुनस्ते—

तत्र याज्ञवल्क्यः,—

भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान्।
दत्त्वा चोरस्य हन्तुर्वा जानतो दण्ड उत्तमः॥

अवकाशो वासस्थानम्। अग्निश्चोरस्य शीतापनोदनाद्यर्थः। उदकं तृषितस्य तृप्त्यर्थम्। मन्त्रश्चौर्य्यप्रकारोपदेशः। उपकरणं चौर्य्यसाधनं शस्त्रादि। व्ययोऽपहर्त्तुं गच्छतः पाथेयम्। जानत इति वचनात् तस्य चोरत्वं हन्तृत्वं चाज्ञात्वा भक्तादिदाने दोषाभावः।

---

१ मूले कामादुपगतं भुवि।

मनुः,—

अग्निदान् भक्तदांश्चैव तथा शस्त्रावकाशदान् ।
सन्निधातॄंश्च मोषस्य हन्याच्चौरानिवेश्वरः ॥

अग्निदान् गृहदाहाद्यर्थमिति नारायणः । सन्निधातॄन् मोषणीयद्रव्यानुकूलसन्निधानकारकानिति रत्नाकरः । मुष्यत इति मोषश्चौरधनं तस्यावस्थापकानिति मनुटीकायां कुल्लूकभट्टः ।

नारायणस्तु गृहदाहादिकमयं करिष्यतीति ज्ञात्वाऽपि सन्निधातॄन् वा तत्तत्स्थानसमीपनेतॄन् मोषस्य चौरस्य वेत्याह । एतच्च भयाज्ज्ञानविरहे नेयमिति रत्नाकरः ।

अत्र विष्णुः—हन्यादित्यनुवृत्तौ,—

प्रसह्य तस्कराणामवकाशभक्तदांश्चान्यत्र राजशक्तेः ।

यदि राजा चौरनिराकरणाप्रभविष्णुस्तदा स्वरक्षणाय चौरभक्तादिदानेऽपि न दोष इत्यर्थः ।

हलायुधेन तु आसक्तेरिति पठित्वा अन्यत्र राजासक्तेर्विना राजसम्बन्धात्, तेन यो राजाज्ञयैव चौराणां विश्वासार्थं भक्तादिदानं करोति नासौ बध्य इति व्याख्यातम् ।

इह स्तेन-भक्तदात्रादीनां वास्तवं स्तेयं नास्ति । [१]तदनुकूलितया तदतिदेशमाश्रित्य तदुक्तदण्डोपदेशः काममस्तु किन्तु दोषतारतम्याद्दण्डतारतम्यमनुरोध्यम् । मनुष्यमारणप्रकरणपरिसमाप्तिनिरुक्तन्यायात् व्यवहारशास्त्रसिद्धान्तात् ।

---

१ ग तदनुकूलिततया ।

न चेदमुचितं सन्धिच्छेत्तुस्तद्भक्तदातुश्च तुल्यो दण्ड इति। तस्मादिदमपि दण्डगौरवमनुबन्धगौरवादिति नेयम्।

अथ नारदः,—

भक्तावकाशदातारः स्तेनानां ये प्रसर्पताम्।
शक्ताश्च ये उपेक्षन्ते तेऽपि तद्दोषभागिनः॥

चौरस्यावग्रहं कर्त्तुं ये समर्थास्त्यजन्ति तेऽपि चौरा इत्यर्थः।

मनुः,—

राष्ट्रेषु रक्षाधिकृतान् सामन्तांश्चैव देशितान्।
अभ्याघातेषु[1] मध्यस्थान् शिष्याच्चौरानिवेश्वरः॥

सामन्तान् ग्रामवासिनः समन्तात् समीपस्थितान्। देशितान् रक्षार्थमादिष्टान्। अभ्याघातेषु चौरैः क्रियमाणेषु घातेषु मध्यस्थान् उपेक्षकान्।

कात्यायनः,—

आह्वायका देशकरास्तथा चान्तरदायकाः।
समदण्डाः स्मृताः सर्व्वे ये च प्रच्छादयन्ति तान्॥

आह्वायकेत्यादौ चौराणामिति शेषः। आह्वायकाः प्रेरकाः। अन्तरमवकाशस्थानमिति यावत्।

सर्व्वश्चायमतिदेशो मनुष्यमारणेऽपि द्रष्टव्यः। चौरस्य हन्तु र्वेति याज्ञवल्क्यादिभिरुभयोपादानात्।

अथ कात्यायनश्चौराणामित्यनुवृत्तौ,—

क्रेतारश्चैव भाण्डानां प्रतिग्राहिण एव च।
समदण्डाः स्मृताः सर्व्वे ये च प्रच्छादयन्ति तान्॥

भाण्डानां चोरितद्रव्याणाम्।

---

१ क पुस्तके अभ्यागतेषु।

मनुः,—

योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम् ।
याजनाध्यापनेनापि यथा स्तेनस्तथैव सः ॥

अदत्तादायिनश्चोरस्य लिप्सेतेति ग्रहणपरं सन् प्रयोगस्य निदिध्यासनादिवदार्थत्वेनाविवक्षितत्वात् । धनमिति परकीयमिति ज्ञात्वेति शेषः ।

इहापि मनुष्यमारणप्रकरणपरिसमाप्तिनिरुक्तन्यायाद् यथा तथेति श्रवणाच्च स्तेनद्रव्यक्रेतुस्तत्परिग्रहीतुश्च स्तेनत्वातिदेशमात्रमेव, वास्तवस्य स्तेयस्याभावात् ।

तदपि तदुक्तदण्डप्राप्त्यर्थमेव प्रकरणात् न तु प्रायश्चित्ताद्यतिदेशपरम् । अतः स्तेनहस्ताद्ब्राह्मणस्वमपि सुवर्णं क्रीत्वा गृहीत्वा वा महापातकित्वं न भवतीति ध्येयम् ।

यत्तु याज्ञवल्क्यवचनम्,—

गृहीतः शङ्कया यस्तु स्वमात्मानं न शोधयेत् ।
दापयित्वा हृतं द्रव्यं चौरदण्डेन दण्डयेत् ॥ इति

तच्च न चौरत्वातिदेशः, अपि तु संसर्गादिदर्शनेन चौरतयाऽभियुक्तस्य विचारवैमुख्यं चौरतामेव निश्चाययतीति युक्तं ततो हृतदापनम् ।

अतएव यत्र निश्चायकस्यान्यथासिद्ध्या क्रमेणापि स निश्चयो भ्रमत्वेनावसीयते तत्र गृहीतपरां वृत्तिमाह—

कात्यायनः,—

अचौराद्दापितं द्रव्यं चौरान्वेषणतत्परैः ।
उपलब्धे (?) लभेरंस्तद्द्विगुणं तत्र दापयेत् ॥

निश्चितचौर्य्यादन्यतो हृतद्रव्ये लब्धे पूर्व्वं गृहीतं द्विगुणं कृत्वा चौरग्राहकसकाशादचौराय दद्यादित्यर्थः।

अथ बृहस्पतिः,—

प्रभुणा विनियुक्तः सन् भृतको विदधाति यः।
तदर्थमशुभं कर्म्म स्वामी तत्रापराध्नुयात्॥

तदर्थं स्वाम्यर्थं, अशुभं कर्म्म चौर्य्यादि, स्वामीति स्वामिन एव तत्र दोषो न भृत्यस्येत्यर्थः।

अपराध्नुयादिति दण्डभाग्भवेदिति कल्पतरुः। एतच्च दण्डपारुष्यादिष्वप्यनुसन्धेयम्। इह दण्डाभावमात्रे तात्पर्य्यम्, पापन्तु भृत्यस्यापि भवत्येवेति मनुष्यमारणपरिच्छेदपरिसमाप्तौ प्रपञ्चितम्।

भृतकभेदानाह बृहस्पतिरेव,—

आयुधी चोत्तम[१]स्तेषां मध्यमः सीरवाहकः।
भारवाहोऽधमः प्रोक्तस्तथैव गृहकर्म्मकृत्॥

अथ याज्ञवल्क्यः,—

देयं चौरहृतं द्रव्यं राज्ञा जानपदाय च।
अददत् [२]स समाप्नोति किल्विषं तस्य यस्य तत्॥

जानपदाय स्वदेशवासिने, तस्य यस्य तदिति यदि चौरहस्तादादाय राजा स्वयमुपभुङ्क्ते तदा तस्य चौरस्य तद्द्रव्यमपहारेण सम्बन्धि जातं तस्य किल्विषमाप्नोतीति मिताक्षराकारः।

---

१ ग पुस्तके प्रथमस्तेषां।

२ क ग पुस्तकद्वये अददच्च।

अत्र कात्यायनः,—

चौरैर्हृतं प्रयत्नेन स्वरूपं प्रतिपादयेत् ।
तदभावे तु मूल्यं स्यादन्यथा किल्विषी नृपः ॥

स्वरूपं यदपहृतं द्रव्यं सैव व्यक्तिः ।

तथा,—

लब्धे च चौरे यदि च मोषस्तस्मान्न लभ्यते ।
दद्यात्तमथवा चौरं दापयेत्तु यथेष्टतः ॥

मोषो मुषितद्रव्यं स यत्र चौरसकाशान्न लभ्यते तत्र [1]मूल्यं वा राजा स्वयं स्वामिने दद्यात् चौरमेव वा तस्मिन् विसृजेत् । इच्छया तु तथा कुर्य्याद्यथा चौरस्तमस्मै ददातीत्यर्थः ।

अथ यत्र चौरोऽपि न लभ्यते तत्रापस्तम्बः,—

ग्रामेषु नगरेष्वार्य्यान् शुचीन् सत्यशीलान् प्रजागुप्तये निदध्यात् तेषां पुरुषास्तथागुणा एव स्युः सर्व्वतो योजनं नगरं तस्करेभ्यो रक्ष्यं क्रोशो[2] ग्रामेभ्यः अत्र यन्मुष्येत तैस्तु प्रतिपाद्यम् ।

ग्रामनगरयोस्तत्पर्य्यन्तभूमौ च क्रोशरूपायां योजनरूपायां वा यन्मुषितं तत्तद्रक्षका एव दापयितव्या इत्यर्थः ।

कात्यायनः,—

गृहेषु मुषितं राजा चौरग्राहांस्तु दापयेत् ।
आरक्षकांस्तु दिक्पालान् यदि चौरो न लभ्यते ॥

चौरग्राहो विशिष्टसार्व्वत्रिकचौरान्वेषणकर्म्मणि नियुक्तः । दिक्पालो दिक्षु नियुक्तः स च स्थानपाल इति

१ ग मूल्यद्वारा । २ घ क्रोशो ।

मिताक्षरा। देशपतिरिति प्रसिद्धो देशपाल इति रत्नाकरः। यत्र ग्रामे विशिष्टरक्षानियुक्तो नास्ति तद्विषयमिदम्।

यत्र चौरग्राही दिक्पालो वा नास्ति। तत्र याज्ञवल्क्यः,—

स्वसीम्नि दद्यात् ग्रामस्तु पदं वा यत्र गच्छति।
पञ्चग्रामी बहिः क्रोशाद्दशग्राम्यथवा पुनः॥

अथवेति वाकारोऽनास्थायां अत्र ग्रामाध्यक्षे सति स एव दद्यात्।

ग्रामान्तेषु हृतं द्रव्यं ग्रामाध्यक्षं प्रदापयेत्।
इति कात्यायनसम्वादात्।

तदभावे तु ग्रामो दद्यात्। ग्रामपदञ्चात्र ग्रामवासिलोकपरं ग्रामः पलायते इतिवत्। एतच्च यदि सीम्नो बहिश्चौरस्य पदं निर्गच्छति तदा बोद्धव्यम्। निर्गते तु तस्मिन् यत्र तत्प्रविष्टं स एव ग्रामस्तदध्यक्षो वा दद्यात्।

अनेकग्राममध्ये क्रोशाद्बहिःप्रदेशे मोषे जाते जनसम्मर्द्दादिना चौरपदे भग्ने समाहूताः पार्श्वग्रामाः पञ्च वा दश वा न्यूनाधिका वा [१]यथाप्रत्यासन्ना अपहृतद्रव्यं दद्युरित्यर्थः।

एतच्चाज्ञानकर्त्तृके मनुष्यमारणेऽपि द्रष्टव्यं घातितेऽपहृते दोष इत्युपक्रम्य याज्ञवल्क्येनाभिधानात्।

---

१ ग ङ पुस्तकद्वये यथाप्रत्यासत्त्यपहृतद्रव्यम्।

अथ विष्णुः,—

चौरापहृतं धनमवाप्य सर्व्वमेव सर्व्ववर्णेभ्यो दद्यात्। अनवाप्य स्वकोषादेव दद्यात् ।

सर्व्वमेवेति न तु निध्यादिवद्भागग्रहणपूर्व्वकमित्यर्थः । स्वकोषादिति अदाने किल्विषस्मरणादन्यतो दापयितुमशक्तः स्वयमेव राजा दद्यादित्यर्थः ।

अत्र वृद्धमनुः,—

तस्मिंश्चेद्दाप्यमानानां भवेन्मोषे तु संशयः ।
मुषितः शपथान् दाप्यो बन्धुभिर्वा विशोधयेत् ॥

इयत् मुषितमियद्वा इति संशये निर्णयार्थं मुषितधनस्वामी शपथं कुर्य्यात् दृष्टेनैव वा प्रमाणेन बोधयेदित्यर्थः ।

इति स्तेयदण्ड[१]मातृका ।

---

१ ग पुस्तके स्तेयमातृका ।

अथ प्रकाशतस्करेषु बणिक् द्विविधः ।

एकः क्रयविक्रयोपजीवी आपणिकादिः । अपरो द्रव्य-निर्माणोपजीवी सुवर्णकार-चर्म्मकारादिः । तत्र विक्रेता द्विविधः कूटव्यवहारी कूटकारी च । तयोः कूटव्यवहारी द्विविधः स्थावरो जङ्गम इति सम्भूय चत्वारो बणिक्-स्वरूपाः[१] ।

तेषु कूटव्यवहारिणः स्थावरस्य बणिजो दण्डमाह ।

याज्ञवल्क्यः,—

मानेन तुलया वापि यो हरेदंशमष्टमम् ।
दण्डं प्रदाप्यो द्विशतं वृद्धौ हानौ च कल्पितम् ॥

मानं प्रस्थद्रोणादि, तुला सुवर्णादितुलनदण्डः । एतच्च प्रतिमानस्याप्युपलक्षणम् ।

तुलामानप्रतिमानैः प्रतिरूपकलक्षितैः ।
चरन्नलक्षितैर्वापि प्राप्नुयात् पूर्व्वसाहसम् ॥

इति कात्यायनवचनात् ।

तच्च सुवर्णादिमाननिश्चयार्थं राजचिह्नाङ्कितं शिला-शकलादि प्रतिमानेति प्रसिद्धम्। सर्व्वत्र चात्र कूटत्वं विवक्षितं प्रतिरूपकलक्षितैरिति कात्यायनसंवादात् ।

अष्टमांशः परिमातस्य द्रव्यस्य । द्विशतं पणानां वृद्धा-वित्याद्यपहृतद्रव्यस्याष्टमांशापेक्षया यदि वृद्धिर्दृश्यते यदि वा हानिर्दृश्यते तदा कल्पितं दण्डमपहर्त्ता दाप्यः। कल्पना च द्विशतानुसारेणैव तेनाष्टमादंशादधिकापहारे द्विशतादधिको दण्डो न्यूनापहारे न्यून इत्यर्थः ।

---

१ क ग बणिक्विकल्पाः ।

एवञ्चात्र कात्यायनीयं पूर्व्वसाहसाभिधानं साहसेषु च शङ्खलिखितादीनां न्यूनाधिकसंख्याकथनमपहृतद्रव्यस्याष्टमांशापेक्षया न्यूनाधिकभावमादाय समञ्जसमिति द्रष्टव्यम् ।

यत्तु,—

कूटतुलामानप्रतिमानव्यवहारे शारीरोऽङ्गच्छेदो वा ।

इति शङ्खलिखितवचनम् ।

तत्र शारीरो मुण्डनरूपः, अङ्गच्छेदः कर्णाद्यन्यतमच्छेदः । अत्र कल्पे गौरवागौरवाभ्यां विकल्पव्यवस्थितिरिति रत्नाकरः ।

इह च,—

तुलामानविशेषेण लेख्येन गणितेन च ।

इति व्यासोक्तयोर्लेख्यगणितयोरपि [1]दोषेऽनुक्तोऽपि द्विशतादिरेव दण्डस्तुल्ययोगक्षेमत्वात् ।

एतद्वचनं पठित्वा रत्नाकरादौ याज्ञवल्क्यवचनावतारणाच्च ।

तथा,—

समैश्च विषमं यत्र चरेद्वा मूल्यतोऽपि वा ।
[2]स प्राप्नुयाद्दमं पूर्व्वं नरो मध्यममेव वा ॥

इति मनुवचने द्वयोः सकाशात् समं मूल्यं तयोरेकस्योत्कृष्टमन्यस्यापकृष्टं पण्यं वैषम्येण ददानः पूर्व्वसाहसं दाप्यः । समे द्रव्ये क्रेतव्ये क्वचिदधिकं मूल्यं वैषम्येण गृह्णन् मध्यमसाहसं दाप्य इत्यर्थः । इति रत्नाकरः ।

---

१ ग अल्पदोषः ।　　२ क ग पुस्तकद्वये संप्राप्नुयात् ।

विनिमयप्रवृत्तयोः क्रयप्रवृत्तयोर्वा द्वयोरेकतरस्यार्थित्वं ज्ञात्वाऽल्पमूल्येन बहुमूल्यं परिवर्त्तयन्नल्पमूल्ये विक्रेये बहुमूल्यं गृह्णन् पूर्व्वसाहसं मध्यमसाहसं वा धनापेक्षया दाप्य इत्यर्थः। इति हलायुधः।

अत्र पूर्व्वव्याख्याने पूर्व्वमध्यमसाहसयोर्या विषमव्यवस्था श्रूयते। साऽपहृतद्रव्य-न्यूनाधिकभावमादाय समर्थनीया अन्यथा अदृष्टार्थत्वापातात्।

अनुबन्धविशेषापेक्षया प्रथममध्यमसाहसविकल्प इति मनुटीकायां कुल्लूकभट्टः।

नारायणस्तु,—

समैस्तु ऋजुशीलैर्विषमं चरेत् वक्रं व्यवहरेत्। मूल्यतो विषमं चरेदधिकं गृह्णीयात्। तेन पूर्व्वत्र पूर्व्वं साहसमुत्तरत्र मध्यममित्याह।

मनुः,—

अबीजविक्रयी यस्तु बीजोत्क्रोष्टा तथैव च।
मर्य्यादाभेदकश्चैव विकृतं प्राप्नुयाद्वधम्॥

अबीजं बीजतया यो विक्रीणीते सोऽबीजविक्रयी क्षेत्रादावुप्तं बीजमन्यत्र नयति स बीजोत्क्रोष्टा[1] इति हलायुधः। उप्तबीजमुत्खननेन यो हरति तथेति रत्नाकरः।

अबीजमेव कतिचिदुत्कृष्टक्षेत्रक्षेपणेन पूर्व्वमिदं सोत्कृष्टमिति कृत्वा यो विक्रीणीते स तथेति कुल्लूकभट्टः।

बीजकाले तस्य महार्घतार्थमुत्कर्षकारीति नारायणः।

१ घ पुस्तके बीजोत्क्रुष्टा।

अनयोर्नासा-कर-चरण-कर्णादिच्छेदरूपो विक्रतौ घात इत्यर्थः । यश्च परोप्तं क्षेत्रं बलेन वहति स बीजोत्क्रोष्टेति मिश्राः ।

याज्ञवल्क्यः,—

सम्भूय वणिजां पण्यमनर्घेणावरुन्धताम् ।
विक्रीणतां वाऽभिहितो दण्ड उत्तमसाहसः ॥

अनर्घेणानुचितमूल्येन अवरुन्धतां विक्रीणताम् ।

मनुः,—

राज्ञः प्रख्यातभाण्डानि प्रतिषिद्धानि यानि च ।
तानि निर्हरतो लोभात् सर्व्वहारं हरेन्नृपः ॥

यान्यतिशयेन राजोपभोगयोग्यत्वेन प्रसिद्धानि करि[१]-तुरगादीनि मणिमुक्तादीनि च ।

अत्र मनुटीकायां स्वदेशोद्भवानीति विशेषितम् । तथा यानि दुर्लभाणि धान्यादीनि नैतान्यन्यत्र देशे विक्रेतव्यानीति राज्ञा प्रतिषिद्धानि तान्यन्यत्र देशे लोभात् विक्रीणानेन वणिजा यत्किञ्चिद्भाण्डेनार्ज्जितं तत्तत्सर्व्वं राजा हरेदित्यर्थः ।

अत्र याज्ञवल्क्यः,—

व्यासिद्धं राजयोग्यञ्च विक्रीतं राजगामि तत् ।

मूल्यदाननिरपेक्षं राजा हरेदित्यर्थः ।

शारीरोऽङ्गच्छेदो वा दण्ड इत्यनुवृत्तौ ।

शङ्खलिखितौ,—

प्रतिषिद्धभाण्डनिर्हारे ।

---

१ ख घ करिवरादीनि ।

निर्हारे विक्रये। अत्र नाशितभाण्डमूल्यो यदि बणिक् तदैवमित्यविरोधः।

एवञ्च राजयोग्यमपि विक्रीय यदि मूल्यदानाशक्तः स्यात्तदाऽयमेव दण्डो न्यायसाम्यादिति रत्नाकरः।

अथ कूटव्यवहारिणो जङ्गमस्य बणिजो दण्डमाहतुर्मनुनारदौ,—

शुल्कस्थानं परिहरन्नकाले क्रयविक्रयी।
मिथ्यावादी च संख्याने दाप्योऽष्टगुणमत्ययम्॥

शुल्कं क्रयविक्रयादौ राजग्राह्यं तस्य स्थानं राजव्यवस्थापितं नदीनगरपर्व्वताद्यधिकरणं यदि तदुत्पथगमनेन परिहरन् बणिगकाले निशादौ क्रयं विक्रयं वा। संख्याने परिमाणे वस्तुनो मिथ्यावादी भवति, शुल्कखण्डनार्थमल्पसंख्या वक्तीति यावत्तदा क्रीतविक्रीतमूल्यादष्टगुणमित्ययं दण्डो दाप्य इति रत्नाकरः। शुल्कस्योपस्थितत्वात्तदपेक्षयैवाष्टगुणत्वमिति प्रतिभाति व्याख्यातञ्च सर्व्वज्ञेन। अत्ययं राज्ञो यदुचितं शुल्कमिति।

विष्णुः,—

शुल्कस्थानमनाक्रामन् सर्व्वापहारमाप्नुयात्।

अनाक्रामनप्रविशन् परिहरन्निति यावत्। सर्व्वस्वापहारं सर्व्वस्वापहरणं एतच्च वारंवारं शुल्कस्थानपरीहारविषयमतो न विरोधः[1]।

---

१ क ख इत्यविरोधः।

स्वयं शुल्कस्थानप्रविष्टस्य जङ्गमस्य स्थावरस्य च विक्रेतुः कियद्देयमित्यत्र । विष्णुः,—

[1]स्वदेशपण्याच्छुल्कांशं दशममादद्यात् । परदेशपण्याच्च विंशतितमम् ।

स्वदेशपण्ये वणिजामुत्पन्नलाभे दशमांशं राजा गृह्णीयात् परदेशपण्य उत्पन्नलाभे विंशतितममित्यर्थः ।

अचाशुनाशिनि द्रव्यविशेषे विशेषमाह गौतमः,—

राज्ञ इत्यनुवृत्तौ,—

मूलपुष्पौषधमधुमांसतृणेन्धनानां षष्टिः क्षणधर्म्मि-त्वात्तेषु नित्ययुक्तः स्यात् ।

षष्टिः षष्टितमभागं, तेषु मूलादिषु, क्षणधर्म्मित्वात् क्षणविनाशधर्म्मित्वात्, नित्ययुक्तो नित्यावहितो यतः स्यादित्यर्थः इति हलायुधः । एवमेव रत्नाकरः । कामधेनौ तु तद्क्षणधर्म्मत्वादिति स्पष्टमेव पठितम् । मिश्रैस्तु षष्ठ इति पठित्वा षष्ठांशो राजग्राह्य इति व्याख्यातम् ।

सामुद्रिकेषु पण्येषु सारोद्धारपूर्व्वकं शुल्कग्रहणमित्याह बौधायनः,—

सामुद्रः शुल्को वरं रूपमुद्धृत्य दशपलं शतमन्येषामपि सारानुरूप्येणानुपहत्य धर्म्मं प्रकल्पयेत् ।

सामुद्रः समुद्रादागतपण्यगोचरः, तत्र पण्येषु वरं मुक्ताफलादिकं गृहीत्वा शतपणमूल्ये दशपणं गृह्णीयादन्येषामपि लाभभूयस्त्वप्रयोजक-देशान्तरागतानां सारानुसारेण श्रेष्ठं

१ क ख स्वदेशपण्यानां शुल्कादंशं ।

वस्तु गृहीत्वा धर्म्मादनपेतं शुल्कं कल्पयेदित्यर्थः । अनुपहत्येत्यनेन वणिजो द्रव्योपघातो न कार्य्य इत्युक्तम् । हलायुधेनापहृत्येति पठित्वा उद्धृत्येति व्याख्यातम् ॥

अथ शुल्कापवादमाह । वसिष्ठः,—

शुल्के चापि मानवं श्लोकमुदाहरन्ति ।
न भिन्नकार्षापणमस्ति शुल्कं
न शिल्पिवित्ते[1] न शिशौ न दूते ।
न भैक्ष्यसन्धे न हृतावशेषे
न श्रोत्रिये प्रव्रजिते न यज्ञे ॥

भिन्नो न्यूनः कार्षापणो मूल्यं यस्य तद्भिन्नकार्षापणं तन्निमित्तः शुल्कोऽपि भिन्नकार्षापणः । तेन कार्षापणादर्व्वाक् यस्य मूल्यं तच्च वस्तुनि शुल्को न ग्राह्य इत्यर्थः । भिन्नशब्दो मूल्यपरस्तेन कार्षापणमूल्यमिति हलायुधः ।

वस्तुतस्तु,—

यथोक्तं शुल्कं यदि भिन्नकार्षापणं भवति तदा न ग्राह्यमिति ऋजुरेवार्थः, प्रथमानिर्द्देशस्य स्वरसात् यथाव्याख्यातार्थपक्षे विक्रयपरतायामन्यच्च सप्तमीदर्शनादिति प्रतिभाति ।

न शिल्पिवित्ते शिल्पिना शिल्पात् प्राप्ते वित्ते, शिशौ विक्रय्यगवादिवत्सादौ । दूते दूतवस्तुनि उपहारार्थं तेन नीयमाने पूज्यतया लब्धे वा, हृतावशेषे सुखितस्य वणिजः शेषे वस्तुनि, यज्ञे यज्ञार्थमानीयमाने द्रव्ये ।

---

१ शिल्पवृत्तौ इति बङ्गादर्शाभिमतः पाठः ।

अत्र हलायुधः,—

शिशुशिल्पदूतेभ्यो वणिजकेभ्यः क्वचिदपि शुल्कं न ग्राह्यमित्याह ।

शङ्खलिखितेनोक्तम्,—

स्कन्धवाह्येष्वशुल्को नगरवासिनां विप्रेतराणामपि । स्कन्धवाह्येषु स्कन्धवाहनयोग्येषु अल्पतरमूल्येष्विति शेषः । अशुल्कः शुल्कादानम् ।

ब्राह्मणस्येत्यनुवृत्तौ नारदः,—

नदीष्ववेतनस्तारः पूर्व्वमुत्तारणन्तथा ।
पण्येष्वशुल्कदानञ्च न चेद्वाणिज्यमस्य तत् ॥

पण्येषु क्रय्येषु । क्वचित् तरेष्विति पाठः । तत्र तरेषु पारं प्रापणीयेषु वस्त्रादिष्वित्यर्थः । अशुल्कदानं राजग्राह्यादानम् ।

अथ कूटकारिणो वणिजो दण्डमाह ।

याज्ञवल्क्यः,—

तुलाशासनमानानां कूटकृन्नाणकस्य च ।
एभिश्च व्यवहर्त्ता यः स दाप्यो दण्डमुत्तमम् ॥

तुला पूर्व्वमुक्ता शासनं राजनिबद्धं चिह्नितमुद्रा नाणकः । कार्षापणशतमानकटङ्कादिः । मुद्रा चिह्नितः सुवर्णादिः । निष्कादिरिति मिताक्षरा ।

य एतेषां कूटकृत् तद्देशप्रसिद्धपरिमाणादूनाधिकपरिमाणकृत्, अव्यवहारिकताम्रादिगर्भतत्कारी वा यश्चैतैः

कूटतया ज्ञातैः परकृतैरपि व्यवहरति तावुत्तमसाहसं दण्ड्यावित्यर्थः।

पूर्व्वं कूटव्यवहारे यदुक्तं तस्यैवायं पक्षप्राप्तानुवादः।

अत्र मनुः,—

तुलामानं प्रतीमानं सर्व्वं तत् स्यात् सुरक्षितम्।
षट्सु षट्सु च मासेषु पुनरेव परीक्षयेत्॥

तुलादीनां कूटत्वशङ्कया षट्सु षट्सु मासेष्वतीतेषु परीक्षणं कार्य्यमित्यर्थः।

तच्चालुब्धसाधुपुरुषद्वारकमित्याहतुः--शङ्खलिखितौ,—

तुलामानप्रतीमानव्यवहारार्घस्थापनं देशद्रव्यानुरूपं प्रत्ययितपुरुषाधिष्ठितम्।

याज्ञवल्क्यः,—

अकूटे कूटकं ब्रूते कूटे यश्चाप्यकूटकम्।
स नाणकपरीक्षी तु दाप्य उत्तमसाहसम्॥

इदमाशयापराधे तद्व्यतिरेके तूत्तमादल्पमर्हतीत्याहुरिति रत्नाकरः।

अत्र यद्यप्याशयापराधाभावे[1] दण्डाभाव एव उचितस्तथापि परीक्षणासमर्थस्य तत्र प्रवृत्तिरेव दोष इत्यभिसन्धाय दण्डाभिधानमिति प्रतिभाति।

याज्ञवल्क्यः,—

सम्भूय कुर्व्वतां सर्व्वं[2] सावाधं कारुशिल्पिनाम्।
अर्घस्य हानिं वृद्धिञ्च साहस्रो दण्ड उच्यते॥

---

१ ग अशेषापराधाभावे।

२ मूले अर्घमिति पाठः।

कारवोऽत्र प्रतिमाघटकादयः। रजकादय इति मिताक्षराकारः। तेषां सावाधमिति पीड़ाकरमर्घं कर्म्ममूल्यम् ये लाभलोभात् कुर्व्वन्ति ये वा राजस्थापित-मूल्यस्य ह्रासं वृद्धिञ्च सम्भूय कुर्व्वते तेषां सहस्रपणात्मको दण्ड इत्यर्थः।

तत्र राज्ञो मूल्यव्यवस्थापनकालमाह मनुः,—

पञ्चरात्रे पञ्चरात्रे पक्षे पक्षेऽथवा गते।
कुर्व्वीत चैषां प्रत्यक्षमर्घसंस्थापनं नृपः॥

यद्द्रव्यं चिरेण निष्क्रामति तत्र पाक्षिकं परीक्षणमन्यत्र पाञ्चरात्रिकमित्यौत्सर्गिकी व्यवस्था।

अस्थिरार्घाणां प्रतिपञ्चरात्रं स्थिरप्रायार्घाणां प्रति-पक्षमिति मनुटीका।

प्रत्यक्षमिति अवकाशपक्षे स्वयमेवैतद्राज्ञा परीक्षणीय-मन्यथा तु प्रत्ययितपुरुषद्वारैव। तत्र शङ्खलिखितवचनं लिखितमधस्तात्।

परीक्षाप्रकारमाह स एव,—

आगमं निर्गमं स्थानं तथा वृद्धि-क्षयावुभौ।
विचार्य्य सर्व्वशस्यानां कारयेत् क्रयविक्रयौ॥

शस्यपदमुपलक्षणमाद्यर्थं[1] वा बहुवचनं कड़ारा इति-वत्। तेन पञ्चविधपण्यपरिग्रहः।

तत्र नारदः,—

क्रयविक्रयधर्म्मेषु सर्व्वं तत्पण्यमुच्यते।
गणिमं तुलिमं मेयं क्रियया रूपतः श्रिया॥

---

[1] क अर्घार्थम्।

गणिमं पूगादि। कपर्द्दकादीति हलायुधः। तुलिमं सुवर्णादि। मेयं धान्यादि। क्रियया वाहदोहादिक्रिययोपलक्षितमश्वमहिष्यादि। रूपतः क्रीयमाणं पण्याङ्गनादि[१]। चित्रं वस्त्रादीति हलायुधः। श्रिया दीप्त्या मुक्तादि।

आगमो देशान्तरीयस्य विक्रय्यवस्तुनो दूरादूर-सुगम-दुर्गमदेशवर्त्तिनः स्वदेशप्रवेशः। निर्गमः स्वदेशीयपण्यस्य तादृशपरदेशगमनम्। स्थानं चिरमचिरं वा कालमेतस्मिन् क्रीते इयान् भक्ष्यादि[२]व्ययो वृत्त इत्यवस्थानम्।

वृद्धिरिदानीमेतस्मिन् विक्रीयमाणे एतावान् लाभो भवति क्षयो वा एतावती हानिरिति सर्व्वमिदं परामृष्य यथा क्रेतुर्विक्रेतुर्वा अनुचिते लाभहानी न भवतस्तथा राजा क्रयविक्रयौ कारयेदित्यर्थः।

अत्र विक्रेतुरुचितं लाभमाह याज्ञवल्क्यः,—

स्वदेशपण्ये तु शतं बणिक् गृह्णीत पञ्चकम्।
दशकं पारदेश्ये तु यः सद्यः क्रयविक्रयी॥

यः स्वदेशोद्भवमेव पण्यं तस्मिन्नेव दिने क्रीत्वा ग्रामान्तरादानीयानयनदिन एव विक्रीणीते [३][स पणशतमूल्ये पणपञ्चकम्। विदेशपण्यं क्रीत्वा तस्मिन्नेव दिने विक्रीणीते] स पणशतमूल्ये पणदशकं गृह्णीयात् न ततोऽधिकं दण्डापादकत्वात्। सद्य इत्यभिधानात् विलम्ब्य विक्रये नायं नियम इत्यर्थः।

---

१ ख ग घ पुस्तकत्रये पण्यमङ्गनादि। २ क भक्तादिव्ययः।
३ घ पुस्तके [ ] चिह्नितांशः पतितः।

याज्ञवल्क्यः,—

राज्ञा संस्थाप्यते योऽर्घः प्रत्यहं तेन विक्रयः ।

अत्र विशेषमाह राज्ञ इत्यनुवृत्तौ गौतमः,—

पण्यं वणिग्भिरर्घापचये न देयम् ।

अर्घापचये मूल्यापचये तत्र पण्यमप्रयच्छन्नपि वणिक् न दण्ड्य इति तात्पर्य्यम् ।

बृहस्पतिः,—

प्रच्छन्नदोषव्यामिश्रं पुनः संस्कृतविक्रयी ।

पण्यं च द्विगुणं दाप्यो वणिक् दण्डं च तत्समम् ॥

प्रच्छन्नदोषव्यामिश्रमनभिमतद्रव्येण मिश्रितं पुनः संस्कृतं पुरातनमेव सम्भावनादिना[1] नवीकृतम् ।

याज्ञवल्क्यः,—

मृताङ्गलग्नविक्रेतुर्दण्डो मध्यमसाहसः ।

मृताङ्गलग्नं वस्त्रादि येन धृतेन म्रियते येन वा मृतो भूष्यते तदल्पमूल्यमपि तद्द्रव्यमप्रकाश्य विक्रेतुर्मध्यमसाहसो दण्ड इत्यर्थः ।

तथा,—

भेषज-स्नेह-लवण-गन्ध-धान्य-गुड़ादिषु ।

पण्येषु हीनं क्षिपतः पणा दण्डस्तु षोड़श ॥

आदिपदेन हिङ्गुमरीचादयो गृह्यन्ते । हीनमपद्रव्यं तदेतद्विक्रेतव्यद्रव्ये प्रक्षेपमात्रे बोद्धव्यम् । बृहस्पतिवचने द्विगुणं पण्यदानं वणिग्दण्डञ्च तादृशे विक्रीते सतीत्यविरोधः । इति रत्नाकरः ।

---

१ ख पुस्तके प्रानादिना । घ पुस्तके सम्भारणादिना ।

अत्राऽपद्रव्यप्रक्षेपस्य विक्रयपर्य्यन्ततायां दोषत्वमन्यथा-ऽदृष्टार्थत्वाभिपातः। अभिसन्धिमात्रस्यापि दण्डप्रयोजकत्व-कल्पनायामतिप्रसङ्गश्च स्यात्, अतो वचनमिदमल्प-व्यामिश्रणपरं श्रुतभेषजादिमात्रविषयं वा। तस्य कस्यचित् स्वरूपेणैवाल्पत्वात् क्वचिदपकर्षस्याल्पस्यैव समवायादिति प्रतिभाति ।

अथ पण्यनिर्माणोपजीविनो दण्डमाह ।

बृहस्पतिः,—

अल्पमूल्यन्तु संस्कृत्य नयन्ति बहुमूल्यताम् ।
स्त्री-बालकान् वञ्चयन्ति दण्ड्यास्तेऽर्थानुसारतः ॥

[1]तथा,—

हेममुक्ताप्रवालाद्यं कुर्व्वते कृत्रिमं तु ये ।
क्रेत्रे मूल्यं प्रदाप्यास्ते राज्ञे च द्विगुणं दमम् ॥

द्विगुणं विक्रीत-तादृक्द्रव्यमूल्यापेक्षया ।

दण्ड उत्तमसाहस इत्यनुवृत्तौ विष्णुः,—

प्रतिरूपविक्रायकस्य च ।

प्रतिरूपं कृत्रिममुक्तादि । अत्र कृत्रिमद्रव्यस्य लघुगुरु-भावेन मूल्यतारतम्यादनयोर्व्यवस्था द्रष्टव्या ।

अथ रत्नाकरे मनुः,—

सर्व्वकण्टकपापिष्ठं हेमकारन्तु पार्थिवः ।
प्रवर्त्तमानमन्याये छेदयेल्लवशः क्षुरैः ॥

---

१ ग पुस्तके तथेत्यारभ्य हेमेति वचनं पतितं ।

कण्टकः प्रकाशतस्करः। लवश इति शरीरमांसं खण्ड-खण्डमुत्कर्त्तयेदित्यर्थः। दण्डस्यातिमहत्त्वादभ्यासविषय-मेतदित्याहुः। देवब्राह्मणराजसुवर्णविषयमिति मिताक्षरा।

तथा तत्रैव याज्ञवल्क्यः,—

कूटसुवर्णव्यवहारी विमांसस्य च विक्रयी।
त्र्यङ्गहीनास्तु[१] कर्त्तव्या शास्याश्चोत्तमसाहसम्॥

त्रिभिर्नासाकर्णकरैरिति हलायुधादयः। कूटसुवर्ण-व्यवहारी रसवेधाद्यापादितवर्णोत्कर्षादिना सुवर्णव्यव-हारकारीत्युक्तम्। विमांसविक्रयी श्वादिमांसानां हरि-णादिमांसत्वेन विक्रेता प्रतिभाति।

पूर्व्वावाक्ये हेमकारमिति लिङ्गादन्यायेन हेमविक्रय एव गम्यते मिताक्षरासम्वादात्। स च दण्डगौरवश्रव-णात् रजतमिश्रणादिविलक्षणः कूटकरणादिरूप एवा-वसीयते। छेदयेल्लवश इति श्रवणादङ्गानां छेदो गम्यते। तच्च क्षुरैरिति खड्गादिविलक्षणकरणश्रवणादङ्गानां लघुत्वं प्रतीयते।

एवं मनुवचनं याज्ञवल्क्यवचनेन सममेकविषयमेव कल्पनालाघवात्। तेन कूटसुवर्णकारिणोऽवयवत्रयछेदः शारीरो दण्ड उत्तमसाहसाख्यश्चार्थ इति दण्डसमुदायो वाक्यसमुदायार्थः।

याज्ञवल्क्यः,—

मृच्चर्म्म-मणि-सूत्रायः-काष्ठ-पाषाण-वाससाम्।
अजातौ जातिकरणे विक्रीयाऽष्टगुणो दमः॥

१ ग अङ्गहीनास्तु।

अजातावल्पमूल्यकजातीये बहुमूल्यजातीयताभ्रमहेतु-साहश्यकरणे । तेन योऽल्पमूल्यं द्रव्यं बहुमूल्यद्रव्यभ्रम-विषयं कृत्वा मूल्येन विक्रीणीते तस्य तद्विक्रयलभ्यादष्ट-गुणो[1] दम इति वाक्यार्थः ।

साहश्यकरणं यथा कृष्णायां मृदि कस्तूरिकामोद-सञ्चारेण कस्तूरिकेति । मार्ज्जारचर्म्मणि वर्णोत्कर्षापादनेन व्याघ्रचर्म्मेति । स्फटिके लौहित्याचरणेन पद्मराग इति । कार्पासिके सूत्रे गुणोत्कर्षाधानेन पट्टसूत्रमिति । कार्ष्णा-यसे वर्णोत्कर्षाधानेन रजतमिति । विल्वकाष्ठे चन्दना-मोदसञ्चारेण चन्दनमिति । कक्कोले त्वगाख्ये लवङ्गमिति कार्पासिके वाससि गुणाधानेन कौशेयमित्यादि ।

तथा,—

समुद्गपरिवर्त्तं च सारभाण्डञ्च कृत्रिमम् ।
आधानं विक्रयं वापि नयतो दण्डकल्पना ॥

मुद्गं पिधानं तेन सह वर्त्तते समुद्गं सम्पुटं करण्डक-मित्यनर्थान्तरं कृत्वेति पूर्व्वार्द्धे शेषः । तेन सुवर्णादिपूर्ण-सम्पुटपरिवर्त्तं कृत्वा आधानं धारणं नयतः सारभाण्डं कस्तूरिकादिकृत्रिमं कृत्वा विक्रयञ्च नयतो दण्डं कल्पये-दित्यर्थः ।

कल्पनामाह—स एव,—

भिन्ने पणे तु पञ्चाशत् पणे तु शतमुच्यते ।
द्विपणे द्विशतो दण्डो मूल्यवृद्धौ च वृद्धिमान् ॥

---

१ घ ङ पुस्तकद्वये तद्विक्रयणे स्यादष्टगुणः ।

भिन्नो न्यूनः, तेन पणन्यूनमूल्ये वस्तुनि तथा कुर्व्वतः पञ्चाशत् पणाः। पणमूल्ये शतं पणाः, द्विपणमूल्ये शतद्वयं पणो दण्डः, शताधिकमूल्ये त्वनेनैव क्रमेण दण्ड-वृद्धिरित्यर्थः।

अत्र च स्वस्तिकरुचकादिपानपात्रादि वा घटयितुं समर्पितस्य सुवर्णादेरेकदेशमपहृत्य दहनध्मापनावर्त्त-नाद्युपक्षीणतया तदपहारं गोपयतः सुवर्णकारादेरपहृत-द्रव्यानुसारेण दण्डः प्राप्तः। तत्रोपक्षयः तत्तद्द्रव्यनियमेन नारदादिभिरुक्तोऽपि नेह परिगृहीतः। व्यवहारिकस्य तस्यैव व्यवहाराङ्गत्वात्। अतएव तन्तुवायोर्णवायविषय-विशेषो मन्वादिभिरुक्तोऽपि नात्रोक्तः।

अथ भिषजो दण्डमाह।

मनुः,—

अज्ञातौषधिमन्त्रस्तु यश्च व्याधेरतत्त्ववित्।
रोगिभ्योऽर्थं समादत्ते स दण्ड्यश्चौरवद्भिषक्॥

अत्र रोगिविशेषे दण्डविशेषव्यवस्थामाह।

याज्ञवल्क्यः,—

भिषङ्मिथ्या चरन्दाप्यस्तिर्य्यक्षु प्रथमं दमम्।
मानुषे मध्यमं राजमानुषे तूत्तमं तथा[1]॥

अत्र तिर्य्यगादिषु मूल्यविशेषेण राजप्रत्यासत्ति-विशेषेण च दण्डानां गुरुलघुभावश्च कल्पनीय इति मिताक्षरा।

१ घ पुस्तके दमम्।

यथा विष्णुः,—

उत्तमं साहसं दण्ड्यो भिषङ्मिथ्या चरन्नुत्तमेषु । मध्यमेषु मध्यमम् । तिर्य्यक्षु प्रथमम् ।

सर्व्वमिदं रोगिणो मरणाभावे । तच्च दण्डाधिक्यादिति चिकित्सकानां सर्व्वेषामित्यादौ नारायणः ।

अथ विस्रब्धवञ्चकानां तथा सभ्यानां—

अन्यायवादिनां तथोत्कोचादायिनां दण्डः ।

तत्र व्यासः,—

अनिच्छन्तमभूमिज्ञं संयोज्य व्यसने नरम् ।
अपकर्षन्ति तद्द्रव्यं वेश्या-कितव-शिल्पिनः ॥

अनिच्छन्तं प्रवृत्त्यनुन्मुखम् । अभूमिज्ञं कार्य्याकार्य्य-विवेकशून्यम् । एतेनैतेषां विस्रब्धवञ्चकत्वमुक्तं भवति ।

अत्र बृहस्पतिः,—

अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः ।
विस्रब्धवञ्चकाश्चैव निर्व्वास्याः सर्व्व एव ते ॥

सभ्याः पार्षदाः । अर्थलाभेनान्यायवादिनः । विस्रब्ध-वञ्चकाः सम्यङ्निर्णयानुकूलवञ्चनव्यतिरिक्तवञ्चनकर्त्तारः । उत्कोचादायिनो द्विविधाः—उत्कोचग्राहिणस्तदाजीविनश्च ।

तत्र प्रथममाह व्यासः,—

न्यायस्थानेष्वधिकृता गृहीत्वाऽर्थं विनिर्णयम् ।
कुर्व्वन्त्युत्कोचकास्ते तु राजद्रव्यविनाशकाः ॥

तथा सभ्योत्कोचकवञ्चका इति मनुवचने रत्नाकरः,—

उत्कोचकाः कार्य्याधिकृताः सन्त उत्कोचग्राहिणः । तत्र ते प्रकृते उत्कोचाजीवित्वेनोक्ताः ।

तदाजीविनान्तु दण्डमाह विष्णुः,—

कूटसाक्षिनां सर्व्वस्वापहारः कार्य्य उत्कोचजीविनां सभ्यानाञ्च ।

मनुः,—

ये नियुक्तास्तु कार्य्येषु हन्युः कार्य्याणि कार्य्यिणाम् ।
धनोष्मणा पच्यमाना निस्वांस्तान् कारयेन्नृपः ॥

व्यवहारदर्शनादिकार्य्येषु नियुक्ता उत्कोचधनतेजसा विकारं भजन्तोऽर्थ्यादीनां कार्य्याणि ये नाशयन्ति तान् गृहीतसर्व्वस्वान् कुर्य्यात् । अत्र हन्युरुत्कोचग्रहणेन जितमप्यजितं कुर्य्युरिति नारायणः ।

याज्ञवल्क्यः,—

उत्कोचजीविनो द्रव्यहीनान् कृत्वा विवासयेत् ।

द्रव्यहीनान् कृत्वेति सर्व्वस्वं गृहीत्वेत्यर्थः । अत्रानुबन्धगौरवागौरवाभ्यां व्यवस्था ।

अथ कूटमध्यस्थसाक्षिणो दण्डमाह ।

बृहस्पतिः,—

मध्यस्था वञ्चयन्त्येकं स्नेहलोभादिना तथा ।
साक्षिणश्चान्यथा ब्रूयुर्दाप्यास्ते द्विगुणन्दमम् ॥

द्विगुणं यावन्ति वञ्चयन्ति तद्द्विगुणं मध्यस्थोऽत्र वस्तुमूल्यव्यवस्थापकः कूटमूल्यव्यवस्थापनेनार्थहरो विवक्षितः । सभ्यस्य व्यासेन निर्व्वासनाभिधानात् । कूटसाक्षिणां सकृदुत्कोचग्रहणविषयमिदम् ।

तदुपजीविने त्वाह विष्णुः—

कूटसाक्षिणां सर्व्वस्वापहार उत्कोचजीविनां सभ्यानाञ्च।

यत्र तूत्कोचग्रहणन्नास्ति किन्तु लिप्सादिनाऽन्यथाभिधानं तत्र साक्षिणो दण्डविशेषः प्रकीर्णकप्रकरणे दर्शितः।

## अथ द्यूतकारदण्डः ।

तत्र द्यूतं द्विविधमित्याह । मनुः,—

अप्राणिभिर्यत् क्रियते लोके तत् द्यूतमुच्यते ।
प्राणिभिः क्रियमाणस्तु स विज्ञेयः समाह्वयः ॥

पणपूर्व्विका क्रीड़ा देवनं सा चेदप्राणिभिः क्रियते तदा द्यूतमित्युच्यते । यदि पारावतकुक्कुटादिभिर्मनुष्य[1]-मेषादिभिर्वा तदा तेषामपि स्पर्द्धासम्भवात् समाह्वय इति । तदेतत् राज्ञाऽपि कार्य्यवशात् प्रवर्त्तनीयमित्याह । याज्ञवल्क्यः,—

द्यूतमेकमुखं कार्य्यं तस्करज्ञानकारणात् ।

एकं मुखं प्रधानं यत्र तत्तथा, तस्करेति प्रायश्चौर्य्यार्ज्जितधना एव कितवा भवन्ति अतश्चौरविज्ञानार्थमेकं मुखं सभिकलक्षणं राजा कुर्य्यादित्यर्थः। तत्र सभा कितवनिवासार्था यस्यास्त्यसौ सभिकः। कल्पिताक्षादिनिखिलक्रीड़ोपकरणस्तदुपचितद्रव्योपजीवी सभापतिरुच्यते तस्य कर्त्तव्यमाह ।

स सम्यक् पालितो दद्यात् राज्ञे भागं यथाकृतम्[2] ।
जितमुद्ग्राहयेज्जैत्रे[3] दद्यात् सत्यं वचः क्षमी ॥

---

१ ग पुस्तके मल्ल— ।  २ ख यथाश्रुतम् ।
३ ख जेत्रे।

स सभिकः पालितो राज्ञा रक्षितः पराजितादुद्धृत्य जितमर्थं जयिने दद्यात्। क्षमी भूत्वा सत्यञ्च वचो विश्वासार्थं द्यूतकारिणां दद्यादित्यर्थः ।

अथात्र कूटव्यवहारिणो दण्डमाह ।

बृहस्पतिः,—

कूटाक्षदेविनः क्षुद्रा[१] राजभागहराश्च ये ।
गणनावञ्चकाश्चैव दण्ड्यास्ते कितवाः स्मृताः ॥

अत्राक्षदेवनेन मेषा[२]दिदेवनमपि लक्ष्यते तुल्ययोगक्षेमत्वात्। द्यूतमुक्त्वा—

एष एव विधिर्दृष्टः प्राणिद्यूतसमाह्वये ।

इति याज्ञवल्क्यदर्शनात् ।

अतएव सामान्यमाश्रित्य बृहस्पतिनैवोक्तम् ।

गूढः प्रकाशः कर्त्तव्यो निर्व्वास्याः कूटदेविनः ।
इति ।

विष्णुः,—

कूटाक्षदेविनां करच्छेदः, उपधिदेविनां सन्दंशच्छेदः ॥ सन्दंशस्तर्ज्जन्यङ्गुष्ठौ, एतच्चापराधातिशये द्रष्टव्यम् ।

एवञ्च,

राज्ञा सचिह्नं निर्व्वास्याः कूटाक्षोपधि[३]देविनः ।

इत्यत्र विष्णुवचने चिह्नं करसन्दंशछेदात्मकमेव एकमूलकत्वानुरोधादिति रत्नाकरः ।

---

१ ङ पुस्तके पापाः ।
२ क ख पुस्तकद्वये मायादि ।
३ ग कूटाच्चोपाधि ।

कूटैरक्षादिभिरुपाधिना च वञ्चनहेतुमणिमन्त्रमहौषधादिना ये दीव्यन्ति तान् श्वपदादिनाऽङ्कयित्वा निर्व्वासयेदिति मिताक्षराकारः।

निर्व्वासनञ्च राष्ट्रात्, अनुपात्तविशेषे निर्व्वासने सर्व्वत्र देशस्यैवोपादान[1]दर्शनात् द्यूतमण्डलाद्वा तत्।

तथाच नारदः,—

कूटाक्षदेविनः पापान्निर्हरेत् द्यूतमण्डलात्।
कण्ठेऽक्षमालामासज्य[2] स ह्येषां[3] विनयः स्मृतः॥

मिताक्षरायान्तु,—

निर्व्वासने नारदेन विशेष उक्त इत्युक्ता वचनमिदमवतारितम्। निर्हरेत् द्यूतमण्डलादित्यत्र राजा राष्ट्रात् विवासयेदिति च पठितम्।

अत्राप्यपराधगौरवलाघवाभ्यां व्यवस्थेति प्रतिभाति।

एवञ्च,

कितवान् कुशीलवान् क्रूरान् क्षिप्रं निर्व्वासयेत् पुरात्।
एते राष्ट्रे वर्त्तमाना बाधन्ते भद्रिकाः प्रजाः॥

इति विध्यर्थवाद[4]प्रविष्टमपि पुरादिति राष्ट्रादित्युभयोपादानं घटते।

इह यद्यपि।

प्रकाशमेतत्तास्कर्य्यं यद्देवनसमाह्वयम्।

इति मनुना स्तेयत्वमनयोरविशेषेणैवोक्तम्।

---

१ घ उपादानत्वेन।
२ क ग ङ पुस्तकत्रये आसाद्य।
३ ङ पुस्तके स ह्येषु।
४ क ख—विध्यनुवाद—।

द्यूतं समाह्वयञ्चैव यः कुर्य्यात् कारयेत वा ।
तान् सर्व्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ॥

इति हस्तच्छेदादयो दण्डा अप्यविशेषेणैवोक्ताः ।

तथाप्युभयमिदं कूटद्यूतविषयतया नेयं बृहस्पतिवचनेनैकमूलकत्वलाघवात् । अन्यथा अदृष्टार्थत्वापातात् मिताक्षराकृतोऽप्यत्रैव सम्वादात् ।

यत्तु वदन्ति राजाविदिते द्यूते जितमपि जयी न लभते प्रत्युत दण्ड्यः ।

प्राप्ते नृपतिना भागे प्रसिद्धे द्यूतमण्डले ।
जितं ससभिके स्थाने दापयेदन्यथा न तु ॥

इति याज्ञवल्क्यीयात् ।

अनिर्द्दिष्टस्तु यो राज्ञा द्यूतं कुर्व्वीत मानवः ।
न स तस्माप्नुयात् कामं विनयञ्चैव सोऽर्हति ॥

इति नारदवचनाच्चेति ।

तन्नेदं प्रतिभाति यदा पुनः पराजितं स सभिको दापयितुं न शक्नोति तदा राजा दापयेत् इत्याहेति कृत्वा मिताक्षरायां पराशरभाष्ये च याज्ञवल्क्यवचनमिदमवतारितम् ।

तथाच यथा ऋणादानप्रकरणे अधमर्णैर्ज्जैर्म्यादददीयमानमृणं साधयते राज्ञे साधितादर्थाद्विंशत्यंशो धनिकेन दीयते अन्यथा तु न साधनं न वा तस्मै दानं, तथा प्रकृतेऽपि वाच्यम् । तुल्यन्यायात् ।

एवञ्च राजभागे प्राप्त एव राजा पराजितमर्थं जयिने दापयेन्न त्वन्यथेति वाक्यार्थः ।

द्यूतमण्डले ससभिके जितमित्यपि तत्परमेव तथैव राजांशपरिकल्पनात्।

एवं राजादेशं विना यः स्वेच्छया द्यूतं प्रवर्त्तयेत् स तत्र जितमपि न प्राप्नुयात् न खल्वजिह्माः कितवा राजबलं विना शक्या दापयितुमिति नारदीयपादोन-श्लोकवाक्यार्थः।

एवं स्थिते यस्मिन् राजव्यापारं विना जितोऽप्यर्थः प्राप्तुमशक्यो राजा च भृतिं विना न व्याप्रियत इत्यन्वय-व्यतिरेकाभ्यामवधृतमतो राजभागं परिकल्प्य राजाज्ञा-मादायैव प्रवर्त्तितव्यमिति वाक्ययोरेकवाक्यतया तात्पर्य्यार्थो गम्यते।

यच्च नारदीयवाक्यप्रतीके दण्डः श्रूयते तत्र यथा तरिमत्यां नद्यां तरशुल्कभिया बाहुभ्यामुत्तरतस्तथा प्रकृतेऽपि राजदेयखण्डनमेव दण्ड्यमानस्यापराधो न त्वन्यत्।

बाहुभ्यामुत्तरन् पणशतं दण्ड्य इति वशिष्ठवचनेनैक-मूलकत्वात् तस्माद्राजाज्ञां विना प्रवर्त्तितं द्यूतं वा ततो जयो वा न सिध्यति तत्सिद्धावपि पराजितं न लभ्यते इत्येवमाद्यर्थपरिकल्पने वाक्यस्यादृष्टार्थत्वं स्यात्।

तस्माद्राजदण्डमगणयित्वा स्वयं जितार्थसाधनमध्य-वसाय राजाज्ञां विनापि कृते द्यूते परिपणितं पराजितेन देयं, यदि तवाक्षा द्विरभ्यस्ताः पतन्ति यदि वा मन्मेष-स्त्वन्मेषादपसरति तदा शतन्ते ददामीति स्वरसतः प्रकृतिस्थाभ्युपगमेऽपवादकाभावादिति।

अथ ज्योतिर्व्विदो दण्डमाह ।

बृहस्पतिः,—

ज्योतिर्ज्ञानं तथोत्पातमविदित्वा तु ये नृणाम् ।
[१]श्रावयन्त्यर्थलोभेन विनेयास्तेऽपि यत्नतः ॥

अर्थलोभेनेति वचनादर्थानुसारी दण्डः ।

---

अथ रजकदण्डः ।

तत्र मनुः,—

शाल्मले फलके श्लक्ष्णे निर्णिज्यान्नेजकः शनैः ।
न च वासांसि वासोभिर्निर्हरेन्न विवासयेत्[२] ॥

शाल्मले शाल्मलिदारुमये, श्लक्ष्णे मसृणे । निर्णिज्यात् प्रक्षालयेत् । नेजको रजकः, तथा वस्त्रे बद्धा वस्त्रान्तरं निर्णेजनस्थानं न नयेत् । न विवासयेत् न विपरीतमाच्छादयेत् परवस्त्रेण परविनियोगं न कारयेदिति यावदित्यर्थ इति रत्नाकरः ।

नारायणस्तु न निर्हरेन्न परिवर्त्तयेत् न च विवासयेन्न चिरं स्थापयेदित्याह ।

एवञ्चात्र वैपरीत्याचरणाद्दण्डभाग्भवतीति तात्पर्य्यमिति रत्नाकरः ।

अत्र मत्स्यपुराणम्,—

वासांसि फलके श्लक्ष्णे निर्णेज्यानि शनैः शनैः ।
अतोऽन्यथा यः कुर्व्वीत दण्डः स्याद्रूप्यमाषकम् ॥

---

१ घ पुस्तके श्रास्रयन्ति ।
२ मूले — न च वासयेत् ।

याज्ञवल्क्यः,—

वसानस्त्रीन् पणान्दाप्यो नेजकस्तु परांशुकम् ।
विक्रयावक्रयाधानयाचितेषु पणान् दश ॥

अवक्रयो मह्यमेतावद्धनं त्वया देयमेतावत्कालमुपभोगार्थं मया दीयत इत्येवं रूपं भाटकम् । आधानं बन्धकं, याचितं सुहृदे याचितस्य दानम् ।

तथा,—

देशं कालञ्च विज्ञाय ज्ञात्वा नष्टे बलाबलम् ।
द्रव्याणां कुशला ब्रूयुर्यत्तद्दाप्यमसंशयम् ॥

नष्टे वाससि दाप्यं स्वामिने रजकसकाशात् दृढफलकास्फालनात्तद्दोषे सतीति शेषः ।

तत्र भोगतारतम्यात् मूल्यापकर्षमाह ।

नारदः,—

मूल्याष्टभागो हीयेत सकृद्धौतस्य वाससः ।
द्विपादस्त्रिस्त्रिभागस्तु चतुःकृत्वोऽर्द्धमेव च ॥
अर्द्धक्षयात्तु परतः पादांशापचयः क्रमात् ।
यावत् क्षीणदशं वस्त्रं जीर्णः स्यान्नियमः क्षये ॥

सकृद्धौतस्य वाससो भोगदोषान्मूल्येऽष्टमो भागो हीयते तेन यत्राष्टौ पणा मूल्यराशिस्तत्र सप्तपणान् रजको दाप्यः। एवं द्विःकृत्वो धौतस्य पादश्चतुर्थो भागः। त्रिःकृत्वो धौतस्य त्रिपादस्तृतीयो भागः। चतुःकृत्वो धौतस्यार्द्धं हीयते[1]। ततः परन्तु क्षीणदशं वस्त्रं यावत्पादरूपस्यां-

१ ग—दीयते ।

शस्यापचयः। ततःपरन्तु जीर्णस्य वाससो ह्रासे न नियमः। [1]अत उक्तानुसारेण मध्यस्थैरूहः कार्य्यः।

अथौपाधिक[2]दण्डः।

तत्र मनुः,—

उपधाभिस्तु यः कश्चित् परद्रव्यं हरेन्नरः।
ससहायः स हन्तव्यः प्रकाशं विविधैर्वधैः॥

राजा त्वयि रुष्टः तस्मात्त्वां वक्ष्यामि मयि धनं देहीत्यादि वा कन्याधनादिलाभोपकारं वा अन्ततमभिधाय छद्मभिर्यः परद्रव्यं गृह्णाति स छद्मधनग्रहणसहकारिसहितो बहुजनसमक्षं करचरणशिरश्छेदादिभिरनेकैर्वधोपायै राज्ञा हन्तव्यः।

यद्यपि निःक्षेपविषयमिदं वचनं तत्प्रकरणान्तःपातात् तथापि न्यायसाम्यात् पूर्व्वैरित्थं व्याख्यातमतोऽत्राव-तारितम्। एवञ्च न निक्षिप्तमित्यादिछलोक्त्या निःक्षेपादिपरद्रव्यं यो हरेत् तस्यायमेव दण्डः। बहुवारापहारविषयमेतदिति नारायणः।

अथ शिक्षकाभिज्ञकुशलाचार्य्याणां दण्डः।

तत्र धर्म्मकोषे मत्स्यपुराणम्।

मूल्यमादाय यो विद्यां शिल्पं वा न प्रयच्छति।
दण्ड्यः स मूल्यं सकलं धर्म्मज्ञेन महीक्षिता॥

सकलं कलासहितं मूल्यं धनिने दापयित्वा तावदेव ग्रहीता दण्ड्य इत्यर्थः।

---

१ ग घ ङ ऽतस्तद्भक्तानुसारेण।
२ क ग ङ औपधिकदण्डः।

अथ मान्त्रिकतान्त्रिकयोर्दण्डमाह ।

बृहस्पतिः,—

मन्त्रौषधिबलात् किञ्चित् संभ्रान्तिं दर्शयन्ति ये ।
मूलकर्म्म च कुर्व्वन्ति निर्व्वास्यास्ते महीभुजा ॥

मूलकर्म्मोऽत्र वशीकरणम् ।

अथातपस्विनस्तपस्विलिङ्गिनो दण्डमाह ।

बृहस्पतिः,—

दण्डाजिनादिना युक्तमात्मानं दर्शयन्ति ये ।
हिंसन्ति छद्मना चार्थं बध्यास्ते राजपूरुषैः ॥

अथ कुशीलवादिदण्डमाह ।

मनुः,—

कितवान् कुशीलवान् केरान् पाषण्डस्थांश्च मानवान् ।
विकर्म्मस्थान् शौण्डिकांश्च क्षिप्रं निर्व्वासयेत् पुरात् ॥

कितवा वञ्चका द्यूतकाराः, कुशीलवाः स्वकौशलबलेना-निच्छतोऽपि पुरुषान् ये वञ्चयन्ति तेऽत्राभिमताः, केराः परस्त्रीपुरुषसङ्केतकारिणः, पाषण्डस्थाः क्षपणकादि-पाषण्डाश्रिताः, विकर्म्मस्था अत्यन्तं विरुद्धकर्म्मशीलाः, शौण्डिका अत्यन्तमद्यपानप्रसक्ताः। विकर्म्म क्रियावञ्चन-मिति मनुटीकायां कुल्लूकभट्टः ।

एवञ्च कुशीलवादीनां वञ्चनादिभिरर्थापहारित्व-मपेक्षितम्। पूर्व्वापरनिबन्धेषु स्तेयप्रकरणे पाठस्वरसात् शौण्डिकादेरपि तादृशस्यैवायं दण्डो न च तत्तज्जाति-मात्रस्य अदृष्टार्थत्वापातात् ।

कुल्लूकभट्टेन तु वाक्यस्यास्य द्यूतप्रकरणान्तःपातित्वात् कितवप्रसङ्गेणान्येषामभिधानमित्युक्तम् ।

नारायणेन तु निर्व्वासयेत् बहिरेव वासयेदिति व्याख्यातम् ।

अतः कुशीलवान्नटानित्यादिव्याख्यानाच्च प्रकाशतस्कर-त्वमेषामेव न मन्यत इति गम्यते। अथ येषु प्रकाशतस्कर-त्वेनोपदिष्टेषु विशिष्य दण्डो नोपदिष्टस्तेषु कथं तन्निर्णयो दोषानुसारादिति प्राञ्चः ।

तथाहि सर्व्वानेतानभिधाय,—

नैगमाद्या भूरिधना दण्ड्या दोषानुसारतः ।
यथा ते नातिवर्त्तन्ते तिष्ठन्ति समये यथा ॥

इति व्यासवचनं निबन्धेषु पठितम् ।

तच्च प्रतिभाति समभिव्याहृतानामेकत्र यो दण्डः श्रुतः स एवान्यत्रापि बोद्धव्यः साहचर्य्यात् । तेषु द्वित्राणां यत्र दण्डभेदश्रुतिस्तत्रापराधस्य गौरवलाघवाभ्यामभ्यासान-भ्यासाभ्यां वा दण्ड्यस्य धनवत्त्वाधनवत्त्वादिभिर्व्वा व्यवस्था।

यत्र त्वेकत्रापि दण्डश्रुतिर्नास्ति तत्र तुल्यन्यायतया दोषानुसारेण वा तत्कल्पनमिति। सोऽयंप्रकार एवं-जातीयेऽन्यत्रापि द्रष्टव्यः ।

के पुनस्ते तत्र बृहस्पतिः,—

नैगमा वैद्यकितवाः सभ्या उत्कोचवञ्चकाः[१] ।
दैवोत्पातविदो भद्राः शिल्पज्ञाः प्रतिरूपिकाः ॥

---

१ ग पुस्तके सभ्योत्कोचकवञ्चकाः । घ ङ पुस्तके सभ्यौत्कोचिक— ।

अक्रियाकारिणश्चैव मध्यस्थाः कूटसाक्षिणः।
प्रकाशतस्करा ह्येते तथा कुहकजीविनः॥

नैगमा अत्र बणिजः कपटतुलादिद्वाराऽर्थहारिणः। वैद्या रोगं प्रकोप्यार्थहारिणः, कितवाः कूटदेवनद्वाराऽर्थहारिणः, सभ्याः पार्षदाः-अर्थलोभेनान्यायवादिनः। [1]औत्कोचकाः कार्य्याधिकृताः सन्त उत्कोचार्थग्राहिणः।

वञ्चकाः सम्भूयोद्यतानां प्रच्छाद्यैकतरार्थहारिण इति रत्नाकरः। ये सुवर्णादिद्रव्यं गृहीत्वाऽपद्रव्यप्रक्षेपेण वञ्चयन्ति इति मनुटीका। दैवं भाग्यमुत्पातोऽद्भुतं तद्विदो मिथ्योक्त्याऽर्थहारिण इति रत्नाकरः।

हलायुधस्तु तथैवोत्पातविद इति पठित्वा ये मिथ्यैवोत्पातदर्शनेन गृह्णन्तीत्याह। भद्राः शान्तिनियुक्ताः शान्तिमकृत्वैवार्थहरा इति रत्नाकरः। कल्याणाकारतया प्रच्छन्नपापा धनग्राहिण इति मनुटीकायां कुल्लूकभट्टः। स्वरूपतामात्मनो निधाय स्त्र्यादिव्यामोहका इति सर्व्वज्ञः।

शिल्पज्ञाः कूटशिल्पेनार्थहराः प्रतिरूपिकाः कूटशिवा[2]ङ्कादिद्वाराऽर्थहरा इति रत्नाकरः। मिथ्याश्रमणलिङ्गदण्डादिधारिण इति हलायुधः।

उक्तञ्चैतत्,—

दण्डाजिनादिना युक्तमात्मानं दर्शयन्ति ये।
हिंसन्ति छद्मना चार्थं वध्यास्ते राजपूरुषैः॥

---

१ औत्कोचिकाः। २ शिराङ्कादि—।

इति बृहस्पतिनैव विवरणात्। अक्रियाकारिणो भृतकाः। अक्रियाकारिण इति सर्व्वत्रैवानुषज्यत इति हलायुधः। तेन सर्व्वेषामेषां कूटकारित्वं विवक्षितमिति भावः। मध्यस्था मूल्यव्यवस्थापकाः कूटमूल्यव्यवस्थापनेनार्थहराः। कूटसाक्षिणोऽयथावादेन परस्य व्यवहारसाक्षिणः। कुहकजीविन इन्द्रजालादिनाऽर्थहारिणो विवक्षिताः।

नारदः,—

प्रकाशवञ्चकास्तत्र कूटमानतुलाश्रिताः।
औत्कोचिकाः[1] सोपधिकाः कितवाः पण्ययोषितः॥
प्रतिरूपकराश्चैव मङ्गलादेशकारिणः।

सोपधिका भयमाशां वा दर्शयित्वा ये परधनमपहरन्ति। कितवा अत्र छद्मनाऽर्थहराः प्रतिरूपकरा राजानुमतिं विना राजवेशकर्त्तारः। मङ्गलादेशकारिणोऽन्यदेशमङ्गलादेशद्वाराऽर्थहारिणः।

मनुः,—

प्रकाशवञ्चकास्तेषां नानापण्योपजीविनः।
[2]औत्कोचिकाश्चौपधिका वञ्चकाः कितवास्तथा॥
मङ्गलादेशवृत्ताश्च भद्राश्चैक्षणिकैः सह।
असम्यक्कारिणश्चैव महामात्राश्चिकित्सकाः॥
शिल्पोपकारयुक्ताश्च निपुणाः पण्ययोषितः।
एवमाद्यान् विजानीयात् प्रकाशाल्लोक-कण्टकान्॥
निगूढचारिणश्चान्याननार्य्यानार्य्यलिङ्गिनः॥

---

१ ग घ औत्कोचकाः।

२ मूले अधिकः पाठः प्रच्छन्नवञ्चकीस्त्वेते ये स्तेनाटविकादयः।

ये नानापण्यैर्व्याजेन परद्रव्यं गृह्णन्ति ते नानापण्योपजीविनः । औपधिकास्तुलादिकृतेनोपधिना छलेन गृह्णन्त इति नारायणः । यद्यच्च सोपाधिक एव इति तत्त्वं तथापि द्वयमिदं समानाधिकरणमिति तदभिप्रायः ।

मङ्गलादेशवृत्ता एतान् देवान् त्वदर्थे पूजयामीति मिथ्याऽभिधाय जीवन्ति ते हि मङ्गलमादिश्य वञ्चयन्तो वर्त्तन्ते । भद्राः प्रच्छन्नपापा भद्राकारमात्मानमुपदर्शयन्ति । युक्तं चैतत् ।

तथाहि व्यासः,—

स्त्रीपुंसौ वञ्चयन्तीह मङ्गलादेशकारिणः[1] ।
गृह्णन्ति छद्मना चार्थमनार्य्याश्चार्य्यलिङ्गिनः ॥

ऐक्षणिकाः कुहकजीविनः । महामात्राः प्रधानभूताः, अर्थलोभेनासम्यक्कारिण इति । अनार्य्या आर्य्यलिङ्गिनः, अब्रह्मचार्य्यादयो ब्रह्मचर्य्यादिभावनयाऽर्थहरा इति रत्नाकरः ।

मनुटीकायां कुल्लूकभट्टेन महामात्रा हस्तिशिक्षाजीविनः । असम्यक्कारिण इति महामात्र चिकित्सकविशेषणमित्युक्तम् ।

सर्व्वज्ञेनापि महामात्या इति पठित्वा राज्ञोऽमात्यभिषजश्चासम्यक्कारिणोऽयुक्तकारिण इति वाख्यातम् ।

हलायुधीये पण्यदोषिण इति पठित्वा ये निपुणा

---

१ ग पुस्तकद्वये —वृत्तयः ।

मण्याद्युपचारेण[१] श्रोत्रियादीनपि मोहयन्ति उपचारयुक्ता उपायनढौकनयुक्ता इति व्याख्यातं तथा अनार्य्यान् शूद्रादीन् आर्य्यलिङ्गिनो ब्राह्मणवेशधारिणो धनग्राहिण इति भट्टेनैवोक्तम् ।

तदेतत् सर्व्वमपि मतमनुमतमेव सर्व्वेषामेषां प्रकाश तस्करत्वाविशेषात् । तत्र प्रतिरूपकाणां दण्डः प्रकीर्णके वक्ष्यते ।

प्रधानभूतानधिकृत्य । मनुः,—

राष्ट्रेषु रक्षाधिकृताः परस्वादायिनः शठाः ।
भृत्या भवन्ति प्रायेण तेभ्यो रक्षेदिमाः प्रजाः ॥
ये कार्य्यिभ्योऽर्थमेवं हि गृह्णीयुः पापचेतसः ।
तेषां सर्व्वस्वमादाय राजा कुर्य्यात् प्रवासनम् ॥

कार्य्यिभ्यो व्यवहारिभ्यः[२] ।

कात्यायनः,—

प्रतिरूपस्य कर्त्तारः प्रेक्षणाः प्रकराश्च ये ।
राजार्थमोषकाश्चैव प्राप्नुयुर्व्विविधं वधम् ॥

प्रेक्षणा राजकार्य्यवाधेन नृत्यप्रेक्षकाः । प्रकरा दण्डसाध्यकरं प्रकृष्टं गृह्णन्तः । दण्डाख्यं करमिति केचित् ।

मिश्रास्तु दण्डाख्यं राजकरं स्वभावतो निरतिशयं सातिशयीकृत्य गृह्णन्तः प्रकरा इत्याहुः । शेषेषूक्तैव व्यवस्था ।

---

१ ग—मान्याद्यविचारेण ।
२ ग व्यवहारकेभ्यः ।

## अथाप्रकाशतस्कराणां दण्डः ।

तत्र तेषां भेदमाह । मनुः,—

प्रच्छन्नवञ्चकास्तेषां स्तेनाऽटव्यादयो जनाः ।

स्तेनाः सन्धिचोरादयः, अटव्या अटव्याश्रिताः । दिवाऽपि चौर्य्यकारिण इति रत्नाकरः । आदिपदात् प्रान्तरवासि[1] चौरपरिग्रहः ।

वृहस्पतिः,—

सन्धिच्छिदः पान्थमुषो द्विचतुष्पादहारिणः ।
उत्क्षेपकाः शस्यहरा ज्ञेयाः प्रच्छन्नतस्कराः ॥

उत्क्षेपका रक्षकस्याग्रत एवावहितस्य[2] दृष्टिं वञ्चयित्वा उत्क्षिप्य धनापहारिणः । वस्त्राद्युत्क्षिप्यापहरतीति उत्क्षेपक इति मिताक्षराकारः ।

व्यासः,—

शोधनाङ्गान्विता रात्रौ ये चरन्त्यविभाविताः ।
अविज्ञातनिवेशाश्च ज्ञेयाः प्रच्छन्नतस्कराः ॥
उत्क्षेपकश्च सन्धिज्ञो पान्थमुट् ग्रन्थिभेदकः ।
स्त्रीपुं-मोषः पशुस्तेयी चौरो नवविधः स्मृतः ॥

शोधनाङ्गान्विताः स्तेयकरण-खनित्राद्यन्विताः, अविज्ञातनिवेशा अनवगतप्रवेशाः । एतयोरुत्क्षेपकादिसमशीर्षतयाऽभिधानं स्तेयादर्शनेऽपि आरम्भादिदण्डप्राप्त्यर्थमिति प्रतिभाति । ग्रन्थिभेदको ग्रन्थिभेदनद्वारा वस्त्रादिबद्धसुवर्णाद्यपहारकः ।

---

१ घ पुस्तके प्रान्तवासीति पाठः ।
२ ग अनवहितस्य ।

अत्र सन्धिच्छेत्ता पान्थमुट् द्विपदापहारी चतुष्पादापहारी उतक्षेपको ग्रन्थिभेदकः शस्यहरः प्रकीर्णापहारीत्यष्ट[1]धैवाप्रकाशतस्करभेद इति प्रतिभाति। आटव्यादीनां पान्थमुट्प्रभेदत्वात् यथायथमितरविशेषार्थप्रवेशाद्वा ।

अत्र यद्यपि शस्यहरशब्देन बृहस्पत्युक्त-सन्धिच्छिदादन्य प्रच्छन्नहारकत्वमात्रं विवक्षितमिति रत्नाकरः। तत्र बृहस्पत्युक्तानां शस्यहरान्तर्भावे तद्बहिर्भावे वा परिगणनमात्रे भेदात् फलतो न कश्चिद्विशेषः। मात्रा वा प्रतिवेशिन्या वेति न्यायात् पक्षद्वयेऽपि दण्डविधेरविशेषात्।

तथापि धान्यापहारे मन्वादिभीरत्नाधिकभावं द्विपदादिवत् शृङ्ग्राहिकतया निर्द्दिश्य दण्डाभिधानात्तद्वदेवमुक्तं स्वातन्त्र्येण परिगणनम् ।

येषान्तु नारदाद्युक्तमुत्तमादिभेदमादाय दण्डोत्कर्षापकर्षपरिकल्पनं तेषां प्रकीर्णत्वमेवोचितमतो नातिविरुद्धस्तदपहारिणो भेदेन विभागः। तेन शस्यहरो धान्यापहारकः ।

शस्यं क्षेत्रगतं प्राहुर्धान्यं सतुषमुच्यते ।
आमं वितुषमित्युक्तं पक्कमन्नमुदाहृतम् ॥

इति प्रकरणान्तरीयपरिभाषायाः प्रकृतेऽनादरणात् । प्रकीर्णापहारी रत्नाद्यपहारकः, उक्तद्विपदव्यतिरिक्तद्रव्यापहारित्वात् ।

न दृष्टं यत्र पूर्व्वेषु सर्व्वं तत् स्यात् प्रकीर्णकम्[2] ।

इति नारदवचनानुसारात् ।

१ ग अष्टावेवाप्रकाशतस्कराः ।
२ घ पुस्तके प्रकीर्णकं इति पाठः ।

नन्वेवं पान्थमुट् प्रभृतीनामप्येतद्विशेषत्वं प्राप्तं तैरपि प्रकीर्णानामेव रत्नादीनामपहारादिति चेत्। सत्यं, किन्तु तेषामपहृतद्रव्यस्य उत्तमादिभेदमपुरष्कृत्य पान्थमोषणादिरेव दोष इति भेदेनोपन्यासः।

अतएव द्विपदाद्यपहारे सन्धिच्छेदादिस्तदुपायो न दृश्यते। पान्थमोषादौ द्रव्यविशेषवदिहापि हरणोपायविशेषस्याप्रयोजकत्वात्। अतएव सन्धिच्छेदादिरुपायभेदो द्विपदादिरपहर्त्तव्यद्रव्यभेदो वा यो यत्र प्रयोजकस्तेनैव तस्य व्यपदेशः कृतो व्यासादिभिः।

अतएव सन्धिच्छेत्तुरपि भाग्यवैचित्र्येणाल्पानल्पद्रव्यलाभवैचित्र्येऽपि सन्धिच्छेदस्यैव दण्डप्रयोजकत्वमुक्तं मनुना सन्धिं छित्त्वा तु ये चौर्य्यमित्यादि। उक्तञ्च मिताक्षराकारेण अपराधगुरुत्वादत्र दण्डो गुरुरिति।

अतएव,—

प्रनष्टाधिगतं द्रव्यं तिष्ठेत्युक्तैरधिष्ठितम्।
यांस्तत्र चौरान् गृह्णीयात्तान्राजा तेन घातयेत्॥

इति मनुवाक्ये शतादभ्यधिके वध इति दर्शनादत्रापि शतसुवर्णमूल्याधिकद्रव्यहरणे वध इति गोविन्दराजव्याख्यानं दूषयता कुल्लूकभट्टेनोक्तं सन्धिं छित्त्वा तु चौर्य्यमितिवत् अल्पेनापि प्रनष्टराजरक्षितद्रव्यहरणेनैव विशेषेणात्र वधविधानं शतादभ्यधिको वध इत्यस्य विशेषोपदिष्टवधेतरविषयत्वादिति।

तस्मादल्पधनापहारे सन्धिच्छेदादेव दोषविशेषाद्वधदण्ड इति स्थितम्।

यत्तु,—

सन्धिच्छेत्ताऽनेकविधं धनं प्राप्नोति वै गृहात् ।
प्रदाप्य स्वामिने सर्व्वं हृतं नृपे निवेशयेत् ॥

इति व्यासवचनम् ।

तस्य हृतदापनमात्रे तात्पर्य्यमनेकधनलाभाभिधानन्तु पक्षप्राप्तानुवाद एव ।

अतएव,—

सन्धिच्छिदो हृतं दाप्याः शूलमारोपयेत्ततः ।

इति बृहस्पतिना हृतमित्येवोक्तं न तु स्तेयं तस्यानेकविधत्वादिति ।

अतएवापर्य्याप्तेऽपि चौर्य्यादौ दण्डमाह,—

कात्यायनः,—

आरम्भे प्रथमो दण्डः प्रवृत्ते मध्यमः स्मृतः ।
यस्य योऽभिहितो दण्डः पर्य्याप्तस्य स वै भवेत् ॥

इति ।

अथैतेषु सन्धिच्छिदो दण्डमाह ।

मनुः,—

सन्धिं छित्त्वा[1] तु ये चौर्य्यं रात्रौ कुर्व्वन्ति तस्कराः ।
तेषां छित्त्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेत् ॥

अत्र हृतदापनमपराधख्यापनञ्चाधिकमिति प्रागुक्तम् ।

पान्थमुषो दण्डमाह बृहस्पतिः,—

तथा पान्थमुषो वृक्षे गले बद्ध्वाऽवलम्बयेत् ॥

---

१ क ख पुस्तकद्वये हृत्वा ।

अत्र नारद-कात्यायनौ,—

स्वदेशघातिनो ये स्युस्तथा मार्गनिरोधकाः[1] ।
तेषां सर्व्वस्वमादाय राजा शूले निवेशयेत् ॥

यस्य राज्ञो देशे चौरा वसन्ति तद्राजदेशस्तद्घातिनः स्वदेशघातिनः । तेषां चौराणां । तेन परदेशघाते चौरैः क्रियमाणे तेषां राज्ञा सर्व्वस्वहरणं न कार्य्यम् । तद्राजानुकूलत्वादिति रत्नाकरः ।

अत्र वाक्यस्यास्य रत्नाकरादौ पान्थमुषमुपक्रम्याव-तारणेऽपि तत्र परिसङ्ख्यायकस्य स्वदेशीय-मार्गनिरोधस्य समभिव्याहारदर्शनेऽपि परदेशीय द्विचतुःपदहारिणोऽपि दण्डाभावो न्यायसाम्यादिति प्रतिभाति । एवञ्च पर-देशाहृतं द्रव्यमित्यादि कात्यायनवचनेन सममेकमूल-कत्वमेवेति ।

अथ द्विपदापहारे मनुः,—

पुरुषाणां कुलीनानां नारीणाञ्च विशेषतः ।
मुख्यानाञ्चैव रत्नानां हरणे वधमर्हति ॥

कुलीनानां सत्कुलजातानाम् ।

तत्र वृहस्पतिः,—

मनुष्यहारिणो राज्ञा दग्धव्यास्तु कटाग्निना ।

कटेन वेष्टयित्वा तत्प्रभवेणाग्निना दाह्या इत्यर्थः ।

व्यासः,—

स्त्रीहर्त्ता लोहशयने दग्धव्यो वै कटाग्निना ।
नरहर्त्ता हस्तपादौ छित्त्वा स्थाप्यश्चतुष्पथे ॥

---

१ घ पुस्तके यज्ञावरोधिनः ।

नारदः,—

पुरुषं हरतो हस्तौ[१] दण्ड उत्तमसाहसः।
सर्व्वस्वं हरतो नारीं[२] कन्यान्तु हरतो वधः॥
वाजिवारणबालानां चाददीत बृहस्पतिः।

हस्ताविति छित्त्वेति शेषः। कामधेनौ—दृष्टमिति पठितम्। सर्व्वस्वमिति नारीं हरतः सर्व्वस्वग्रहणं दण्ड इत्यर्थः। बालानामिति हरत इति विपरिणामेनान्वयः। बृहस्पतिरित्यतःपूर्व्वमित्याहेति शेषः।

अत्र चैकवस्तुग्रहणे परस्परविरुद्धशारीरार्थदण्डानां हारकोत्कृष्टापकृष्टजातीयत्वधनवत्त्वाधनवत्त्व--हार्य्युत्कर्षापकर्षैर्व्यवस्था कार्य्येति रत्नाकरः।

तच्चैवं प्रतिभाति मनुना सामान्यतः स्त्रीपुरुषहारिणो वधो विहितः। तस्य विचित्राविचित्रतयाऽनेकत्वात् करणाकाङ्क्षायां बृहस्पतिना कटाग्निदाहरूपं तद्विहितं तच्च स्त्रीहर्त्तॄत्यादिव्यासवचनैकवाक्यतया लोहशयनसाहित्येन स्त्रीहरणपरतया व्यवतिष्ठते।

एवं निराकाङ्क्षे स्त्रीहारिणो वधे नरहर्त्तॄत्यादिव्यासवचनात् पुरुषवधे हस्तपादछेदपूर्व्वकं चतुष्पथावस्थापनरूपं शूलारोपणापरपर्य्यायकरणं प्रतीयते।

एवं पुरुषवधेऽपि निराकाङ्क्षे पुरुषमित्यादिनारदवचनोक्त-पूर्व्वोक्तयोर्व्विकल्पः पर्य्यवस्यति। स्मृतिशास्त्रे

१ ग पुस्तके पात्यः।
२ ग पुस्तके स्त्रीं तु हरतः।

विकल्पस्तु आकाङ्क्षापूरणे सतीतिवचनात्, सचायं स्त्री-विषयतया प्रौढपुरुषविषयतया च व्यवतिष्ठते।

कन्याहरणे वधस्य बालहरणे सर्व्वस्वहरणस्य व्यासेन शृङ्गग्राहिकतयाऽभिधानात् विषयभेदेनाविरोधाच्च।

एवञ्च परपरिणीतस्त्रीहारिणं लोहशयनमारोप्य कटाग्निदाहेन हन्यात् प्रौढपुरुषहारिणन्तु हस्तपादौ छित्त्वा शूलारोपणेन हन्यादित्येकः कल्पः प्रौढपुरुष-हारिणो हस्तद्वयच्छेदरूपः शारीर उत्तमसाहसरूपश्चार्थो दण्डः। ऊढस्त्रीहारिणस्तु सर्व्वस्वहरणमित्यपरः कल्पः।

तदनयोर्वैषम्येण विरोधे मनुवचने कुलीनानामिति श्रवणात् कुलीनस्त्रीपुरुषापहारे प्रथमः कल्पः, अकुलीन-तदपहारे तु द्वितीय इति व्यवस्थेति।

राजकुलीनयोः स्त्रीपुरुषयोरपहारे विशेषमाहतुः—

शङ्खलिखितौ,—

राजपुत्रापहारेऽष्टसहस्रं शारीरो वा दण्डस्तत्कुलीनेषु पुत्रेष्वर्द्धं स्त्रीपुरुषयोः।

अष्टसहस्रमष्टाधिकसहस्रं तच्च पणानां लिखितपरि-भाषानुसारात् कार्षापणानामिति रत्नाकरः। तत्रापि स एवार्थः।

तथाहि अजाविकेऽर्द्धत्रयोदशपणा नकुलविडालाप-हरणे त्रयः कार्षापणा इत्युपसंहारदर्शनम्। तत्र च कार्षापणः पणपर्य्याय एव पुराणपर्य्यायत्वेऽजाविकापेक्षया नकुलविडालयोर्लघुत्वेन दण्डगौरवानुपपत्तेः।

कामधेनौ राजपुत्रापहारेष्विति पठितं[१] तत्कुलीनेषु राजकुलीनेषु पुत्रेषु राजपुत्रव्यतिरिक्तपुरुषेषु ।

अर्द्धमष्टाधिकसहस्राद्धं स्त्रीपुरुषयोश्च राजकुलीनयोरर्द्धमष्टसहस्रं शारीरो वेति विकल्पे धनवत्त्वाऽधनवत्त्वाभ्यां व्यवस्थेति रत्नाकरः ।

अत्र प्रतिभाति राजकुलीनापहारस्यातत्कुलीनापहारापेक्षया गुरुत्वादार्थशारीरदण्डयोः साहित्यं वाक्यार्थः शारीरो वेति वाकारः समुच्चय इति ।

दासदास्योरपहारे मनुः,—

दासाश्वरथहर्त्ता च प्राप्तः स्याच्चौरकिल्विषम् ।

नारदः,—

गोषु ब्राह्मणसंस्थासु स्फुरायाश्छेदनं भवेत् ।
दासीन्तु[२] हरतो मध्यस्तथा[३] पादस्य छेदनम् ॥

ब्राह्मणसंस्थासु ब्राह्मणस्वामिकासु । एवञ्च दासीषु ब्राह्मणस्वत्वेन गौरवाद्दण्डाधिक्यदर्शनाद्दासेष्वपि ब्राह्मणस्वामिकेषु चौरदण्डः शारीरमार्थं वाऽधिकं वाच्यमन्यस्वामिकेष्वल्पमिति प्रतिभाति ।

अथ चतुष्पदापहारे नारदः,—

महापशून् स्तेनयतो दण्ड उत्तमसाहसः ।
मध्यमो मध्यमपशून् पूर्व्वः क्षुद्रे[४] पशौ हृते ॥

---

१ ग पुस्तके पाठः ।
२ क ख ङ दासीसु ।
३ मूले अर्द्धपादविकर्त्तनमिति पाठः ।
४ ग पुस्तके क्षुद्रपशून् हरन् ।

महान्तः पशवो हस्त्यादयः, मध्यमा वृषादयः । एत-द्विशेषविहितेतरविषयम् । तत्र महापशुषु विशेषमाह—

मनुः,—

[1]असन्दितानां सन्दाता सन्दितानां विमोक्षकः ।
दासाश्वरथहर्त्ता च प्राप्तः स्याच्चौरकिल्विषम् ॥

तथा,—

महापशूनां हरणात् शस्त्राणामौषधस्य च ।
कालमासाद्य कार्य्यञ्च दण्डं राजा प्रकल्पयेत् ॥

सन्दितानां चरणबद्धानामिति कल्पतरुः । सन्दाता हरणहेतुबन्धनकारी । विमोक्षको हरणहेतुमोक्षकारी । चौरकिल्विषं चौरदण्डं शारीरमार्थं वा, स च मारणाङ्ग-च्छेदनापहाररूप इति मनुटीकायां कुल्लूकभट्टः ।

नारायणस्तु असन्दितानामबद्धानाम्पशूनामस्वामिक-तयोत्सृष्टानां वाहनादिकर्त्ता सन्दाता । सन्दितानाम-प्यन्यदीयपशूनां तद्विरोधाचरणबुद्ध्या मोचयिता विमो-क्षकः । दासादिहर्त्ता तु कथञ्चित्प्रतारणादिना तैः स्वकार्य्यं कारयिता तेन तदस्तेयेऽपि तत्तत्कर्म्मण्येव स्तेयाति[2]देशोऽयमित्याह ।

युक्तञ्चैतदेव यद्यपीदं न स्तेयं तथापि न विरोधः स्तेयातिदेशस्यापि स्तेयदण्डप्राप्त्यर्थत्वात् । कालो युद्धो-पयोगानुपयोगसमयः । कार्य्यमुपयोगस्य भूयस्त्वाल्पत्वे । एतत् सर्व्वमालोक्य च कालसंगृहीतमुपलक्षितं वा । वाजिवारणादेर्गौरवागौरवे विशिष्टत्वाविशिष्टत्वे च क्वचि-

१ मूले — असन्धितानां सन्धाता सन्धितानां च मोक्षकः ।
२ क ख पुस्तकद्वये —कर्म्मण्येवातिदेशोऽयम् ।

चाल्पं बहु बहुतरं वा चतुष्पदापहारिणो दण्डं कुर्य्यादिति श्लोकद्वय[1]समुदायार्थः ।

तत्र बहुतरदण्डो यथा ।

याज्ञवल्क्यः,—

बन्दिग्रहांस्तथा वाजिकुञ्जराणाञ्च हारिणः ।
प्रसह्यघातिनश्चैव शूलमारोपयेन्नरान् ॥

व्यासः,—

अश्वहर्त्ता हस्तपादौ कटिं छित्त्वा प्रमाप्यते ।

बहुर्य्यथा-व्यासः,—

वाजिवारणबालानां चाददीत बृहस्पतिः ॥

वाजीति हरण इति विपरिणमितानुषङ्गः । आददीतेति सर्व्वस्वमिति पूर्व्वार्द्धस्थितानुषङ्गः ।

तथा-विष्णुः,—

गोऽश्वोष्ट्रगजापहार्य्येककरपादिकः कार्य्यः ।

अल्पो यथा-शङ्खलिखितौ,—

हस्त्यश्वगोवृषायनेषु राजपुत्रापहारवद्दण्डः ।

राजपुत्रापहारवदिति अष्टाधिकं पणसहस्रं शारीरो वा दण्ड इत्यर्थः । तदेवं महापशुषु यस्य यदोपयोगभूयस्त्वं गौरवं वैशिष्ट्यं वा प्रकृष्टं तस्य बन्धनमोक्षणादिनाऽपहारे यथाश्रुतो वधः । यस्य तदपकृष्टं तदपकारे सर्व्वस्वमेव करपादभेदो वा । यस्यापकृष्टतरं तदपहारे मध्यमसाहसादिदण्ड इति सिद्धम् ।

---

१ क ख पुस्तकद्वये द्वयेतिपदं नास्ति ।

अथ नारदः,—

गोषु ब्राह्मणसंस्थासु स्फुरायाश्छेदनं भवेत् ॥

ब्राह्मणसंस्थासु ब्राह्मणसम्बन्धिनीषु षष्ठ्यर्थे सप्तमी स्फुरा पार्ष्णरूपरिभागः।

बृहस्पतिः,—

गोहर्त्ता नासिकां छित्त्वा बध्वा चाम्भसि मज्जयेत्।

गोहर्त्तेति द्वितीयार्थे आर्षप्रयोगः। एतद्ब्राह्मणस्वामिकयज्ञोपयुक्तोत्कृष्टगवीपरं द्रष्टव्यम्। वचनमिदं कामधेनौ दृष्टम्।

मनुः,—

गोषु ब्राह्मणसंस्थासु स्फुरिकायाश्च भेदने।
पशूनाञ्चैव हरणे सद्यः कार्य्योऽर्द्धपादिकः ॥

पशवोऽजाजाविक विडाल नकुलव्यतिरिक्ताः क्षुद्रपशव इति रत्नाकरः। मध्यमाः पशव इति प्रतिभाति। ब्राह्मणस्वामिकया गवा साहचर्य्यात् पशूनां महिषादीनामिति नारायणव्याख्यानाच्च।

न च नारदीय-स्फुराछेदनविरोधः। तन्मतेऽपि तुल्यत्वात्।

वस्तुतस्तु नारदवचने गोपदमुत्कृष्टगवीपरं मनुवचने त्वप्रकृष्टगवीपरं पशुपदञ्चाचाब्राह्मणस्वामिकाप्रकृष्टगवादिपरमिति न विरोधगन्धः। अर्द्धपादिकः छिन्नार्द्धपादद्वय इति नारायणः।

व्यासः,—

पशुहर्त्तुश्चार्द्धपादः तीक्ष्णशस्त्रेण कर्त्तयेत् ।

अत्र मिश्रैरतीक्ष्णेति पठित्वा कुण्ठकुद्दालादिनेति व्याख्यातम् ।

अथ शङ्खलिखितौ,—

अजाविकेऽर्द्धत्रयोदशपणाः । नकुलविडालापहरणे त्रयः कार्षापणाः ।

तथा-विष्णुः,—

अजाव्यपहार्य्येककरः कार्य्यः ।

अनयोर्व्विरोधे धनशून्यचौरविषयं विष्णुवचनं यन्नो-पयुक्ताऽजाविहरणविषयं वेति रत्नाकरः ।

अथोत्क्षेपक-ग्रन्थिभेदकयोर्दण्डमाह ।

व्यासः,—

उत्क्षेपक-ग्रन्थिभेदौ सन्दंशेन नियोजयेत् ।

सन्दंशः कराङ्गुष्ठप्रदेशिन्यौ ।

अत्र मनुः,—

अङ्गुलीग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे ।
द्वितीये हस्तपादौ च तृतीये वधमर्हति ॥

एवमन्यत्रापि पुनः पुनः करणाद्दण्डाधिक्यमिति नारायणः । अङ्गुली अङ्गुष्ठप्रदेशिन्यौ । ग्रहे अपहरणे, हस्तचरणाविति द्विवचनदर्शनादेकं हस्तमेकं चरण-मित्यर्थः ।

यद्यप्येतद्ग्रन्थिभेदमुपक्रम्य श्रूयते तथाप्युत्क्षेपकेऽपि द्रष्टव्यं द्वयोस्तुल्ययोगक्षेमत्वात् द्वयमेकोक्त्या निर्द्देशात् ।

अतएव याज्ञवल्क्यः,—

उत्क्षेपकग्रन्थिभेदौ करसन्दंशहीनकौ ।
कार्य्यौ द्वितीयेऽपराधे करपादैकहीनकौ ॥

करपादैकेति,—

उत्क्षेपकग्रन्थिभेदकयोरेकं करमेकं पादञ्च छिन्द्यादित्यर्थः ।

अत्र मिताक्षराकारः— एतद्वचनमुत्तमसाहसप्राप्तियोग्यापहारविषयम् ।

तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसः ।
इति नारदवचनादित्याह ।

तच्चिन्त्यं, तन्मूल्याद्द्विगुणो दण्ड इत्यादौ साहसप्रकरणीये वाक्ये प्रथमसाहसादिसामान्यदण्डविधानमपहारव्यतिरिक्तविषयमिति स्वोक्तिविरोधात् ।

विमांसविक्रयादावसाहसेऽपि याज्ञवल्क्येन करादिछेदस्य विधानात्। नारदवचनस्य विषयान्तरेषु चरितार्थत्वात् तस्य सामान्यमुखप्रवृत्तत्वेन दण्डविशेषानवरुद्धविषयकत्वाच्च ।

तथाहि तदङ्गं साहसकरणभूतमङ्गमिति सर्व्वेषु निबन्धेषु व्याख्यातम् । न चोत्क्षेपकग्रन्थिभेदौ सन्दंशमात्रसाध्यौ न वा पादस्य तत्रोपयोगो दण्डसमुच्चयश्च वचनाभावेऽनुबन्धगौरवाद्यभावे च दुर्वच एव प्रमाणा-

भावात्। सन्दंशादिच्छेदविधेरुपस्थितेन ग्रन्थिभेदोत्क्षेप[1]-लक्षणेन निमित्तेनान्वये निमित्तान्तरानपेक्षितत्वाच्च।

एवं धान्यापहारे बृहस्पतिः,—

धान्यापहारी दशगुणं दाप्यस्तद्द्विगुणं दमम्।

मनुः,—

धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः।
शेषेऽप्येकादशगुणं दाप्यस्तस्य च तद्धनम्॥

कुम्भो विंशतिः प्रस्था इति रत्नाकरः। विंशतिद्रोण इति मिताक्षराकारः। कुल्लूकभट्टोऽप्याह द्विशतो पणो द्रोणः, विंशतिद्रोणः कुम्भ इति।

यत्तु घृतद्रोणेन परिमितः कुम्भ इति गोपथब्राह्मणं तद्द्रवद्रव्यविषयम्। माषकं पञ्चकृष्णलम्,—

माषकाणि चतुःषष्टिः पलमेकं विधीयते।
द्वात्रिंशत्पलिकं प्रस्थं स्वयमुक्तमथर्व्वणा॥
आढकस्तु चतुःप्रस्थैश्चतुर्भिर्द्रोण आढकैः।

स्कन्दपुराणे,—

पलद्वयं हि प्रसृतिस्तद्द्वयं कुडवं स्मृतम्॥
चतुर्भिः कुडवैः प्रस्थमाढकैश्च चतुर्गुणैः।
चतुर्गुणो भवेद्द्रोण इत्येतद्द्रव्यमानकम्॥

तमेनं द्रोणं पूर्णपात्रं व्यवहरन्ति। चतुर्वर्गचिन्तामणौ द्रवद्रव्यविषये स्कन्दपुराणमिति कृत्वा वचनमिदमवतारितम्। एवमेव प्रसृति प्रभृति द्रोणान्तमुक्ता—

१ ग क्षेपणेन।

भविष्यपुराणे,—

कुम्भो द्रोणद्वयं सूर्य्यः खारी द्रोणास्तु षोड़श।

सूर्य्य इति द्रोणस्य नामान्तरं[1], केचित्सूर्प इति पठन्ति।

विष्णुधर्म्मोत्तरे कुड़वप्रभृति द्रोणान्तमुक्त्वा,—

द्रोणैः षोड़शभिः खारी विंशत्या कुम्भ उच्यते।
कुम्भैस्तु दशभिः खारी धान्यसंज्ञा प्रकीर्त्तिता॥

इत्युक्तम्।

विंशत्येति द्रोणैरित्यनुषङ्गः।

धान्येति यवादीनामपि द्रवद्रव्याणामपि चोपलक्षणं स्कन्दपुराणीय-सामान्याभिधानस्वरसादिति महार्णव-कारः।

बालभूषणे चण्डेश्वरः,—

कुडवाद्या वेदगुणा प्रस्थाढद्रोणमानकाः खार्य्यः।
कुम्भो विंशतिखार्य्या दृष्टो लोके यथाक्रमशः॥

लोके मिथिलादौ। तदेवं द्रोणद्वयेन विंशत्या द्रोणैरिति च द्विविधः कुम्भः। दानविवेके तु पणसहस्रपरिमितः कुम्भ इत्युक्तम्। एवञ्च नानार्थ एव कुम्भशब्दः।

वराहपुराणे,—

पलद्वयं तत्प्रसृतिर्मुष्टिरेकपलं स्मृतम्।
अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम्।
पुष्कलानि च चत्वारि आढकः परिकीर्त्तितः॥
चतुराढको भवेद्द्रोण इत्येतन्मानलक्षणम्।

---

१ ग संज्ञान्तरम्।

तथा—चतुर्भिः सेरिकाभिश्च प्रस्थ एकः प्रकीर्त्तितः॥

तच्च हेमाद्रिः,— सेरिका कुडवः।

तथा कल्पतरुः,—सेरिका कुडवः स च द्वादश-प्रसृतिपरिमितः।

द्वादशप्रसृतिभिः सेरिका तच्चतुष्टयं प्रस्थ इति समय-प्रकाश[१]-रत्नाकर-स्मृतिसागरेष्वप्युक्तम्।

तथा—भूपालपद्धतौ प्रमाणस्थपुरुषस्य प्रमाणस्थकर-चरणस्य द्वादशप्रसृतिभिः कुडव उत्तरोत्तरं चतुर्गुणाः प्रस्थाढकद्रोणा भवन्ति। ततश्चतुःषष्ट्या कुडवैर्द्रोण इत्यु-क्तम्। एवमेव कल्पतरुकारः।

यत्तु पठन्ति,—

पञ्चकृष्णलको माषस्तैश्चतुःषष्टिभिः पलम्।
द्वात्रिंशता पलैः प्रस्थो मागधेषु व्यवस्थितः॥
आढकस्तैश्चतुर्भिस्तु द्रोणः स्याच्चतुराढकः।

तथा—सर्व्वेषामेव मानानां मागधं श्रेष्ठमुच्यते॥

तदेतन्मागधमाच इत्याहुः। तन्न, गोपथब्राह्मण-सम्वादित्वेन साधारण्यौचित्यात् मागधेष्विति व्यवहरण[२]-परम्।

एवञ्च श्रेष्ठतापि न परिमाणाधिक्यात्, अपि तु वेद-मूलकत्वादिति ध्येयम्।

इह प्रकृतमनुवाक्ये वधस्ताडनमङ्गच्छेदो घातनमिति चित्रूपः। स च हर्तृस्वामिगुणवत्त्वागुणवत्त्वापेक्षया व्यवस्थित इति कुल्लूकभट्टः।

---

१ क समयप्रदीप—। २ घ पुस्तके व्यवहार—।

नारायणस्त्वाह वधस्ताडनादिर्ब्राह्मणादिद्रव्यत्वे त्वङ्ग-च्छेदादीति। हर्तृहारकस्वामिगुणापेक्षया सुभिक्षदुर्भिक्ष-कालापेक्षया चेति मिताक्षराकारः। कुम्भसङ्ख्याविसम्वादो-ऽप्येवमेव सम्वादनीयः। शेषे च दशकुम्भाधिकन्यूने—तस्य च तद्धनमिति स्वामिनो यदपकृतं तद्दाप्य इत्यर्थः।

मनूक्तमेकादशगुणं दण्डदानं स्वामिनो हृतधान्य-दानञ्च प्रथमधान्यचौर्य्यविषयम्। वार्हस्पत्ये तु स्वामिने दशगुणं धान्यदानं राज्ञश्च[1] हृतद्विगुणदण्डदानं चौर्य्या-भ्यासविषयमित्यविरोध इति रत्नाकरः।

तथा,—मनुः,—

परिपूतेषु धान्येषु शाकमूलफलेषु च।
निरन्वये शतं दण्ड्यः सान्वयेऽर्द्धशतं दमः॥

परिपूतेषु अपासितकल्केषु निरन्वये रक्षकरहित इति कल्पतरुः। ग्रहणहेतुप्रीत्यादिशून्ये इति रत्नाकरः। उभ-यत्र हरण इति। तद्द्रव्यसम्बन्धयोग्यतापादकं ज्ञाते-यादिकमन्वयस्तमभिधाय यत्र ग्रहणं न भवति तन्निरन्वयं विपरीतं सान्वयमिति नारायणः।

अत्र मनौ एकादशकुम्भाधिके वधाभिधानं तदूने एकादशगुणदण्डविधानञ्च गृहधान्यहरणविषयम्। इदन्तु शतदण्डाभिधानं खलस्थधान्यविषयमिति रत्नाकरः। एवमेव कुल्लूकभट्टः।

---

१ ग राज्ञे।

तथा,—मनुः,—

पुष्पेषु हरिते धान्ये गुल्मवल्लीनगेषु च ।
अल्पेष्वपरिपूतेषु दण्डः स्यात् पञ्चकृष्णलः ॥

हरिते धान्ये क्षेत्रस्थ एव घासार्थमपहृते । हरिते माषादाविति नारायणः ।

अल्पेषु एकपुरुषोद्वाह्यादपि हीनेषु, अपरिपूतेषु अनपहृतकल्कोषु । अत्र धान्येष्विति वचनविपरिणामेन सम्बन्धः । कृष्णलाः सौवर्णा लिखितपरिभाषानुसारात् ।

कुल्लूकभट्टस्तु,—

देशकालाद्यपेक्षया सौवर्णराजतावित्याह ।

मनुः,—

को(गो)ष्ठागारायुधागारदेवतागारभेदिनः ।
हस्त्यश्वरथहर्न्तृंश्च हन्यादेवाविचारयन् ॥

कोष्ठागारं धान्यागारमिति रत्नाकरः । राजगृहमिति मनुटीकायां नारायणः । अविचारयन् तथाविधकर्म्मणि निश्चितेऽविलम्बमानः । धान्यागारादौ भित्तिभेदनमेव सन्धिस्थानीयमतस्तत्कर्त्तुः सन्धिच्छिद एवायं दण्डः ।

तच्छेदमात्रे पूर्व्वसाहसस्य प्रकीर्णके वक्ष्यमाणत्वात्, भेदिन इति निर्द्देशनात्ताच्छील्यप्रतीतौ भेदाभ्यासेऽति-प्रसङ्गनिवृत्यर्थो वा वधः ।

यद्वा भेदनमिह चौर्य्यपरमेव । आकरे तु तत्प्रकरण एव पाठात् । कामधेनु-कल्पतरुकारादिभिस्तत्रैवावतारणाच्च । देवतागारेऽपि जगन्नाथादेरिवालङ्कारायपहारसम्भवात् ।

तथा,—

गोषु ब्राह्मणसंस्थासु स्थूरिकायाश्च भेदने।
पशूनां हरणे चैव सद्यः कार्य्योऽर्द्धपादिकः॥

ब्राह्मणसंस्थासु ब्राह्मणसम्बन्धिनीषु हृतास्विति शेषः प्रकरणात्। स्थूरिकेति वृषमहिषादिभिः पृष्ठवाह्यो भारः। स्थूलास्फूलौ परिवृंहण इति धात्वनुसारात्। ततः स्वार्थिकः कन्प्रत्ययः, स्थादित्यादिना इत्वं रलयोरेकत्व स्मरणात्। स्थूरिका गोणीति प्रसिद्धा तस्या भेदने पाठने धान्याद्य-पहरण इति यावत्।

यत्तु बन्ध्याया गोर्व्वाहनार्थं नासाभेदन इति कुल्लूक-व्याख्यानं तदनादेयं पाठापरिचय-पदार्थापरिज्ञानमूल-कत्वात्।

वोढुर्वृषभस्य भारः स्फूरिका तस्या भेदने तद्गतधान्याप-हार इति नारायणव्याख्यानमसङ्गतं स्यात्। नासाभेद-नस्यापदार्थत्वात् प्रकरणविरुद्धत्वाच्च।

एतेन स्फुरिका बन्ध्या, भेदनं नासाभेदनमिति रत्नाकर-व्याख्यानमपास्तम्। अर्द्धपादिको भिन्नार्द्ध[1]पादद्वयः।

तथा,—

क्षेत्रिकस्यात्यये दण्डो भागाद्दशगुणो भवेत्।
ततोऽर्द्धदण्डो भृत्यानामज्ञानात् क्षेत्रिकस्य तु॥

क्षेत्रिकस्यात्यये कृषीबलभागापहरणे धान्यापहारी शस्यापहारी त्वेकादशगुणं दण्ड्य इति रत्नाकरः।

---

१ ग छिन्नार्द्धपादद्वय।

हलायुधस्तु,—

क्षेत्रस्वामिनोऽत्यये तद्दोषेण यदा शस्यदोषो भवति तदा राज्ञा स्वग्राह्यभागाद्दशगुणं दण्डनीयः। तदज्ञानाच्च भृत्य-दोषेण शस्यनाशे भृत्य एव तदर्थेन दण्डनीय इत्यर्थमाह ।

---

अथ प्रकीर्णापहारिदण्डः ।

तत्र प्रकीर्णं नाम प्रागुक्तद्विपदादिव्यतिरिक्तं रत्ना-दीत्युक्तं तत् त्रिविधन्तूत्तमादिभेदात् ।

तत्र नारदः,—

तदपि त्रिविधं प्रोक्तं सर्व्वापेक्षं मनीषिभिः ।
क्षुद्रमध्योत्तमानाञ्च द्रव्याणामपकर्षणात् ॥

अपकर्षणमपहरणम् ।

क्रमेणामीषां परिगणनमाह स एव ।

मृद्भाण्डासन खर्व्वास्थि[1] दारुचर्म्मतृणादिकम् ।
शमीधान्यं कृतान्नञ्च क्षुद्रद्रव्यमुदाहृतम् ॥

शमीधान्यं शिम्ब्यादिभवं[2] मुद्गादि ।

वासः कौषेयवर्ज्जञ्च गोवर्ज्जं पशवस्तथा ।
हिरण्यवर्ज्जं लौहञ्च मध्यं व्रीहियवा अपि[3] ॥

लौहशब्दो धातुपरः । मध्यं मध्यमद्रव्यमित्यर्थः ।

हिरण्यरत्नकौशेयं स्त्रीपुंसौ गजवाजिनः ।
देवब्राह्मणराज्ञाञ्च द्रव्यं विज्ञेयमुत्तमम् ॥

---

१ ग खट्वादि । क्वचित् खड्गादि । २ घ शिम्ब्यां भवम् ।
३ ख पुस्तके व्रीहियवं तथा ।

देवद्रव्यं क्षुद्रमप्यमीषामुत्तममित्यर्थकमिति स्मृतिसार-कारः। एवमेव ग्रहेश्वरमिश्राः।

अत्र वृहस्पतिः,—

हीनमध्योत्तमत्वेन चिविधं तत्प्रकीर्त्तितम्।
द्रव्यापेक्षो दमस्तत्र प्रथमो मध्यमोत्तमः॥

प्रथमो मध्यमोत्तम इति प्रथममध्यमोत्तमसाहसरूप इत्यर्थः। इत्थं हीनादिद्रव्यापहारेषु प्रथमादिसाहसानां व्यवस्थितत्वेऽपि तेषां हीनत्वादितारतम्यात् साहसानां न्यूनाधिकसंख्याभेदो व्यवस्थितो द्रष्टव्यः।

एतत् विवृणोति स एव,—

क्षेत्रोपकरणं[1] सेतुं पुष्पमूलफलानि च।
विनाशयन् हरन् दण्ड्यः शताद्यमनुरूपतः॥
पशुवस्त्रान्नपानादि गृहोपकरणन्तथा।
हिंसयन् चौरवद्दा[2]प्यो द्विशतान्तं दमन्तथा॥
स्त्रीपुंसौ हेमरत्नानि देवविप्रधनन्तथा।
कौशेयञ्चोत्तमं द्रव्यमेषां मूल्यसमो दमः॥
द्विगुणो वा कल्पनीयः पुरुषापेक्षया नृपैः।
हर्त्ता च घातनीयः स्यात् प्रसङ्गविनिवृत्तये॥

शताद्यं शतावरं द्विशतान्तं अनुरूपतो [3]विनाशे चाप-हृतमूल्यानुसारेण देशकालशक्त्यनुसारेण च। पुरुषा-पेक्षया आढ्यदरिद्रपुरुषापेक्षया। अत्र यस्य मूल्यमात्रं

१ घ पुस्तके कर्षणमिति पाठः। २ ग घ चौरयन्।
३ घ विनाशितापहृत।

सम्भवति तस्य तन्मात्रं यस्य त्वधिकं तस्य द्विगुणो दण्डः। यस्य तु मूल्यमात्रमपि नास्ति चौर्य्यं चातिप्रसङ्गस्तस्य वध इति व्यवस्थेति रत्नाकरः।

मनुः,—

कोष्ठागारायुधागारदेवतागारभेदिनः।
हस्त्यश्वरथहन्तृंश्च हन्यादेवाविचारयन्॥

आगारपदोपसन्धानादायुधमिह राजकीयं द्रष्टव्यम्। एतदप्यतिप्रसङ्गविषयमिति प्रतिभाति॥

तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम्।
अनापृच्छ्य तु गृह्णानो हस्तच्छेदनमर्हति॥

इति बृहस्पतिवचनमप्यतिप्रसङ्गविषयमेव। तृणाद्यपहारविषयेण मूल्यद्विपञ्चगुणदण्डेन समं हस्तच्छेदस्य वैषम्येण विकल्पायोगादिति द्रष्टव्यम्।

यत्तु,—

येन येन परद्रोहं करोत्यङ्गेन तस्करः।
छिन्द्यात्तत्तस्य नृपतिर्न करोति यथा पुनः॥

इति कात्यायनवचनं तद्यक्तमेवातिप्रसङ्गविषयं न करोति यथा पुनरित्यभिधानात्। एवञ्च यत्र दण्डे विशेषो न श्रूयते तत्रैव तद्युक्तव्यवस्थानुसारेणैव तत्कल्पनमिति प्रतिभाति।

यच्च,—

क्षुद्रमध्यमहाद्रव्यहरणे सारतो दमः।
देशं कालं वयः शक्तिं सञ्चिन्त्य दण्डकर्म्मणि॥

इति याज्ञवल्क्यवचनं तस्याप्यस्यामेव व्यवस्थायां तात्पर्य्यम्।

यत्तु,—

साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः।
स एव दण्डः स्तेयेषु द्रव्येषु त्रिष्वनुक्रमात्॥

इति नारदवचनम्, तत्र रत्नाकरकृतैवोक्तं अयमतिदेशः क्षुद्रमध्यममहद्द्रव्येषु [1]विरुद्धदण्डावरुद्धेषु द्रष्टव्य इति।

तेषूत्तमद्रव्यापहारे नारदः,—

तुलाधरिममेयानां गणिमानाञ्च सर्व्वशः।
एभिरुत्कृष्टमूल्यानां मूल्याद्दशगुणो दमः॥

तुलाधरिमं कर्पूरादि, तुलादण्डे धृत्वा तुलनातो मेयं व्रीह्यादि, उत्सङ्गतः प्रस्थादिपरिमेयत्वात्। गणिमं पूगादि, प्रायेण विंशत्यादिगणनया क्रमादिव्यवहारविषयत्वात्।

एभिरिति पूर्व्वप्रक्रान्तानां काष्ठभाण्डादीनां प्रत्यवमर्षः, तन्मूल्याधिक-मूल्यत्वेनोत्तमत्वं प्रतिपाद्यते।

अथोत्तमानां द्रव्याणां तारतम्यादपहारिणो दण्डतारतम्यमित्याह।

मनुः,—

तथा धरिममेयानां शतादभ्यधिको दमः।
सुवर्णरजतादीनामुत्तमानाञ्च वाससाम्॥
पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते।
शेषेऽप्येकादशगुणं मूल्याद्दण्डं प्रकल्पयेत्॥

अत्र धान्यं दशभ्यः कुम्भेभ्य इत्यादि पूर्व्वोक्तेन सह

---

[1] ग दण्डानवरुद्धेषु।

तथेति समीकरणं देशकालापहृतद्रव्यस्वामिजातिगुणाद्य-पेक्षयेति मनुटीका । धरिमं तुलनीयम् ।

नारायण-सर्व्वज्ञस्तु,—

धरिमं तुला तन्मेयानां सुवर्णरजतव्यतिरिक्तानां ताम्रादीनामित्यर्थमाह । तथा शतादिति निष्कशतात् ।

एतच्च षोडशमाषरूप-सुवर्णचतुष्टयरूपनिष्कव्यवस्थया ग्राह्यमिति । तथा पञ्चशत इति ताम्रादिविषय इत्याह । शेषे पञ्चाशदभ्यधिकन्यूने ।

एवञ्च नारदोक्तो मूल्यदशगुणदण्डोऽप्यस्यापि शेषे द्रष्टव्यः । शताधिके च दमो मनूक्तो वध एव ।

सुवर्णरजतादीनामुत्तमानाञ्च वाससाम् ।
रत्नानाञ्चैव सर्व्वेषां शतादभ्यधिके वधः ॥

इति नारदसम्वादात् ।

कामधेनौ तु मनुवचने दम इत्यत्र वध इत्येव पठितं मिताक्षरापि तथैव । स चायं वधो ब्राह्मणद्रव्यत्वे मारणं अन्यत्र तु अङ्गच्छेदादिरिति नारायणः ।

हलायुधोऽप्याह,—

शतसंख्या चात्र पलस्य मन्तव्या वाससाञ्च शतसंख्यात्वं वासोऽवयविनामेव प्रच्छदपटादीनामिति ।

मिश्रास्त्वाहुः,—

हेम्नो रजतस्य पटदुष्कुलादेर्वा पलशताधिकमूल्यस्याप-हर्त्ता वध्यः शतपलाधिकमूल्यस्यापहर्त्ता वध्यः पञ्चाशत-पलाधिकमूल्यस्यापहर्त्ता छिन्नहस्तः कार्य्यः, तदूनस्य तु हर्त्ता एकादशगुणं तन्मूल्यं दाप्य इति ।

गोविन्दराजस्तु शतादिति सुवर्णशतादित्यर्थत्वेन शतसुवर्णाधिकद्रव्यहरणे वध इत्याह। तच्चिन्त्यं नारद-वाक्ये रत्नानि मरकतादीनीति विवक्षितानि।

मुख्यानाञ्चैव रत्नानां हरणे वधमर्हति।

इति मनुवचनदर्शनात्।

यत्तु—शारीरोऽङ्गच्छेदो वा दण्ड इत्यनुवृत्तौ शङ्ख-लिखिताभ्यामुक्तं सुवर्णरत्नापहारे इति। तत्र शारीर-दण्डस्ताडनं, अङ्गच्छेदः कर्णादिच्छेदः, तदेतत्पञ्चाशदून-विषयं निर्धनविषयञ्चेति रत्नाकरः।

यच्च दण्ड इत्यनुवृत्तौ विष्णुः,—

रत्नापहार्य्युत्तमसाहसः। इति।

तन्मध्यमधनविषयमिति रत्नाकरः। अमुख्योत्कृष्टरत्न-विषयत्वेऽपि न विरोधः। शङ्खलिखितोक्तेरपकृष्टविषयत्वात्।

अयमत्र विवेकः,—

ताम्रादिषु पणशताधिकेषु ब्राह्मणराजस्वेष्वपहृतेषु अपहर्त्तुर्वधोऽन्येष्वङ्गच्छेदः। एवं सुवर्णादिषु वधोऽङ्गच्छेदो वा तथा मुख्येषु रत्नेषु वधोऽन्यत्राङ्गच्छेदः पञ्चाशत्पणा-दिकेषु ताम्रादिषु हस्तच्छेदः। तदूनेषु तन्मूल्यादेकादश-गुणो धनदण्डः। पञ्चविंशतिपणेषु तेषु कर्पूरादिषु च स्थूलेष्वपहृतेषु तन्मूल्यापेक्षया दशगुणो धनदण्ड इति।

अथ मध्यमद्रव्यापहारे शङ्खलिखितौ,—

अष्टशतं सौताद्रव्यापहारे यथाकालम्।

अष्टशतमष्टाधिकशतं सीता कृष्यमाणा भूमिस्तद्द्रव्यं हलकुद्दालादि। यथाकालं कर्षणसमये। एवञ्च कालान्तरे दण्डापकर्षौ द्रष्टव्यः ।

तथाच मनुः,—

सीताद्रव्यापहारे तु शस्त्राणामौषधस्य च ।
कार्ष्य(फालो)माषोदकानाञ्च राजा दण्डं प्रकल्पयेत् ॥

शस्त्राणां खड्गादीनां औषधस्य कल्याणघृतादेः कार्ष्यं कृष्यादि फालं तेन कृषिकाले हलाद्यपहारे सति कृषेरभावे यदा बहुशस्यबाधस्तदा दण्डभूयस्त्वमन्यथाऽल्पो दण्डः। एवं शस्त्रादिष्वपि द्रष्टव्यमिति हलायुधः। हृतदानं सर्व्वत्र पूर्व्वमुक्तम् ।

मनुः,—

पुष्पेषु हरिते धान्ये गुल्म-वल्ली-नगेषु च ।
अल्पेष्वपरिपूतेषु दण्डः स्यात् पञ्च कृष्णलाः ॥

पुष्पं कुसुमादीति मिश्राः। नगो वृक्षः ।

तथा,—

परिपूतेषु धान्येषु शाकमूलफलेषु च ।
निरन्वये शतं दण्ड्यः सान्वये ऽर्द्धशतं दमः ॥

निरन्वये ग्रहणहेतुप्रीत्यादिशून्ये इति रत्नाकरः। रक्षकरहिते इति कल्पतरुः। एवमेव हलायुधः। उभयत्र हरणे इति शेषः ।

अत्र फलमूलयोः क्षुद्रद्रव्येषु पाठात् तत्साहचर्य्येण स्वरूपेण च शाकस्यापि क्षुद्रत्वनिश्चयात् दण्डस्य च

महत्त्वात् वचनस्यास्य रत्नाकरे मध्यद्रव्यप्रकरणेऽव-तारणाच्च। विरोधे शाकमूलफलानि राजब्राह्मणस्वामि-कानि देवताद्यर्थानि यज्ञार्थमुपकल्पितानि दुर्लभानि वा विवक्षितानीति प्रतिभाति।

नारायणेन तु शाकमूलफलेषु बहुमूल्यान्नोपयुक्तेषु इति व्याख्यातम्।

शङ्खलिखितौ,—

[1]एकचक्राहरणे चत्वारिंशत् कटेऽशीतिशतम्।

एकचक्रमेकरथाङ्गं चत्वारिंशत्पणा एवाशीतिशत-मशीत्यधिकं शतम्।

अथ क्षुद्रद्रव्यापहारे व्यासः,—

मध्यहीनद्रव्यहारी पुष्पमूलफलस्य च।
दाप्यस्तद्द्विगुणं दण्डमथवा पञ्चकृष्णलान्॥

मध्यहीनं द्रव्यमन्नादि, कृष्णलशब्देन चियवपरिमितं द्रव्यमभिधेयं तच्चात्र सौवर्णं लिखितपरिभाषानुसारात्।

गौतमः,—

फलहरितशाकादाने पञ्चकृष्णलमन्ये।

आदाने हरणे दण्ड इति शेषः।

अत्र फलशाकयोरनन्तरोक्तातिरिक्तयोरिह ग्रहणमतो न तेन विरोधः। अस्तु वा विकल्पः—अन्ये इत्यभि-धानात्। स चाभ्यासाऽनभ्यासाभ्यां ग्रहणहेतु-प्रीत्याद्यति-शयानतिशयाभ्यां व्यवस्थित इति प्रतिभाति।

---

१ घ एकचक्राहरणे।

मनुः,—

सूत्रकार्पासकिण्वानां[1] गोमयस्य गुडस्य च ।
दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च ॥
वेणु वैणवभाण्डानां लवणानां तथैव च ।
मृण्मयानाञ्च हरणे मृदो भस्मन एव च ॥
मत्स्यानां पक्षिणाञ्चैव तैलस्य घृतस्य च ।
मांसस्य मधुनश्चैव यच्चान्यत् पशुसम्भवम् ॥
अन्येषामेव[2]मादीनां मद्यानामोदनस्य च ।
पक्वान्नानाञ्च सर्व्वेषां तन्मूल्याद्द्विगुणो दमः ॥

तथा,—

यश्चैतान्युपक्लृप्तानि द्रव्याणि स्तेनयेन्नरः ।
तं शतं दण्डयेद्राजा यश्चाग्निं[3] चोरयेद्गृहात् ॥

किण्वं सुराबीजभूतद्रव्यं, वैणवं भाण्डं जलाहरणार्थं स्थूलवैणवखण्डनिर्म्मितं पात्रम् ।

अत्र नारायणसर्व्वज्ञेन वैणवेत्यत्र वैदलेति पठित्वा उभयत्र भाण्डान्वयं व्याख्याय वैदलभाण्डानां विदलीकृत काष्ठभाण्डानामिति व्याख्यातम् ।

अन्यत् पशुभवं चर्म्मदन्तादि । रोचनादीति नारायणः । अन्येषामेवमादीनां पिष्टकादीनामुपक्लृप्तानि भोजनादिकार्य्यार्थं सन्निधापितानि । तं शतमित्यत्र कुल्लूकभट्टेन नारायणसर्व्वज्ञेन च तमाद्यमिति पठित्वा प्रथमसाहसमिति व्याख्यातम् ।

---

१ ख—किल्वानाम् । २ मूले अन्येषाञ्चैवम् ।
३ क ख पुस्तकद्वये यस्त्वाम्रम् ।

अग्निरिह लौकिकः। विषये लौकिकः स्यादिति वचनात्। विषये संशये इति रत्नाकरः।

लौकिकमप्यग्निं चोरयतोऽयं दण्ड इति गोविन्दराजः। तदेतदयुक्तं अल्पापराधे गुरुदण्डस्यान्याय्यत्वात्। तस्मात् त्रेताग्निं गृह्याग्निं चाग्निगृहाद्यश्चोरयेत् तं प्रथमसाहसं दण्डयेदग्निस्वामिनश्चाधानोपक्षयं दापयेदिति कुल्लूकभट्टः। एवमेव नारायणः।

विष्णुः,—

सूत्र-कार्पास-गोमय-दधि-क्षीर-तक्र-गुड-तृण-लवण-भस्म-मत्स्य-पक्षि-तैल-घृत-मांस-मधु-विदल-वेणु-मृण्मय-लोहभाण्डानामपहर्त्ता मूल्याद्द्विगुणं दण्ड्यः—पक्वान्नानाञ्च।

हलायुधेन त्रिगुणमिति पठितम्।

शङ्खलिखितौ,—

कृतकाष्ठाश्मकौलालचर्म्मवैत्रदलभाण्डेषु मूल्यात् पञ्चगुणस्त्रयो वा कार्षापणाः।

कृतकाष्ठं घटितकाष्ठं कौलालं कुलालनिर्म्मितं मृण्मयमिति यावत्। भाण्डपदमश्मादिभिः सम्बध्यते।

नारदः,—

काष्ठभाण्डतृणादीनां मृण्मयानां तथैव च।
वेणुवैणवभाण्डानां तथा स्नाय्वस्थिचर्म्मिणाम्॥
शाकानामार्द्रमूलानां हरणे फलमूलयोः।
गोरसेक्षुविकाराणां तथा लवण-तैलयोः॥

पक्वान्नानां कृतान्नानां मद्यानामोदनस्य च ।
सर्व्वेषां स्वल्पमूल्यानां मूल्यात् पञ्चगुणो दमः ॥

कामधेनौ,—

ओदनस्येत्यत्र-आमिषस्येति पठितम् ।

मिताक्षरायामौषधस्येति पठितमुक्तञ्च,—

ओदनस्य पक्वान्नेन संग्रहादिति प्रतिभाति ॥

अत्र मनूक्तानां मध्वादीनां नारदोक्तानां गोरसादीनां मूल्यद्विगुण-पञ्चगुण दण्डविकल्पो ऽल्पाल्पदध्यादिविषय-तया व्यवस्थित इति प्रतिभाति ।

मनुः,—

यस्तु रज्जुं घटं कूपाद्धरेद्भिन्द्याच्च यः प्रपाम् ।
स दण्डं प्राप्नुयान्माषं तच्च तस्मिन् समाहरेत् ॥

कूपात् कूपसमीपात् रज्जुं घटमिति रज्जुं वा घटं वा इति कुल्लूकभट्टः । तच्च रज्जुमेकं घटमेकञ्च द्रव्यमिति रत्नाकरः ।

कामधेनौ तु,—

तदित्यग्रे दृष्ट्वा वज्रघटमिति पठितम् । एवमेव हलायुध-निबन्धः ।

पारिजातेऽपि तथैवेति पठित्वा समाहारद्वन्द्व उक्तः । तस्मिन् कूपे समाहरेत् त्यजेत्[1] ।

शङ्खलिखितौ,—

अब्राह्मणो ब्राह्मणस्य समिदाज्येध्माग्नि काष्ठ-तृणोपल[2]-पुष्पफलमूलाद्यपहरन् वा बलादविज्ञानतो[3] हस्तच्छेदन-

१ ग योजयेत् । २ ग पुस्तके तृणोलप— ।
३ ग अपरिज्ञानतः ।

माप्नुयात्। [1]कुशकरकाग्निहोत्रद्रव्याण्यपहरेत् प्रत्यक्षतो-ऽङ्गच्छेदः स्यादप्रत्यक्षं यदा विदितोऽयं किल्बिषीति ब्राह्मणः खरयानमाप्नुयात् मूत्रमौण्ड्यमितरेषां खरयानमेव च।

ब्राह्मणोऽत्र यागादिपरः। समिदादीनि यागाद्यर्थ-मानीतानीति। करकः कमण्डलुः। अग्निहोत्रद्रव्याण्या-हवनीयानीति। किल्बिषी चौरः प्रकरणात्।

इतरेषां क्षत्रियादीनां चौर्य्याधिकारे गौतमः,—

न शारीरो ब्राह्मणदण्डः।

कस्तर्हि दण्ड इत्यत्राह,—

कर्म्मवियोगविख्यापनविवासनाङ्कनानि, अवृत्तौ प्राय-श्चित्ती सः।

कर्म्मवियोगस्तेन सह क्रियानारम्भः। स्पर्शादित्याग इति हलायुधः।

विख्यापनं खरारोहडिण्डिमादिना चौरत्वद्योतनं विवासनं स्वदेशान्निःसारणं, अङ्कनं ललाटादौ चौर्य्य-चिह्नाचरणम्।

एतान्ययागादिपरब्राह्मणविषयाणीति शङ्खलिखित-वचनविरोधपरीहारपरो रत्नाकरः।

तथा लक्ष्मीधरेण तु,—

शङ्खलिखितवाक्यं ब्राह्मणो ब्राह्मणस्येति पठितम्। तन्मते—ब्राह्मणस्य ब्राह्मणेन समिदादिहरणे हस्तच्छेद एवाब्राह्मणस्य ब्राह्मणेन हरणात्तु न शारीरो दण्ड इत्यादि नेयमिति। तत्रैवोक्तम्।

---

१ क्वचित् चर्म्मभाण्डेत्यधिकः पाठः।

कामधेनौ तु नञन्तर्भावेनैव पाठो दृष्टः ।

अवृत्तावन्येन प्रकारेण जीवनानुपपत्तौ ।

आपस्तम्बः,—

परपरिग्रहमविद्वानाददान एवोदके[१] मूले फले पुष्पे गन्धे ग्रासे शाक इति वाचा बाध्यो विद्वांश्चेद्वाससः परिमोषणेन दण्ड्यः कामकृते तथा प्राणसंशये भोजनमाददानः ।

वाचा बाध्यो तर्ज्जनीयः[२] पूर्व्वमध्वगस्य क्षीणवृत्तेर्द्विजस्य मूलकद्वयग्रहणे चणकादिमुष्टिग्रहणे च मनुना दण्डाभावप्रतिपादनाद्च मूल इति ग्रास इति तदन्यविषयं स्वामिप्रतिषेधविषयं वा । कामकृत इति कामकृतेऽपीत्यर्थः । एतदपि तथैव सप्तमे भक्त इति दण्डबाधप्रकरणीयमनुवचनेनैकमूलकमेव ।

एतद्वाक्यं रत्नाकराद्यलिखितमपि कामधेनौ हलायुधीये च दृष्ट्वा लिखितम् । एतद्दर्शनादवृत्तावित्यादिगौतमवाक्यप्रतीकमपि एतत्समानविषयमेवेति प्रतिभाति । द्वयोरिति क्षुद्रद्रव्यापहारप्रकरणीयत्वादेकमूलककल्पनालाघवात् ।

यत्तु मतं जातिनियतयाजनादिरूपाया जीविकाया वृत्तित्वादवृत्तावित्यादेरयमर्थो यदि जात्युक्तया जीविकया योगक्षेमौ कर्त्तुं न शक्नोति ब्राह्मणस्तदा चौर्य्यमपि कुर्य्यादिति ।

तदेतदपेशलम् कल्पनागौरवात् तत्तन्निषेधविधिविरोधात् । तत्तद्दण्डोपदेशविरोधाच्च ।

---

१ क्वचित् पाठः एधोदके । २ ग भर्त्सनीयः ।

एवञ्च रत्नाकरव्याख्यानेऽपि जीवनपदं तत्तत्कालीन-प्राणपरमेव आपस्तम्बसम्बादात् न तु जीविकापरमुक्त-दोषादिति ।

अथ दण्डानुवृत्तौ विष्णुः,—

अनुक्तद्रव्यहरणे मूल्यसमम् ।

अस्य वाक्यस्य रत्नाकर-कामधेन्वादौ च क्षुद्रद्रव्येषु दण्डमभिधायावतारणात् तेषु च मूल्यद्विपञ्चगुणादि-दण्डस्य दर्शनात्तत्तुल्येषु तस्यैवौचित्यात् क्षुद्रतरद्रव्यापहार-विषयमिदं वचनमपहारनिमित्तप्रीत्याद्यतिशयविषयं वेति प्रतिभाति ।

इति महामहोपाध्याय-धर्म्माधिकरणिकश्रीवर्द्धमानकृतौ दण्डविवेके स्तेयपरिच्छेदस्तृतीयः ।

---

चतुर्थः परिच्छेदः ।

# अथ परदाराभिमर्षणदण्डः ।

तत्र परदारपदेन स्वभार्य्याव्यतिरिक्ता स्त्री विवक्षिता । सा द्विविधा परिणीता अपरिणीता चेति । तयोः परिणीता अनेकविधा साध्वी बन्धकीति, उत्तमा हीनेति [1]स्वजना अस्वजनेति, गुप्ता अगुप्ता चेति, क्लीवादिभार्य्या अन्येति ।

अपरिणीता त्रिविधा कन्या व्रात्या वेश्येति । एते विभाजकोपाधयो वलछलानुरागादिप्रयोगवद्दण्डभेदाय भवन्तीति परिभाषान्यायेन प्रमुखे दर्शिताः ।

आसामभिमर्षणमपि द्विविधं संग्रहणमभिगमश्च । तत्र संग्रहणं नाम समीचीनं ग्रहणं परस्त्रिया आत्मीयताकरणम् ।

तद्विभजते बृहस्पतिः,—

पारुष्यं द्विविधं प्रोक्तं साहसञ्च द्विलक्षणम् ।
पापमूलं संग्रहणं त्रिप्रकारं निबोधत ॥

प्रकारानाह,—

बलोपाधिहृते[2] द्वे तु तृतीयमनुरागजम् ।

एतदभिगमेऽपि द्रष्टव्यम् । तस्याप्येतत्पूर्व्वकत्वात् ।

त्रयमपि पुनर्विभजते ।

तत्पुनस्त्रिविधं प्रोक्तं प्रथमं मध्यमोत्तमम् ।

---

१ ग पुस्तके सुजना असुजनेति ।

२ ग बलात् परिहृते । घ—वलोपाधिकृते ।

अत्र प्रकारत्रयं व्याचष्टे,—

अनिच्छन्त्या यत्क्रियते सुप्तोन्मत्तप्रमत्तया ।
प्रलपन्त्या रहसि वा बलात्कारकृतन्तु तत् ॥
छद्मना गृहमानीय दत्त्वा वा मद्यकार्म्मिणम्[1] ।
संयोगः क्रियते यस्यास्तदुपाधिकृतं विदुः ॥
अन्योऽन्यचक्षूरागेण दूतीसंप्रेषणेन वा ।
कृतं रूपार्थलोभेन ज्ञेयं तदनुरागजम् ॥

मत्स्यपुराणे,—

यस्तु सञ्चारकस्तत्र पुरुषः स्त्र्यथ वा भवेत् ।
पारदारिकवद्दण्ड्यो यश्च स्यादवकाशदः ॥

सञ्चारको यः पुरुषं स्त्रियं वाऽभिसारार्थमभिसारयोग्यं देशविशेषमुपसर्पयतीति हलायुधः । अवकाशदो रहस्यस्थानदायी ।

मनुः,—

कितवान् कुशीलवान् केरान् क्षिप्रं निर्वासयेत् पुरात् ।

केराः परस्त्रीपुरुषसङ्केतकारिण इति रत्नाकरः । एवमेव हलायुधः । प्रथमादिभेदास्तु विस्तरेण व्यासादिभिरुदाहृतास्ते विस्तरभयादेव नात्र लिखिताः । दिङ्मात्रन्तु तेषां दण्डपरिच्छेदार्थमुदाहृतम् ।

तत्र बृहस्पतिः,—

अपाङ्गप्रेक्षणं हास्यं दूतीसम्प्रेषणं तथा ।
स्पर्शो भूषणवस्त्राणां संग्रहः प्रथमः स्मृतः ॥

अत्र स्वकृतस्पर्शवत् परस्त्रीकृतस्पर्शे क्षमाऽपि[2] द्रष्टव्या ।

---

१ क ग कार्म्मिणम् ।    २ ग स्पर्शच्चमापि ।

स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तया
परस्परस्यानुमतं तच्च संग्रहणं स्मृतम् ॥

इति मनुवचनात् ।

व्यासः,—

प्रेषणं गन्धमाल्यानां पूगभूषणवाससाम् ।
प्रलोभनञ्चान्नपानैर्मध्यमः साहसः स्मृतः ॥

बृहस्पतिः,—

एकशय्यासनं क्रीडा चुम्बनालिङ्गनं तथा ।
एतत्संग्रहणं प्रोक्तमुत्तमं शास्त्रवेदिभिः ॥

एवमन्यदूहनीयमाकरे वाऽनुसन्धेयम् ।

तत्र दण्डमाह बृहस्पतिः,—

त्रयाणामपि चैतेषां प्रथमो मध्य[1] उत्तमः ।
विनयः कल्पनीयः स्यादधिको द्रविणाधिके ॥

एतेषां प्रथममध्यमोत्तमसाहसकारिणां क्रमेण प्रथम-मध्यमोत्तमा दण्डाः । अधिकधनस्य तु प्रथमादिभ्यो ऽधिकोऽपि दण्ड इत्यर्थः ।

आपस्तम्बः,—

अबुद्धिपूर्व्वमलङ्कृतो युवा परदारमनुप्रविशन् वाचा बाध्यो बुद्धिपूर्व्वन्तु दण्ड्यः ।

अबुद्धिपूर्व्वमदुष्टबुद्धिपूर्व्वमनुप्रविशन् उपसर्पन् वाचा बाध्यो भर्त्सनीयः ।

मनुः,—

भिक्षुका वन्दिनश्चैव दीक्षिताः कारवस्तथा ।
सम्भाषणं गृहस्त्रीभिः कुर्य्युरप्रतिवारिताः ॥

---

१ क ख घ पुस्तकत्रये मध्यमोत्तम इति पाठः ।

सम्भाषणं परस्त्रीभिः प्रतिषिद्धो न चाचरेत्।
निषिद्धो भाषमाणस्तु सुवर्णं दण्डमर्हति॥

वन्दिनः स्तावकाः, दीक्षिता यज्ञार्थं कृतदीक्षाः, कारवो भृत्यर्थं[1] शिल्पिन इति रत्नाकरः। सूपकारादय इति मनुटीका। अप्रतिवारिता अप्रतिषिद्धाः, भाषमाणः सम्भाषणं कुर्व्वाणः।

स्त्रीदण्डे विशेषमाह याज्ञवल्क्यः,—

स्त्री निषेधे शतं दण्ड्या द्विशतन्तु दमं पुमान्।
प्रतिषेधे तयोर्दण्डो यथा संग्रहणे तथा॥

पतिपुत्रादिभिर्निषिद्धाऽपि स्त्री पुरुषेण सह सम्भाषणादिकं कुर्व्वाणा शतं दण्ड्या। पुरुषस्त्वेवं कुर्व्वन् द्विशतं दण्ड्यः। स्त्रीपुरुषौ परस्परं तथा कुर्व्वाणौ त्वभिगमवद्वर्णानुसारेण दण्ड्यावित्यर्थः।

अत्र मानवं वचनमभ्यासविषयं धनिकविषयं वा। याज्ञवल्कीयन्त्वनभ्यासनिर्धनविषयमिति प्रतिभाति।

अत्रापवादमाह कात्यायनः,—

नाथवत्या परगृहे संयुक्तस्य स्त्रिया सह।
दुष्टं संग्रहणं तज्ज्ञैर्नागतायाः स्वयं गृहे॥

तथा,—

अतोऽन्येन प्रकारेण प्रवृत्तौ ग्रहणं भवेत्।
स्वयमेवागतायान्तु पुंगृहे स न दोषभाक्॥

पुंगृह इति स्त्रीगृहं गते पुंसि स्त्रियां स्वयमुपस्थितायामधिकः[2] पुंसो न दोष एवेत्यर्थः। एतद्वचनं कल्पतरौ

१ ग पुस्तके वृत्त्यर्थं। २ ख घ अपि।

संग्रहणप्रकरणे पठितम् । रत्नाकरे त्वभिगमनानुवृत्तौ कात्यायन इति कृत्वा तत्रैवावतारितम् ।

नारद-कात्यायनौ,—

प्रदुष्टत्यक्तदारस्य क्लीवस्याक्षमकस्य च ।
स्वेच्छानुपेयुषो दारान् न दोषः साहसे भवेत् ॥

अत्र कल्पतरुः,—

प्रदुष्टास्त्यक्ताः स्वदारा येन तस्य दुष्टान् दारान् तथा क्लीवाक्षमयोर्दाराणामेवेच्छयोपगच्छन् न दण्डनीय इत्यर्थः ।

मनुः,—

नैष चारणदोषेषु विधिर्नात्मोपजीविषु ।
संजयन्ति हि ते नारीं निगूढाश्चारयन्ति च ॥

चारणा नटादयः, आत्मोपजीविनो वेशोपजीविनः । ते हि— "भार्य्या पुत्रः स्विका तनुः" इत्युक्त्या आत्मस्थानीयां भार्य्यामुपजीवन्ति ।

आत्मोपजीविषु वेश्याजनेष्विति नारायणः । एषां नायमभिभाषणनिषेधविधिर्नापि तदधीनो दण्डविधिः । यस्मादेते स्वभार्य्यां परपुरुषैः सह सञ्जयन्ति संयोजयन्ति प्रच्छन्नीकृत्य चारयन्ति च इत्यर्थः ।

यदि तु ताभिरपि सह निगूढः सम्भाषणं करोति तदा दण्डलेशं दाप्य इत्याह मनुरेव,—

किञ्चिदेव दाप्यः स्यात् सम्भाषं ताभिराचरन् ।
प्रैष्यासु चैकभक्तासु रहः प्रव्रजितासु च ॥

प्रैष्यासु दासीषु एकभक्तासु एकपुरुषमात्रावरुद्धासु प्रव्रजितासु बौद्धादिव्रतचारिणीषु। किञ्चिदिति शक्त्यनुरूपमिति नारायणः। किञ्चिन्मनुनैव दर्शितसुवर्णापेक्षयाऽल्पमिति रत्नाकरः।

अत्र प्रतिषिद्धे चारणादिस्त्रीसंग्रहणे यो दण्डो विवक्षितविवेकेन पर्य्यवस्यति तदपेक्षया अल्पमिति प्रतिभाति पूर्व्वस्य संग्रहणविषयत्वादत्र तु सम्भाषाभिधानात्।

तत्र च सामान्यतो बृहस्पतिना पूर्व्वसाहसस्य विधानात्। चारणादिस्त्रीषु ततोऽप्यपकर्षस्यौचित्यात् मनूक्तस्य सुवर्णस्य गुरुत्वात् अत्यन्तधनिकादिसंग्रहणविषयकत्वेन व्यवस्थाया अवश्यवक्तव्यत्वात्।

अथ शङ्खलिखितौ,—

सर्व्वेषां स्वदारनियमः स्वकार्य्यप्रतिपत्तिश्च धर्म्मो येन येनाङ्गेनापराधं कुर्य्यात्तदेवास्य छेत्तव्यम्। अष्टसहस्रं वा दण्ड इत्यन्यत्रैवं ब्राह्मणाददण्ड्यो हि ब्राह्मणः।

अङ्गेन हस्तादिना ब्राह्मणवर्ज्जमयं दण्डः सर्व्वेषां ब्राह्मणवर्ज्जमित्यन्वयादिति रत्नाकरः।

एतच्च भावदोषाभावे सतीति नेयं सम्भाषश्च परस्त्रिया इति नारदवचनैकमूलत्वात् लाघवादङ्गच्छेदमात्रपरम्।

मनुः,—

परदाराभिमर्षे तु प्रवृत्तांस्तान् महीपतिः।
उद्वेजनकरैर्दण्डैश्चिह्नयित्वा प्रवासयेत्॥
तत्समुत्थो हि लोकस्य जायते वर्णसङ्करः।
येन मूलहरो धर्म्मः सर्व्वनाशाय कल्पते॥

अत्र तानित्यत्र त्रीणिति पठित्वा त्रीन् ब्राह्मणेतरानिति मिश्रैर्व्याख्यातम्।

तथा,—

अब्राह्मणः संग्रहणे प्राणान्तं वधमर्हति।
चतुर्णामपि चैतेषां दारा रक्ष्यतमाः स्मृताः॥

दण्डैश्चिह्नयित्वा इति नासौष्ठकर्त्तनादिभिरङ्कयित्वा इति मनुटीकायां कुल्लूकभट्टः। शिश्नाछेदादिभिरिति नारायणः।

वधप्रकारेषु यो यत्र विहितस्तेन तत्राङ्कनमिति तत्त्वम्। अब्राह्मण इति प्रातिलोम्येनेति शेषः। इति रत्नाकरः।

अत्र प्रतिभाति एतद्वाक्यद्वयं यद्यप्यभिगमविषयमित्युचितं पूर्व्वत्र स्वदारनियम इति लिङ्गात्, उत्तरत्र परदाराभिमर्षे त्विति सामान्याभिधानस्वरसात् तत्समुत्थो हीत्यादिहेतुमन्निगदसम्बन्धाच्च[१]।

उभयत्र दण्डगौरवाच्च संग्रहणे परदारमैथुने न तु सम्भाषादाविति सर्व्वज्ञीयव्याख्यानदर्शनाच्च।

तथापि "पूर्व्वसन्निपाते शिश्नस्य छेदनं सवृषणस्य" इत्यापस्तम्बसम्वादादङ्गपदस्यापि शिश्नपरत्वे सम्भाविते येन येनेति वीप्सानुपपत्तेर्बाधकत्वादङ्गेन हस्तादिनेति रत्नाकरदर्शनाच्च। उत्तरत्र संग्रहणस्य साक्षादेवाभिधानात् दण्डगौरवे व्यवस्थाया वक्ष्यमाणत्वात्।

---

१ ग पुस्तके सम्बादाच्च।

दारा रक्ष्यतमा इत्युपसंहारस्यातिप्रसङ्गवारणपर-तयाऽप्युपपत्तेरुभयोरपि वाक्ययोः सर्व्वेषु पूर्व्वनिबन्धेषु संग्रहप्रकरणेऽवतारणाच्च संग्रहविषयत्वं निश्चितम् ।

किन्तु हस्तादिच्छेद-सहस्रदण्ड-प्रवासन-वधानाम-तुल्यरूपाणां संग्राह्यस्त्रीप्रातिलो[1]म्यमात्रेण समञ्जयितु-मशक्यत्वादियमत्र व्यवस्था ।

ब्राह्मणस्य संग्रहणस्य गौरवे तदभ्यासे च सचिह्न-प्रवासनमन्यत्र सहस्रपणात्मको दण्डः ।

अब्राह्मणस्य तु प्रतिलोमानुत्तमसंग्रहे तदभ्यासे च वधः । अन्यत्र धनिकस्य सहस्रदण्डो निर्धनस्य हस्तच्छेद इति ।

अब्राह्मणोऽत्र शूद्रो दण्डभूयस्त्वादिति कुल्लूकभट्टः । अब्राह्मणः संग्रहणे इत्यत्र ब्राह्मण्या इति शेष इति कल्पतरुः ।

## अथाभिगमदण्डः ।

तत्राभिगमोऽन्ययोनावयोनौ चेति द्विविधदर्शनात् नान्ययोनावयोनौ वेति विष्णुपुराणीयनिषेधदर्शनाच्च ।

अत्र मनुः,—

सम्वत्सराभिशस्तस्य दुष्टस्य द्विगुणो दमः ।
व्रात्यया सह सम्वासे चाण्डाल्या तावदेव तु ॥

यत्राभिगमे यो दण्ड उक्तः सम्वत्सरव्यापके [ तस्मिन् द्विगुणो ग्राह्यः ।

---

१ ग प्रतिलोम्य ।

एतच्च समयाधिक्यमादायैतदनुसारेणाधिको दण्ड इति परमार्थ इति रत्नाकरः ।][1]

कल्पतरौ तु व्याख्यातम्,—

संवत्सरमनेनोपभुक्ता परस्त्रीति यस्याभिशापः स सम्बत्सराभिशस्तस्तस्य सम्बत्सरमुपभुक्तायां यो दण्ड उक्तः स द्विगुणः स्यात् ।

दुष्टस्येति न केवलमभिशस्तस्य किन्तु दुष्टस्य स्वरूपतो दोषभाज इति ।

मनुटीकायान्तु,—

परस्त्रीगमनदोषेण दुष्टस्य पुंसो दण्डितस्य सम्बत्सरातिक्रमे पुनस्तस्यामेवाभिशस्तस्य पूर्व्वदण्डात् द्विगुणो दण्डः कार्य्य इति व्याख्यातम् ।

व्रात्या प्रभ्रष्टधर्म्माचारा । अनुपपन्नकर्म्मधर्म्माचारा व्रात्या इति हारीतोक्तेरिति रत्नाकरः ।

लक्ष्मीधरोऽप्याह—व्रात्या अत्यन्तदुराचारा, वध-वन्धोपजीविप्रभृतय इति । अतिक्रान्तविवाहकाला कन्येति हलायुधः ।

एवमेव मनुटीकायां नारायणः । कुल्लूकभट्टस्तु व्रात्यजाता व्रात्येत्याह ।

व्रात्यां चाण्डालीञ्च गत्वा ऽदण्डितस्य वत्सरान्त एव गच्छतः "सहस्रन्त्वन्त्यजस्त्रियम्" । इति मनूक्तो दण्डो

---

[1] ग पुस्तके [ ] चिह्नितांशः पतितः ।

द्विगुणः कार्य्य इति मनूक्तस्यैवेदमुदाहरणद्वयम् । तत्र—व्रात्यागमने चाण्डालीगमनदण्डप्राप्त्यर्थमिति कुल्लूकभट्टः ।

नारायणस्त्वाह,—

विवाहकालेऽप्यपरिणीतया[1] कन्यया प्रवृत्तरजसा सकृत् संयोगमात्रेण तज्जातीयगमनदण्डात् द्विगुणो दण्डो नत्वन्यत्रापि सम्वत्सराभिशस्तस्येत्यस्यान्वय इति ।

यः स्वरूपतो दुष्टो वर्षावच्छिन्नपरस्त्रीगमनेनाभिशस्तः सकृदपि व्रात्यां चाण्डालीमभिगच्छति तस्य वर्षावच्छिन्न-परदारगमनदण्डाद्द्विगुणो दण्ड इति कल्पतरुस्वरसः ।

तथा,—

मौण्ड्यं प्राणान्तिके दण्डे ब्राह्मणस्य विधीयते ।
इतरेषान्तु वर्णानां दण्डः प्राणान्तिको भवेत् ॥

यत्राभिगमे प्राणान्तिको दण्ड उक्तस्तत्र ब्राह्मणस्य शिरोमुण्डनमेव दण्ड इत्यर्थः ।

मत्स्यपुराणे,—

बलात्सन्दूषयेद्यस्तु परभार्य्यां नरः क्वचित् ।
वधदण्डो भवेत्तस्य नापराधो परस्त्रियाः ॥
अद्रव्यां मृतपत्नीं तु संगृह्णन्नापराध्नुयात् ।
सान्नां[2] परिग्रहाणस्तु सर्व्वस्वं दण्डमर्हति ॥

सद्रव्यां तां गृहाणस्तु दण्डमुत्तममर्हति ।

इति चतुर्थपङ्क्तिस्थाने कामधेनौ पठितम् । अत्र वध इत्युपलक्षणं यो दण्डो यत्र विहित इत्यर्थः ।

---

१ क ख पुस्तके अपरिणीततया ।

२ ग पुस्तके साध्वीम् ।

इह द्रव्यहीनाया मृतभर्त्तृकायाः स्वेच्छया ग्रहणेऽतिप्रसङ्गादेवं प्रतिभाति। संगृह्णन् इतिवचनात् शूद्रादेः स्वयंग्राहादिविषयमिदं वचनम्। बलादिति छलप्रलोभनादिपरम्।

अद्रव्यामिति विशेषणस्य चायमभिप्रायो ग्रासाच्छादनदानादिना तां प्रलोभ्य गृह्णतो न दण्ड इति।

व्यासः,—

गुप्तायाः संग्रहे दण्डो यथोक्तः परिकीर्त्तितः।
गच्छन्त्यामागतायान्तु गच्छतोऽर्द्धदमः स्मृतः॥

यथोक्त उत्तमसाहसरूप इति रत्नाकरः। यो यत्र विहितः स यथोक्त इति तत्त्वम्। अर्द्धदण्डश्च क्लीवादिभार्य्यासु दण्डाभाव एतद्व्यतिरिक्तविषय इति रत्नाकरः।

बृहस्पतिः,—

गृहमागत्य या नारी प्रलोभ्य स्पर्शनादिना।
कामयेत्तत्र सा दण्ड्या नरस्यार्द्धदमः स्मृतः॥
छिन्ननासौष्ठकर्णानां परिभ्राम्याप्सु मज्जयेत्।
खादयेद्वा सारमेयैः संस्थाने बहुसंस्थिते॥

तत्र सा दण्ड्येति स्त्रियं प्रलोभ्य संगच्छतः पुरुषस्य दण्डस्तेन दण्ड्या तद्दण्डार्द्धश्च पुरुषस्य छिन्नेत्यादिना तस्या एवाधिको वैकल्पिक उक्तः। बहुसंस्थिते बहुभिराकीर्णे।

अथ कात्यायनः,—

नास्वतन्त्राः स्त्रियो ग्राह्याः पुमांस्तत्रापराध्यते।
प्रभुणा शासनीयास्ता राजा तु पुरुषं नयेत्॥

अस्वतन्त्राः सस्वामिकाः स्त्रियो राज्ञा न ग्राह्या नाकर्षणीयाः। राजा तु पुरुषं नयेत् तत्स्वामिनं प्रापयेत्। तेनैव सा शास्या स्वामित्वे तैरेव तद्दण्डो[1] ग्राह्य इति तात्पर्य्यमिति रत्नाकरः।

तथा,—

प्रोषितस्वामिका नारी प्रापिता यद्यभिग्रहे।
तावत् सा बन्धने स्थाप्या यावत्स्यादागतः प्रभुः॥

अभिग्रहे अभिसारनिमित्तके ग्रहणे सति प्रापिता राजपुरुषै राजगृहं नीता।

सेयमभिगमदण्डमातृका दर्शिता।

अथान्ययोनिविषयस्याभिगमस्य बलछलादिकृतत्वकृतं दण्डविशेषमाह।

बृहस्पतिः,—

सहसा कामयेद्यस्तु धनं तस्याखिलं हरेत्।
उत्कृत्य लिङ्गं वृषणौ भ्रामयेद्गर्द्दभेन तु॥
छद्मना कामयेद्यस्तु तस्य स्युर्बहवो दमाः।
अङ्कयित्वा भगाङ्केन पुरान्निर्वासयेत्ततः॥
दमोऽन्तिमः समायान्तु हीनायामार्द्धिकस्ततः।
पुंसः कार्य्योऽधिकायान्तु गमने सम्प्रमापणम्॥

यः सहसा बलेन परस्त्रियमनिच्छन्तीमेव गच्छति तस्य सर्व्वस्वं गृहीत्वा लिङ्गवृषणौ छित्त्वा गर्द्दभेन पुरपरिभ्रामणं दण्डः। यस्तु छद्मना छलेन परस्त्रियमनि-

१ ग स्वामिद्वारैव।

च्छन्तीमेव गच्छति तस्य सर्व्वस्वमादाय भगाङ्केनाङ्कयित्वा पुरान्निर्वासनं दण्डः ।

यस्तु बलछद्म[1] विहाय दूतादिप्रेषणद्वारा समानजातीयां गच्छति तस्यान्तिम उत्तमो दण्डः । हीनायान्तु बलछले विहाय गच्छतो मध्यमः । उत्कृष्टजातीयान्तु दूतादि-सम्प्रैषणद्वारा बलछलाभ्यां गच्छतो मारणमेवेत्यर्थ इति रत्नाकरः ।

एतद्दर्शनाद्बलछलाभ्यां सजातीयाभिगमे उत्तमाधिको दण्डो हीनजातीयाभिगमे उत्तम इति गम्यते, हीनस्य बलेनोत्तमाभिगमे विचित्रो वध इति शेषः । अपराध-गौरवात् ।

पुमांसँ दाहयेत् पापं शयने तप्त आयसे ।

इति वचनाद्वा ।

दर्पगमनाधिकारे मनुरिति कृत्वा कामधेन्वादावस्या-वतारणात् ।

याज्ञवल्क्यः,—

प्रातिलोम्ये वधः पुंसो नार्य्याः कर्णादिकर्त्तनम् ।

आदिग्रहणान्नासादेश्च कर्त्तनमिति मिताक्षराकारः । आदिशब्दः केशादिपर इति रत्नाकरः । कामधेनाववकर्त्तनमिति पठितम् ।

यत्तूक्तं रत्नाकरकृता बृहस्पतिवाक्येऽपि स्त्रीणां कर्णादिकर्त्तनसहितमेव प्रमापणमिति ।

---

[1] ग बलछले ।

तत्रोत्तमस्त्रिया हीनाभिगमानुमतावभिलाषप्रकाशने कर्णच्छेदो न त्वन्यत्राऽपराधाभावादिति प्रतिभाति ।

अथाभिगम्याया गुप्तत्वागुप्तत्वकृतः प्रातिलोम्यानुलोम्यकृतश्च दण्डविशेषो दर्श्यते ।

तत्र याज्ञवल्क्यः,—

[1]स्वजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः ।

एतत् सर्व्ववर्णानां बलात्कारेण गुप्तपरदारगमनविषयम् । उत्तमश्च साहसः साशीतिपणसहस्रात्मक इति मिताक्षराकारः । युक्तञ्चैतत् तदुक्तदण्डे तदुक्तसाहससंख्याया एव ग्रहणौचित्यात् ।

मनुः,—

सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन् ।
शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः ॥
वैश्यश्चेत् क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत् ।
यो ब्राह्मण्यामगुप्तायां तत्समं दण्डमर्हतः ॥
साहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन् ।
शूद्रायां क्षत्रियविशोः साहस्रो वै भवेद्दमः ॥

यो ब्राह्मण्यामिति पञ्चशतानि वैश्यस्य सहस्रं क्षत्रियस्येति नारायणः । तत्समं मध्यमसाहसमिति रत्नाकरः । सहस्रपणं पञ्चाशत्पणात्मकमिति मिताक्षराकारः ।

तथाहि अनेन स्वजातावित्यादि व्याख्याय यदा पुनः सवर्णामगुप्तामानुलोम्येन यथाक्रमं गुप्तां वा गच्छति

१ घ पुस्तके सजातौ ।

तदा मनुनैव विशेष उक्त इति कृत्वा प्रथमचरमश्लोकावबतारितौ। क्षत्रियवैश्ययोरन्योन्यदाराभिगमने यथाक्रमं सहस्रपणपञ्चाशत्पणात्मकौ दण्डौ तदार्हेति कृत्वा मध्यमः श्लोको ऽवतारितः।

एवञ्चैतस्मात् प्रथमश्लोके दण्ड्यो गुप्तामित्यत्रागुप्तामित्यकारप्रश्लेषोऽस्तीति गम्यते।

तथा ब्राह्मणस्य बलात् गुप्तब्राह्मणीगमने साशीतिपणसहस्रदण्डः। याज्ञवल्क्येन तस्यैवोत्तमसाहसत्वाभिधानात्। बलादगुप्तब्राह्मणीगमने तु सहस्रपणात्मकः। बलं विना तद्गमने पञ्चशतपणात्मक इति प्रथमश्लोक समुदायार्थः।

इत्थञ्च,—

यो ब्राह्मण्यामित्यनेनान्तरोक्तयोरुभयोरपि परामर्शो युक्तः।

पञ्चशतमात्रानुकर्षे तु वैश्य-क्षत्रिययोः प्रतिलोमानुलोमस्त्रीगमने नैयायिकं दण्डवैषम्यमुक्तं न स्यात्।

यदपि व्याख्यातं कुल्लूकभट्टेन वैश्यक्षत्रिययोरगुप्तब्राह्मणीगमने वैश्यः पञ्चशतं कुर्य्यात् क्षत्रियन्तु सहस्रिणमित्यनेन यो दण्ड उक्तस्तमेवात्र तावर्हत इति।

तद्रत्नाकरपक्षे सर्व्वथापि न घटते विरोधात्। मिताक्षरापक्षे तु यद्यपि तत्सममिति संख्यासाम्यनिरूपकोऽगुप्तब्राह्मणीगमनदण्ड एकत्र ब्राह्मणकर्म्मकोऽन्यत्र क्षत्रियवैश्यकर्म्मक एवेति विशेषोऽस्ति। तथापि फलतो न विशेष इति न विरोधः।

नन्वनुलोमपरदारगमने दण्डस्यापकर्षः प्रतिलोमतद्गमने तूत्कर्षो युक्तः। प्रकृते तु मतत्रयेऽपि तद्वैषम्यं प्राप्तमिति चेत्।

उक्तमत्र कुल्लूकभट्टेन गुणवतो वैश्यस्यायं दण्डो निर्गुणजातिमात्रोपजीवि क्षत्रियायां शूद्राद्भ्रान्त्या गच्छतो बोद्धव्यो दण्डलघुत्वादिति। गुप्ते तु ते क्षत्रियावैश्ये इत्यर्थः।

शूद्रायां रक्षितायां सर्व्वत्र चात्र गुप्तायां यो दण्ड उक्तः सोऽतिगुप्तायां सातिशयो द्रष्टव्यः।

गुप्तास्वेवं भवेद्दण्डः सुगुप्तास्वधिकं भवेत्।
इति मत्स्यपुराणदर्शनात्।

तथा,— द्वैजातं वर्णमाविशन्नित्यनुवृत्तौ—

वैश्यः सर्व्वस्वदण्डः स्यात् संवत्सरनिरोधतः।
सहस्रं क्षत्रियो दण्ड्यो मौण्ड्यं शूद्र[1]स्य चार्हति॥
ब्राह्मणीं यद्यगुप्तान्तु गच्छेतां वैश्य-पार्थिवौ।
वैश्यं पञ्चशतं कुर्य्यात् क्षत्रियन्तु सहस्रिणम्॥
उभावपि तु तावेव ब्राह्मण्या गुप्तया सह।
विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना॥

द्वैजातं वर्णमिति सामान्यमुखमप्यत्र ब्राह्मणीपरं वैश्यश्चेत् क्षत्रियामिति विशेषविधानात्, तेन ब्राह्मणीं गुप्तामभिगच्छन् वैश्यः संवत्सरं बध्वा सर्व्वस्वेन दण्ड्यः क्षत्रियस्तु सहस्रं दण्ड्यो मूत्रेण शिरोऽभिषिच्य मुण्डनीयश्च। मूत्रेण खरमूत्रेण इति मनुटीका।

---

१ ग मूत्रेण।

ब्राह्मणीमिति वैश्ये पञ्चदशदण्डः शूद्राश्रमादिना निर्गुणजातिमात्रोपजीविब्राह्मणीगमनविषय इति मनुटीकायां कुल्लूकभट्टः ।

एवञ्च दण्डलाघवं सुघटम् । क्षत्रियन्तु सहस्रिणमिति तस्य रक्षाधिकृतत्वादधिको दण्ड इति सर्व्वज्ञः ।

अन्ये तु—पञ्चशतं पञ्चशतमात्रवित्तं सहस्रिणं सहस्रशेषमात्रवित्तमित्यर्थमाहुः ।

उभाविति,—

रक्षितां ब्राह्मणीं गच्छतोर्वैश्यक्षत्रिययोः शूद्रवत् सर्व्वस्वग्रहणसहितं सर्व्वाङ्गच्छेदो दण्डः । कटाग्निना वा दाह इत्यर्थः । कटो वीरणः स चात्र वैकल्पिकः ।

वीरणैः शूद्रं लोहितदर्भैर्वैश्यं शरपत्रैः क्षत्रियं वेष्टयित्वाऽग्नौ प्राश्येत् । इति वसिष्ठदर्शनात् ।

अयमनयोर्दण्डो गुणवत्ब्राह्मणीगमनविषय इति मनुटीका । तेन सर्व्वस्व—सहस्रदण्डोक्तेर्[1]रविरोधो नेयः ।

आह च नारायणः,—

निर्गुण—गुणवत्ब्राह्मण्यपेक्षया दण्डद्वयमिति ।

तथा,—

क्षत्रियायामगुप्तायां वैश्ये पञ्चशतो दमः ।
मूत्रेण मौण्ड्यमृच्छेत्तु क्षत्रियो दण्डमेव च ॥

---

१ ग दण्डोक्तेनाविरोधः ।

यदि क्षत्रियः परक्षत्रियामगुप्तां गच्छेत्तदा गर्द्दभमूत्रेण मुण्डनीयः।

यद्वा,—

वैश्यवत् पञ्चशतं पणान् दण्ड्यः। लक्ष्मीधरेण तु दण्ड-मेवेत्यत्र मौण्ड्यमेवेति पठितम्।

तथा,—

अगुप्ते क्षत्रिया-वैश्ये[1] शूद्रां वा ब्राह्मणो व्रजन्।
शतानि पञ्च दण्ड्यः स्यात्सहस्रन्त्वन्त्यजस्त्रियम्॥

शूद्रां गुप्तामगुप्तां वेति नारायणः।

अत्र शूद्रामित्यत्र हीनायामर्द्धिक इति बृहस्पतिवाक्ये हीनायामित्यत्र चान्यपूर्व्वा शूद्रा विवक्षिता, अनन्यपूर्व्वायां निर्वासनस्मरणात्।

तथा चापस्तम्बः,—

[2]नाश्य आर्य्यः शूद्रायाम्।

तद्ब्राह्मणपरिणीतानन्यपूर्व्वाशूद्राविषयम्। आर्य्यो ब्राह्मणादिर्नाश्यो[3] निर्वास्यः।

अत एवात्र शूद्रायामनन्यपूर्व्वायामिति कल्पतरुकृता व्याख्यातम्।

यत्तु शूद्राव्यतिरिक्तहीनाविषयं बृहस्पतिवचनमिति केनचिदित्युक्तं, "तन्न" दण्डविसम्वादात् निर्वासनापेक्षया मध्यमदण्डस्य लघुत्वात्।

---

१ मूले वैश्यराजन्ये इति पाठः।

२ ख ग पुस्तकद्वये नाप्यः।

३ ख ग—नाप्यः।

मनुः,—

शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन् ।
अगुप्तेऽङ्गैकसर्व्वस्वै र्गुप्ते सर्व्वेण हीयते ॥

द्वैजातं वर्णं द्विजातिस्त्रियमावसन् अभिगच्छन् हीयते इत्यन्वयः। केनेत्याह तस्मिन् द्वैजाते वर्णे अगुप्ते एकेनाङ्गेन सर्व्वस्वेन च, गुप्ते तु सर्व्वेणाङ्गेन सर्व्वस्वेन च। तेन द्विजातिस्त्रियमभिगच्छतः शूद्रस्य तस्यागुप्तत्वपक्षे एकाङ्गच्छेदः सर्व्वस्वग्रहणं दण्डः गुप्तत्वपक्षे तु सर्व्वाङ्गच्छेदः सर्व्वस्वग्रहणञ्चेति फलितार्थः ।

रत्नाकरादौ तु क्वचिदगुप्तैकाङ्गसर्व्वस्वीति क्वचिदगुप्ताङ्गैकसर्व्वस्वैरिति च पठितं तत्राप्युक्त एवार्थः स च यथाकथञ्चिन्नेयः ।

मनुटीकायामगुप्तमङ्गसर्व्वस्वैर्गुप्तं सर्व्वेणेति पठितम् । कल्पतरौ तु—

अगुप्तमङ्गसर्व्वस्वी गुप्तं सर्व्वेण हीयते ।

इति पठित्वा अगुप्तमरक्षितं अङ्गसर्व्वस्वसहितो हीयते तेन येनाङ्गेनापराध्यते तेन सर्व्वस्वेन च हीयते इत्यर्थः ।

रक्षितन्तु व्रजन् सर्व्वेणाङ्गेन हीयते इत्यत्र इति व्याख्यातम् । एतन्मते रक्षिताभिगन्तुः सर्व्वस्वग्रहणं नास्ति ।

शूद्रस्येत्यनुवृत्तौ गौतमः,—

आर्य्यस्त्र्यभिगमने लिङ्गोद्धारः सर्व्वस्वग्रहणञ्च । गुप्ता चेद्दरोऽधिकः ।

---

१ सर्व्वस्वीति क्वचित् पाठः ।

आर्य्यस्त्री त्रैवर्णिकस्त्री। एतद्दर्शनात् पूर्व्ववाक्ये एकमङ्गं लिङ्गमेव, सर्व्वाङ्गच्छेदो वध एव। एकमूलत्वानुरोधात्।

अत एव शूद्रस्य पुनरगुप्तां त्रैवर्णिकस्त्रियमभिगच्छतो लिङ्गोद्धार-सर्व्वस्वापहारौ। गुप्तां गच्छतो वधसर्व्वस्वापहाराविति तेनैवोक्तमित्युपक्रम्य मिताक्षराकृता मनुवचनमवतारितम्।

एवञ्चागुप्ते वध्यस्यैकाङ्गकर्त्तनमिति व्याख्यानमनादेयम्।

आपस्तम्बः,—

वध्यः शूद्र आर्य्यायां दारांश्चास्यापकर्षयेत्[1]। आर्य्यायामिति गच्छन्निति शेषः।

हारीतः,—

श्रेयसः शयनशायिनं राजा बध्वा श्वभिः खादयेत् काष्ठैश्चैतां दहेत्।

श्रेयस उत्कृष्टवर्णस्य शयनशायिनं स्त्रीगामिनं। एतामुत्कृष्टवर्णास्त्रियम्।

गौतमः,—

श्वभिश्च खादयेद्राजा हीनवर्णगमने स्त्रियम्। प्रकाशं पुमांसं घातयेद्यथोक्तं वा।

हीनवर्णगमन इत्यनेन स्त्रियाः कामित्वं गम्यते। यथोक्तमिति पुंसोऽपि वा श्वभिः खादनमिति रत्नाकरः। यथोक्तं लिङ्गोद्धारः सर्व्वस्वग्रहणञ्च पारिजातः।

१ ख उपकर्त्तयेत्।

ब्राह्मणी वृषलं सेवत इत्यनुवृत्तौ,—

शूद्रन्तु घातयेद्राजा शयने तप्त आयसे ।
दहेत् पापकृतं तत्र काष्ठैः पत्रैस्तृणैस्तथा ॥

यमः,—

वृषलं सेवते या तु ब्राह्मणी मदमोहिता ।
तां श्वभिः खादयेद्राजा संस्थाने वध्यघातिनाम् ॥

वध्यघातिनां संस्थाने—वध्यान् घातयन्ति चाण्डालादयस्तैरधिष्ठिते देशे । एतद्दर्शनात् गौतमवाक्ये पुरुषवधे प्रकाशत्वाभिधानात् स्त्रियाः श्वभिः खादनं निभृतमिति भ्रमो हेयः ।

तथा,—

वैश्यं वा क्षत्रियं वा ब्राह्मणी सेवते यदा ।
शिरसो मुण्डनं तस्याः प्रयाणं गर्द्दभेन तु ॥

इह ब्राह्मण्या नग्नायाः शिरोमुण्डन-सर्पिरभ्युक्षण-खरारोहण-राजपथानुव्रजनानि वसिष्ठेन विहितानि पूता भवतीत्युपसंहारदर्शनात् प्रायश्चित्तरूपाणि ।

अत एव कल्पतरौ,—

शूद्रमग्नौ प्राश्येदित्यन्तमेव तद्वाक्यं पठितमतस्तदिहोपेक्षितम् । अत एवानिच्छन्ती च या भुक्तेत्यादि वृहस्पतिवचनमपि नात्राऽवतारितम् ।

मनुः,—

भर्त्तारं लङ्घयेद्या तु ज्ञातिस्त्रीगुणदर्पिता ।
तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते ॥

पुमांसं दाहयेत् पापं शयने तप्त आयसे।
अस्या दद्युश्च[1] काष्ठानि तत्र दह्येत पापकृत्॥

लङ्घयेत् स्वपतिमवज्ञाय पुरुषान्तरं गच्छेत्। ज्ञातीति स्त्रीगुणेन सौन्दर्य्यादिना दीप्तिकृतेत्यर्थः। इति रत्नाकरः।

मनुटीकायां भट्टेन स्त्रीज्ञातिगुणदर्पितेति पठित्वा धनिकपित्रादिबान्धवदर्पेण सौन्दर्य्यादिगुणदर्पेण च या स्त्री पतिं लङ्घयेदिति व्याख्यातम्।

नारायणेन तु पूर्व्वपाठेऽप्ययमर्थ उक्तः पित्रादि-ज्ञातिभिः स्त्रीगुणैश्च दर्पितेति। संस्थाने देशे बहुसंस्थिते चत्वरादौ। पुमांसमिति पुमांसमनन्तरोक्ताया जारमप्येते दद्युर्वध्यघातिन इति शेषः। यावत् स पापकारी दग्धः स्यात्तावत्परितः क्षिपेयुरित्यर्थः।

हन्यादित्यनुवृत्तौ विष्णुः,—

स्त्रियमसक्तभर्त्तृकां तदतिक्रामणीञ्च।

असक्तभर्त्तृकामनुपभुक्तभर्त्तृकाम्। क्वचिदशक्तेति तालव्यपक्षोऽपि[2] दृश्यते, तदतिक्रामणीमन्यपुरुषगामि-नीम्। मिलितमिदं हनननिमित्तमिति रत्नाकरः।

---

१ ग अभ्यादध्युश्च। २ ख ग पाठोऽपि।

# अथान्त्याभिगमनदण्डः।

तत्र सहस्रन्त्वन्त्यजस्त्रियमिति मनुवचनं समनन्तरं लिखितम्। इहान्त्यजस्त्रियं रजकादिस्त्रियमिति रत्नाकरः। रजकचर्म्मकारादिस्त्रियमिति मिश्राः। चाण्डालीमिति मिताक्षराकारः।

कुल्लूकभट्टोऽपि अन्ते भवोऽन्त्यो यस्मादधमः शूद्रो नास्ति स च चाण्डालादिस्तस्य स्त्रियमित्याह।

यत्तु अन्त्यागमने वध्य इत्युक्तं तद्ब्राह्मणव्यतिरक्त-विषयम्।

याज्ञवल्क्यः,—

अन्त्याभिगमने [1]त्वङ्कं कवन्धेन प्रवासयेत्।
शूद्रस्तथाऽङ्क्य एव स्यादन्त्यस्यार्य्यागमे वधः॥

अङ्ककवन्ध इति अशिरस्कपुरुषाकाररूपोऽङ्कस्तेनाङ्क-यित्वा त्रैवर्णिकं निर्वासयेदिति रत्नाकरः। एवमेव कल्पतरुः। कवन्धेनाङ्कयेत् कवन्धेन कुत्सितबन्धेन भगा-कारेणाङ्कयित्वा इति मिताक्षराकारः युक्तञ्चैत-दौचित्यात्।

कामधेनौ कल्पतरौ चाङ्क्येति पठितं तत्र क्त्वा विषये ल्यप् प्रयोग आर्षः। अत्रार्थदण्डोऽपि द्रष्टव्यः। सहस्रन्त्व-न्त्यजस्त्रियमिति मनुवचनादिति मिताक्षरा। शूद्रोऽङ्क्य

१ क पुस्तके त्वाङ्क्य।

एवेत्येवकारेण प्रवासनमात्रं निषिध्यते । तेन वधोक्ते-रविरोधः ।

पारिजाते अन्त्य एव स्यादिति पठितं व्याख्यातञ्च अन्त्य एव स्यान्न पुनः शूद्रेषु प्रवेश्य इति । मिताक्षरायामपि अन्त्य एवेति पठितम् । शूद्रश्चाण्डालान्यभिगमे चाण्डाल एव भवतीति व्याख्यातञ्च ।

यद्यपि,—

रजकश्चर्मकारश्च नटो वरुड़ एव च ।
कैवर्त्त-मेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः ॥

इति यमेन परिगणनात् रजकादय एवान्त्या इति गम्यते, चाण्डालश्च यवनादिवत् म्लेच्छः स्यात् न शूद्रेषु प्रवेश्य इति पारिजातदर्शनात् ।

तथापि कुल्लूकभट्टाद्यभियुक्तव्याख्यानस्वरसाद्बहुवर्ण[१]-साम्याच्च तस्य शूद्रविशेषत्वं काममास्तां किन्तु मनुवचने ऽन्त्यजो रजकादिरेव विवक्षितः ।

अन्त्यजा रजकादयः सप्त स्मृत्यन्तरोक्ता इति नारायणीयव्याख्यानदर्शनात् ।

याज्ञवल्क्यवचने तु—अन्त्यापदं चाण्डालादिस्त्री-परमिति ।

रजकाद्यपेक्षया तस्या जघन्यत्वेन सहस्रापेक्षया साङ्क-प्रवासनस्य गुरुत्वेन द्वयोः सामञ्जस्यात् । रत्नाकरकृतो-ऽप्यत्रैव स्वरसात् । एतद्वाक्य एवान्त्यपदस्य तथैव विवरणात् ।

---

१ घ ङ पुस्तकद्वये वर्णपदं नास्ति ।

तथाहि तद्व्याख्यानं—आर्य्या त्रैवर्णिकस्त्री तदभिगमे ऽन्त्यश्चाण्डालो वध्य इति ।

नन्वेवम्,—

व्रात्यया सह संवासे चाण्डाल्या तावदेव तु ।

इति मनुवचनविरोधः स्यात् ।

न स्यादविरोधिनस्तदर्थस्याभिगमदण्डमात्रकोपक्रमे दर्शितत्वात् । अस्तु वा दण्डभेदे वैकल्पिकी व्यवस्था । यथा—निर्धनत्रैवर्णिकविषयं साङ्कप्रवासनं सधनतद्विषयः सहस्रदण्ड इति ।

अथ स्वजनाभिगमे राज्ञीप्रभृत्यभिगमे च—

दण्डमाह नारदः,—

माता मातृष्वसा-श्वश्रु-मातुलानी-पितृष्वसा ।
पितृव्यसखि-शिष्यस्त्री-भगिनी-तत्सखी-स्नुषा ॥
दुहिताचार्य्यभार्य्या च सगोत्रा-शरणागता ।
राज्ञी-प्रव्रजिता-साध्वी-धात्री-वर्णोत्तमाऽपि या ॥
आसामन्यतमां गत्वा गुरुतल्पग उच्यते ।
शिश्नस्योत्कर्त्तनात्तत्र[1] नान्यो दण्डो विधीयते ॥

माताऽत्र जननीव्यतिरिक्ता पितृपत्नी, गुरुतल्पग उच्यते इत्यतिदेशसामर्थ्यात् । मातृग्रहणं दृष्टान्तार्थमिति मिताक्षराकारः । पितृव्यपदं भ्रात्रादिपरमपि तुल्यन्यायात् । एवं भगिनीसखीति दुहित्रादिसखीपरमपि न्यायसाम्यात् । राज्ञी राज्यकर्त्तुर्भार्य्येति मिताक्षराकारः ।

---

१ घ पुस्तके तस्य ।

युक्तञ्चैतत् क्षत्रियागमने दण्डान्तरोपदेशात्। सगोत्रेत्यनेन प्राप्तायाः सपत्नीमात्रादेः पुनरुपादानं शिश्नच्छेदादधिकस्य वधदण्ड—ताडनादेः प्राप्त्यर्थम्।

नान्यो दण्डो विधीयते इति तु शिश्नच्छेदस्यावश्यकर्त्तव्यत्वपरं शिश्नच्छेदं विहाय दण्डान्तरं न कार्य्यमिति वाक्यार्थपर्य्यवसानादिति प्रतिभाति।

तथा स्त्रीणां प्रव्रज्यानिषेधात् प्रव्रजिता श्रुतिस्मृतिविहितयथावद्विधवाधर्म्मवती विरक्ततया सन्न्यासितुल्याचारा विवक्षिता, राज्ञीसमभिव्याहारेण पूज्यतमत्वावगमात्।

यत्तु,—

चत्वारिंशत्पणो दण्डस्तथा प्रव्रजितागमे।

इति याज्ञवल्क्येनोक्तम्।

तत्र प्रव्रजिता शाक्यादिस्त्री विवक्षिता दास्यादिसमभिव्याहारेण हीनात्वप्रतिपत्तेरिति न दण्डविरोधः।

वर्णोत्तमा ब्राह्मणीति मिताक्षराकारः। तदिदं वचनं गुप्ताविषयमिति रत्नाकरः।

याज्ञवल्क्यः,—

पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि।
मातुः सपत्नीं भगिनीमाचार्य्यतनयां तथा॥
आचार्य्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः।
छित्वा लिङ्गं वधस्तस्य सकामायाः स्त्रियास्तथा॥

तत्रापि राज्ञी-श्वश्र्वादयो द्रष्टव्याः पूर्व्ववाक्ये पितृ-

ष्वस्रादिसमभिव्याहारदर्शनेन सर्व्वासां तुल्ययोगक्षेमत्वावगमात् । तथा पूर्व्ववाक्यमगुप्ताविषयमिदन्तु गुप्ताविषयं दण्डगौरवादिति प्रतिभाति ।

सकामाया इति या स्त्री यथोक्तं प्रतियोगिनं कामयते तस्या अपि लिङ्गच्छेदनपूर्व्वको वध इत्यर्थः । इतोऽन्यत्रापि यत्र पातित्यादिदोषस्तत्राप्ययमेव दण्डस्तुल्यन्यायत्वात् ।

अत्र यमः,—

मातृष्वसा मातृसखी दुहिता च पितृष्वसा ।
मातुलानी स्वसा श्वश्रूर्गत्वा सद्यः पतेद्द्विजः ॥

गौतमः,—

मातृपितृयोनिसम्बन्धगाः पतिताः ।

---

## अथ कन्यादूषणदण्डः ।

सा चाभिगन्तृजात्यपेक्षया त्रिविधा उत्तमा समा हीना चेति । दूषणं द्विविधमभिगमोऽङ्गुलिप्रक्षेप इति ।

तत्र महापातकान्यभिधाय—

मनुः,—

रेतःसेकः स्वयोनिषु कुमारीष्वन्त्यजासु च ।
सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः ॥

तथा,—

कन्याया दूषणञ्चैव नास्तिक्यञ्चोपपातकम् ।

दूषणं मैथुनवर्ज्जमङ्गुलिप्रक्षेपादिनेति मनुटीका ।

तत्रोत्तमायामभिगन्तुर्दण्डमाह मनुः,—

कन्यामित्यनुवृत्तौ,—

उत्तमां सेवमानस्तु जघन्यो वधमर्हति ।

उत्तमामुत्तमजातीयामिच्छन्तीमपीति शेषः ।

नारदः,—

कन्यायामसकामायां द्व्यङ्गुलस्यावकर्त्तनम् ।
उत्तमायां वधस्त्वेवं सर्व्वस्वहरणं तथा ॥

[1]द्व्यङ्गुलस्याङ्गुलिद्वयस्य एतदङ्गुलिद्वयसाध्यमैथुनविषयम् । येन येनाङ्गेनापराध्नुयात्तत्तदेवास्य छिन्द्यादिति सामान्यतः प्राप्तत्वादिति पारिजातः ।

---

१ घ इत आरभ्य प्राङ्गुलिखितवाक्यं यावत् नास्ति ।

शङ्खलिखितौ,—

कन्यायामसकामायां द्व्यङ्गुलच्छेदो दण्डश्चोत्तमायां वधो जघन्यस्य ।

इदमप्यङ्गुलिद्वयसाध्यमैथुनविषयम् ।

हरिहरस्तु,—

द्व्यङ्गुलिपरिमाणलिङ्गच्छेद इत्याह । चकारो द्व्यङ्गुल-च्छेद-दण्डयोः समुच्चयार्थः । दण्डश्च षट्शतरूपः ।

यदाह मनुः,—

अभिषह्य[1] तु यः कन्यां कुर्य्याद्दर्पेण मानवः ।
तस्याशु कर्त्त्ये चाङ्गुल्यौ[2] दण्डः षट्शतमर्हति ॥

अभिषह्याभिभूय कुर्य्यात् कर्त्त्ये छेद्यौ दूषणमत्रा-ङ्गुलिप्रक्षेपात् योनिक्षतकरणमिति मिताक्षराकारः। मनुटीकायां कुल्लूकभट्टोऽप्येवं नारायणस्तु कुर्य्यादिति विहतयोनिं कुर्य्यादित्यर्थमाह ।

याज्ञवल्क्यः,—

दूषणे तु करच्छेद उत्तमायां वधस्तथा ।

अनुलोमान्विति पूर्व्वार्द्धादनुवर्त्तते यदानुलोमा-मकामां बलात्कारेण नखक्षतादिना वा दूषयति तदा हस्तछेद इत्यर्थ इति मिताक्षराकारः ।

उत्तमायामिति दूषितायामिति विपरिणामेनानुषङ्गः, वधो हीनस्येत्यर्थादधमजातिपुरुषविषयमिति सर्व्वज्ञ व्याख्यानाच्च ।

---

१ घ ङ पुस्तकद्वये अविषह्य । २ ख कल्याङ्गुल्यौ ।

अथ समाभिगन्तुर्दण्डमाह मनुः,—

योऽकामां दूषयेत् कन्यां स सद्यो वधमर्हति ।
सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः ॥

वधं लिङ्गच्छेदादिकमिति मनुटीकायां कुल्लूकभट्टः[1]। दण्डन्तु प्राप्नुयादेवेति नारायणः ।

तत्र मत्स्यपुराणे योऽकामामित्यादिप्राप्तः परमसाहसं तुल्यायामकामायामभिगन्तुर्वधः सकामायान्तु सहस्रदण्ड इति द्वयोः समुदायार्थः ।

नारदः,—

सकामायान्तु कन्यायां सवर्णे[2] नास्त्यतिक्रमः ।
किन्त्वलङ्कृत्य संस्कृत्य स एवैनां समुद्वहेत् ॥

मनुः,—

शुल्कं दद्यात् सेवमानः समामिच्छेत् पिता यदि ।

शुल्कमुभयसंप्रतिपन्नं द्रव्यमासुरविवाहवदिति रत्नाकरः। शुल्कमनुरूपं दद्यान्न तु दण्ड इति मनुटीकायां भट्टः ।

शुल्कं गोमिथुनं तच्च यदि तत्पिता नेच्छति तदा तदेव दण्डरूपेण राज्ञे दद्यादिति मिताक्षराकारः ।

नारायणेन तु व्याख्यातं शुल्कं पित्रे मूल्यं दद्यात् स यदि तस्मै तां दातुमिच्छेत्, अनिच्छायां त्वन्यस्मै कन्यां दद्यादिति ।

---

१ घ पुस्तके कुल्लूकपदं नास्ति ।    २ ख सङ्गमे ।

शङ्खलिखितौ,—

समायां शुल्कमाभरणं द्विगुणञ्च स्त्रीधनं दत्त्वा प्रपद्येत[1] कन्याम्।

आसुरादिविवाहाद्द्विगुणं स्त्रीधनं कन्यायै शुल्कञ्च तद्बन्धुभ्यो दत्त्वा तां गृह्णीयात्। समायामिच्छन्त्यामिति शेष इति रत्नाकरः। अनिच्छन्त्यामिति तु शेषो युक्तस्तेनेच्छन्त्यां मनूक्तमेकगुणं शुल्कं घटते।

अथ हीनाभिगन्तुर्दण्डमाह आपस्तम्बः,—

सन्निपाते वृत्त इत्यनुवृत्तौ—

कुमार्यान्तु स्वान्यादाय नाश्यः।

स्वानि धनानि, नाश्यो निर्वास्यः। एतच्च हीनायामकामायाम्।

मनुः,—

सकामां दूषमाणस्तु नाङ्गुलिच्छेदमाप्नुयात्।
द्विशतन्तु दमं दाप्यः प्रसङ्गविनिवृत्तये॥

हीनकन्याविषयमिति रत्नाकरः। मनुटीकायान्तु सकामां दूषयंस्तुल्य इति पठित्वा दूषयनङ्गुलिप्रक्षेपमात्रेणेति व्याख्यातम्।

अथ मनुः,—

कन्यां भजन्तीमुत्कृष्टं न किञ्चिदपि दापयेत्।
जघन्यं सेवमानान्तु संयतां वासयेद्गृहे॥

---

१ घ पुस्तके सम्प्रतिपद्येत।

सेवमानां मैथुने[1]नानुकूलयन्तीं संयतां निबद्धां वासयेत् यावन्निवृत्ताभिलाषा स्यादिति मनुटीकायाम्।

अथ प्रसङ्गात् कन्याहरणदण्डमाह।

याज्ञवल्क्यः,—

अलङ्कृतां हरन् कन्यामुत्तमं ह्यन्यथाऽधमम्।
दण्डं दद्यात् सवर्णासु[2] प्रातिलोम्ये वधस्तथा॥
सकामास्वनुलोमासु न दोषो ह्यन्यथाऽधमः।
दूषणे तु करच्छेदस्तूत्तमायां वधस्तथा॥

अलङ्कृतामन्यस्मै दातुं प्रसाधितां विवाहाभिमुखीभूतामिति यावत्। उत्तममुत्तमसाहसम्। अन्यथाऽनलङ्कृतकन्याहरणेऽधमं प्रथमसाहसं सकामामिति न दोषो हर्त्तुरिति शेषः। अन्यथा तासामकामत्वेऽधमः प्रथमसाहसः। दूषणेऽङ्गुलिप्रक्षेपादिनेति हलायुधः। शेषं पूर्व्ववत्।

अत्र दण्डविधानादपहर्त्तृसकाशादाच्छिद्यान्यस्मिन् देयेति गम्यते इति मिताक्षराकारः।

अथ प्रसङ्गादेव विवाहयितुर्व्विवोढुश्च कूटकारिणो दण्डः। तत्र मत्स्यपुराणे,—

यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति।
तस्य कुर्य्यान्नृपो दण्डं स्वयं षण्णवतिं पणान्॥
यः कन्यां दर्शयित्वाऽन्यां वोढुरन्यां प्रयच्छति।
उत्तमं तस्य कुर्व्वीत राजा दण्डन्तु साहसम्॥

---

१ ख मैथुनार्थम्। २ घ सवर्णान्तु।

तथा,—

वरो दोषं समासाद्य यः कन्यां संहरेदिह ।
दत्ताऽप्यदत्ता सा तस्य राज्ञा दण्ड्यः शतद्वयम् ॥

अथ याज्ञवल्क्यः,—

दत्त्वा कन्यां हरन् दण्ड्यो व्ययं दद्याच्च सोदयम् ।

कन्यां वाचा दत्त्वा वरायाप्रयच्छन् द्रव्याद्यनुबन्धाद्यनुसारेण व्ययं दाप्यः । एतच्च कारणाभावे

दत्तामपि हरेत् कन्यां श्रेयांश्चेद्वर आव्रजेत् ।

इत्यत्रापहाराद्यनुज्ञानात् । व्ययमिति वा दाननिमित्तं स्वसम्बन्धिनां कन्यासम्बन्धिनां चोपचारार्थं वरेण यद्धनं व्ययितं तत् सवृद्धिकं कन्यापिता वराय दद्यादित्यर्थः ।

अथ स्त्रियाः कन्यादूषणमाह ।

मनुः,—

कन्यैव कन्यां या कुर्य्यात्तस्याः स्याद्द्विशतो दमः ।
शुल्कञ्च द्विगुणं दद्याच्छिफाश्च प्राप्नुयाद्दश ॥
या तु कन्यां प्रकुर्य्यात् स्त्री सद्योऽसौ[१] मौण्ड्यमर्हति ।
अङ्गुल्योरेव च छेदं खरेणोद्वहनं तथा ॥

कुर्य्यात् प्रकुर्य्यादिति अङ्गुलिप्रक्षेपेण नाशयेदित्यर्थः । इति मनुटीका । योनिं क्षतवतीं कुर्य्यादित्यर्थ इति मिताक्षराकारः । द्विगुणं द्विशतापेक्षया शुल्कदानञ्च

---

१ क पुस्तके सा सद्यो मौण्ड्यमर्हति ।

स्पृष्टमैथुनाशङ्कयाऽन्येनापरिणयनादिति नारायणः। शिफा अत्र जटा रज्वादिप्रहारा इति कल्पतरुः। एवमेव रत्नाकरः।

नारायणोऽप्याह—शिफा वृक्षजटा दशक्तत्वस्ताभिस्ताडनं प्राप्नुयादिति। [1]दशचूडं मुण्डनमिति कश्चित्। स्त्री कन्याव्यतिरिक्ता योषित्। अत्र मौण्ड्यं ब्राह्मणी खरोद्वाहनं क्षत्रिया, अङ्गुलिच्छेदमितरेति सर्व्वज्ञेन, व्यवस्थोक्ता।

---

१ ख पुस्तके दशक्तत्वः।

# अथ बन्धक्याद्यभिगमे दण्डः[1]।

व्यासः,—

बहुभिर्भुक्तपूर्व्वा या गच्छेद्यस्तां नराधमः।
तस्य वेश्यावदिच्छन्ति दण्डनं न तु दारवत्॥

बन्धक्यधिकारे यमः,—

परदारे सवर्णासु दाप्याः[2] स्युः पञ्चकृष्णलान्।
असवर्णास्वानुलोम्ये दण्डो द्वादशको मतः॥

परदारे परदारगमने एकवचनस्वरसात्, कृष्णलो यवत्रयं द्वादशको द्वादशपणात्मकः।

नारदः,—

स्वैरिण्यब्राह्मणी वेश्या दासी निष्कासिनी च या।
गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः॥
आस्वेव तु भुजिष्यासु दोषः स्यात् परदारवत्।
गम्या अपि हि नोपेया यतस्ताः सपरिग्रहाः॥

स्वैरिणीस्वरसात् पुंश्चली तस्या विशेषणमब्राह्मणी क्षत्रियादिरिति यावत्। दासी स्वीया कर्म्मकरी निष्कासिनी कुटुम्बनिर्गता[3] पुंश्चली। आस्वनवरुद्धास्वपीति मिताक्षराकारः। गम्या इत्यनेन दण्डमात्रं निषिध्यते न तु पापमपीति रत्नाकरः।

---

१ ख अभिगमदण्डः। २ घ दण्ड्याः।
३ ख निर्गता।

युक्तञ्चैतत् सर्व्वेषां स्वदारनियम इति शङ्खलिखित-स्वरसात् विध्यतिक्रमे पापस्यावश्यकत्वात्।

यत्तु— दण्डेनापि पापं गच्छतीति प्रागुक्तं तदभिगम-भिन्नविषयम्।

अत एवाह नारदः,—

अगम्यागामिनः शास्तिर्दण्डो राज्ञा प्रकीर्त्तितः।
प्रायश्चित्तविधानन्तु पापानां स्याद्विशोधनम्॥

इति रहस्यकृतेऽगम्यागमने दण्डाभावादिदं प्राय-श्चित्तविधानमिति चेत्। तथापि प्रकृते पापं ध्रुवम्।

वस्तुतस्तु अन्यत्रापि प्रायश्चित्तरूपादेव दण्डात् पाप-निवृत्तिर्नतु दण्डमात्रादिति प्रागुक्तम्। भुजिष्यासु स्वैरिण्यादिषु परेणावरोध्य भुज्यमानासु।

सपरिग्रहाः परेणावरुद्धत्वात्। परदारवदिति सामा-न्योक्तेः। दण्डे विशेषमाह याज्ञवल्क्यः,—

अवरुद्धासु दासीषु भुजिष्यासु तथैव च।
गम्यास्वपि पुमान् दाप्यः पञ्चाशत्पणिकं दमम्॥

अवरुद्धासु दासीषु परेणावरुध्य धृता दास्यस्तासु अनुलोमास्वपीत्यर्थः। इति रत्नाकरः।

मिताक्षरायान्तु शुश्रूषाहानिव्युदासार्थं गृह एव त्वया स्थातव्यमित्येवं परपुरुषसम्भोगतो निरुद्धा दास्योऽवरुद्धाः। नियतपुरुषपरिग्रहा भुजिष्याः। च शब्दाद्वेश्या-स्वैरिणीनां गम्यानां साधारणस्त्रीणां ग्रहणमित्युक्तम्।

ननु वेश्यायाः साधारण्यं न जातितः, अनुलोमजत्वेन तस्याः सवर्णास्त्रीत्वात्[१] प्रतिलोमजत्वे तु निन्दित-कर्म्माभ्यासेन तस्या गम्यत्वानुपपत्तेरिति चेत् ।

उच्यते—

पुरुषसम्भोगवृत्तिवेश्यानामनादिरेव जातिर्लोकप्रसिद्धेः, पञ्चचूडानामका[२]प्सरसस्तत्सन्ततिर्वेश्याख्या पञ्चमी जातिरिति मार्कण्डेयपुराणसम्वादाच्च ।

तस्मादासां नियतपुरुषपरिणयनविधिविधुरतया पर-पुरुषाभिगमनेऽपि नादृष्टदोषो नापि दण्डः ।

पुरुषाणान्तु तदभिगमने दण्डाभावमात्रं न पापा-भावः । स्वदारनिरतः सदेति नियमात् पशुवेश्याभि-गमने प्रायश्चित्तं विधीयते इति प्रायश्चित्तस्मरणाच्चेति मिताक्षराकारः ।

तथा—

प्रसह्य दास्यागमने पञ्चाशत्पणिको दमः ।
बहूनां यद्यकामाऽसौ चतुर्विंशतिकः पृथक् ।
[३]प्रसह्य वेश्यागमने दण्डो दशपणः स्मृतः ॥

बहूनामिति यद्यकामा सा बहुभिर्भुज्यते तदा पृथक् पृथक् चतुर्विंशतिपणो दण्ड इत्यर्थः ।

नारदः,—

वेश्यागामी द्विजो दण्ड्यो वेश्या शुल्कसमं दमः ।

---

१ ख वर्णास्त्रीत्वात् । २ ख काञ्चन ।
३ ख पुस्तके प्रसह्येत्यादि पङ्क्तिर्नास्ति ।

अत्र प्रसह्येति वचनात् शुल्कदानं विना बलेन दास्या-दीनामभिगमने दण्डोऽयं भाटकदाने तु दोषाभाव इति मिताक्षराकारः । अतो नास्य पूर्व्वोक्तविरोधः ।

अथ याज्ञवल्क्यः,—

पशून् गच्छन् शतं दाप्यो हीनाङ्गीञ्चैव मध्यमम् ।

हीनाङ्गी छिन्ननासिकादिरिति रत्नाकरः । मिता-क्षरायान्तु हीनस्त्रीणामिति पठित्वा हीनां स्त्रिय-मन्त्यावसायिनीमकामां सकामां वा गच्छन् मध्यम-साहसं दाप्य इति व्याख्यातम् ।

---

# अथायोनिविषयाभिगमे दण्डः।

तत्रायोनिपदं मानुषीयोनिव्यतिरेकपरं तस्य द्वौ भेदौ स्त्रीपुंसयोरवयवान्तरं गवादियोनिश्च। तयोरङ्गान्तराभिगमे दण्डमाह याज्ञवल्क्यः,—

अयोनौ गच्छतो योषां पुरुषं वापि मेहतः।
चत्वारिंशत्पणो दण्डस्तथा प्रव्रजितागमे॥

मिताक्षरायां चतुर्विंशतिको दण्ड इति पठितम्।

अयोनौ योषामिति—अयोनौ मुखे द्रविडोत्कलादौ दृष्टत्वात् कामागमेषु श्रुतत्वाच्च।

तच्च हीदमौपविष्टकमित्याख्यायते जघन्यस्य कर्म्मणः उपविष्टात्[१] प्रवर्त्त्यमानत्वात्।

आह च वात्स्यायनः,—

तस्या वदने यज्जघनकर्म्म तदौपविष्टकमिति।

इह याः स्वोपविष्टकमिच्छन्ति न ताभिः सह युज्यन्ते इत्यादिवचनाद्वेश्यादास्यादौ फलतो रक्षावगमात्।

धर्म्मपत्न्यां सुव्रतायां मुखे मैथुनकारिणः।
[२]पत्नी विधातुर्भवति - - - - - - - -।

इति कर्म्मविपाकसमुच्चयवचनसम्बादाच्च धर्म्मपत्नीमात्रे निषेधः पर्य्यवस्यति एवञ्च तत्रैवायं दण्डः।

---

१ घ उपरिष्टात्। २ ग घ पुस्तके पत्नीविभक्तिर्भवति।

तस्य निषेधेन सममेकविषयत्वात्।

स्वयोषां यो मुखादावभिगच्छतीति विज्ञानेश्वरीय-व्याख्यानदर्शनाच्चेति केचित्।

तन्न,—

अयोनौ गच्छतो योषामिति सामान्यश्रुतौ वाधका-भावात्। निषेधस्यापि तथाविधक्रियामात्रविषयत्वात्। दण्डभेदप्रकरणोपदर्शित-विष्णुपुराणसम्वादात्।

पुरुषं वापि मेहत इत्यतिरागेण पुरुषमेवाभिगच्छत इत्यर्थः।

---

# अथ गवाद्यभिगमदण्डः ।

तत्र विष्णुः,—

पारजातीया[1]सवर्णाभिगमने तूत्तमसाहसं दण्ड्यः ।

हीनवर्णागमने मध्यमं । गोगमने च । अन्त्यागमने वध्य उत्तमागमने च ।

अत्र गोगमने चेति चकारेण मध्यममित्यस्यानुकर्षः । "मध्यमं साहसं गोषु" इति नारदसम्वादात् । उत्तमश्रुतवधानुकर्षे तुशब्दस्वरसभङ्गप्रसङ्गात् वचनञ्चैतदब्राह्मणविषयम् ।

ब्राह्मणविषये त्वाह मत्स्यपुराणम्,—

सुवर्णन्तु भवेद्दण्ड्यो गां व्रजन् मनुजोत्तमः ।

अत्र रत्नाकरकृता विष्णुवाक्ये वधस्यानुकर्षः स च शूद्रविषयः नारदोक्तस्तु मध्यमसाहसः क्षत्रियवैश्ययोरित्यविरोध इत्युक्तम् ।

तच्चिन्त्यं श्रुतस्यानुकर्षो न तु श्रोष्यमाणस्येति पदशक्तिविसम्वादात् व्युत्पत्तिविरोधाच्च ।

मत्स्यपुराणे,—

तिर्य्यग्योनौ च गोवर्ज्जं मैथुनं यो निषेवते ।
स पणं प्राप्नुयाद्दण्डं तस्याश्च यवसोदकम् ॥

---

१ क्वचित् पारजायीति पाठः ।

पणं शतसंख्यं, पश्वगमने कार्षापणशतं दण्ड्य इति विष्णुसम्वादात् कामधेनौ तु शतमित्येव पठितम् ।

इति महामहोपाध्याय धर्माधिकरणिकश्रीवर्द्धमानकृतौ

दण्डविवेके परदाराभिमर्षणदण्डपरिच्छेदश्चतुर्थः ।

---

# अथ वाक्पारुष्यदण्डः ।

तत्र नारदः,—

देशजातिकुलादीनामाक्रोशन्यङ्गसंज्ञितम् ।
यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते ॥
निष्ठुराश्लीलतीव्रत्वात्तदपि त्रिविधं स्मृतम् ।
गौरवानुक्रमात्तेषां दण्डोऽप्युक्तः क्रमाद्गुरुः ॥
साक्षेपं निष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंज्ञितम् ।
पतनीयैरुपन्यासैस्तीव्रमाहुर्मनीषिणः ॥

धिङ्मूर्खान्त्य[1]जेत्यादि साक्षेपं, न्यङ्गरिहासत्यमवद्यं तेन भगिन्यादिगमनयुक्तमश्लीलं सुरापोऽसीत्यादिमहापातकाक्रोशयुक्तं वचस्तीव्रमिति मिताक्षराकारः ।

अत्राक्रोशन्यङ्गसञ्ज्ञितप्रतिकूलार्थानां त्रयाणामेषां विवरणमिति व्यवहारतरङ्गे गणेश्वरमिश्राः ।

युक्तश्चैतत्—तथाहि अन्वर्थसंज्ञावगमितं वाक्करणकमनोविरुद्धलक्षणं सामान्यलक्षणं देशाद्याक्रोशो न्यङ्गसंज्ञितं निष्ठुरार्थमिति विभागः । तेषां लाघवगौरवातिगौरवानुसारिण्यो लघु-गुरु-गुरुतरदण्डसम्बादिन्यो निष्ठुरादयः संज्ञाः, तासां विवरणं साक्षेपमित्यादि ।

यत्तु आक्रोशन्यङ्गसंयुतमिति पठित्वा उच्चैर्भाषणमाक्रोशः, न्यङ्ग अवद्यं तदुभयसंयुक्तं यत् प्रतिकूलार्थ-

१ घ पुस्तके जाल्मेत्यादि पाठः ।

मुद्वेगजनकं वाक्यं तद्वाक्पारुष्यमिति सामान्यलक्षण-परमिति मिताक्षराकृता व्याख्यातम् ।

तच्चिन्त्यम्,—

यतोच्चैरवद्यभाषणं नास्ति तत्र हुङ्कारानुकारादाव-व्याप्तेः ।

यदाह कात्यायनः,—

हुङ्कारं कासनञ्चैव लोके यच्च विगर्हितम् ।
अनुकुर्य्यादनुब्रूयाद्वाक्पारुष्यं तदुच्यते ॥

तत्र देशाक्षेपो यथा,—

गौडीयं प्रति कलहप्रिया गौडा इत्यादि। जात्या-क्रोशो यथा ब्राह्मणं प्रति अत्यन्तलुब्धा ब्राह्मणा इत्यादि।

कुलाक्रोशो यथा क्रूरचरिता वैश्वानरा इत्यादि न्यक्कुसंज्ञितं निकृष्टाङ्गसंज्ञावत् । निकृष्टाङ्गप्रकाशनेन सत्येनासत्येन वाक्षेप इत्यर्थः ।

तथाहि कात्यायनः,—

यत्त्वसत्संज्ञितैरङ्गैः परमाक्षिपति क्वचित् ।
अभूतैरथ भूतैर्वा निष्ठुरा वाक् स्मृता तु सा ॥

कल्पतरावपि न्यङ्गसंज्ञितमश्लीलमिति व्याख्यातम् ।

तथा निकृष्टाङ्गसङ्गवदिति रत्नाकरः। हस्ततर्ज्जना-दिकमिति हलायुधः ।

स्मृतिसारकृता तु न्यङ्गसंज्ञितमिति पठित्वा न्यङ्ग-मश्लीलमिति व्याख्यातम्। मेहनाद्युल्लेखवदिति मिश्राः।

कामधेनौ तूभयच व्यङ्गेति पठितं तच्च व्यङ्गत्वेन खञ्जादयो विवक्षिताः ।

अश्लीलं निष्ठुरञ्च प्रपञ्चयति स एव—

न्यङ्गावपूरणं वचो क्रोधात्तु[1] कुरुते यदा[2] ।
वृत्तदेशकुलानाञ्च अश्लीला सा बुधैः स्मृता ॥
महापातकयोक्त्री च [3]राजस्तेयकरी च या ।
जातिभ्रंशकरी या च तीव्रा सा प्रथिता तु वाक् ॥

न्यङ्गावपूरणं निकृष्टाङ्गप्रकटीकरणेन तिरस्करणं कामधेनावङ्गेति पठितम् ।

बृहस्पतिः,—

भगिनी-मातृसम्बन्धमुपपातकशंसनम् ।
पारुष्यं मध्यमं प्रोक्तं वाचिकं शास्त्रवेदिभिः ॥
अभक्ष्यापेयकथनं महापातकदूषणम् ।
पारुष्यमुत्तमं प्रोक्तं तीव्रं मर्म्माभिघट्टनम् ॥

भगिनी-मातृसम्बद्धमुपपातकशंसनमिति तव भगिनी तव माता मया गाम्येति कीर्त्तनमित्यर्थः । इति रत्नाकरः । एवमेव हलायुधः ।

वस्तुतस्तु मातृपदं मातृसपत्नीपरं तेन भगिनीं मातृसपत्नीं वा गतौ यतामीति कीर्त्तनमित्यर्थः । यथाव्याख्यानात्तस्योपपातकत्वाभावात् ।

१ मूले वाचाक्रोशात्तु । २ क्वचित् यदीतिपाठः ।
३ घ पुस्तके राजदेष ।

कात्यायनः,—

अगुणान् कीर्त्तयेत् क्रोधात् निर्गुणे वा गुणज्ञताम् ।
अन्यसंज्ञानियोजी च वाक्दुष्टं तं नरं विदुः ॥

अगुणानिति गुणिनीति शेषः । अन्यसंज्ञानियोजी निन्दितसंज्ञाव्यपदेशकारी ।

तथा,—

दुष्टस्यैव तु यो दोषान् कीर्त्तयेद्दोषकारणात् ।
अन्यापदेशवादी च वाग्दुष्टं तं नरं विदुः ॥

दुष्टस्यैवेत्येवकारोऽप्यर्थः । दोषकारणादित्यनेन विचारार्थं बन्धूनां दोषाभिधानपर्य्युदासः । अन्यापदेशवादी अन्यमपदिश्यान्यदोषाभिधायी ।

## अथ ब्राह्मणादीनां परस्पराक्षेपे दण्डः।

तत्र बृहस्पतिः,—

समानयोः समो दण्डो न्यूनस्य द्विगुणः स्मृतः।
उत्तमस्याधिको दण्डो वाक्पारुष्ये परस्परम्॥

समो यथाश्रुतो न्यूनस्याक्षेप्यापेक्षया शीलजात्यादिभिरपकृष्टस्याक्षेप्तुरित्यर्थः।

याज्ञवल्क्यः,—

अर्द्धोऽधमेषु द्विगुणः परस्त्रीषूत्तमेषु च।
दण्डप्रणयनं कार्य्यं वर्णजात्युत्तराधरैः॥
[1]प्रातिलोम्यापवादेषु द्विगुणत्रिगुणा दमाः।
वर्णानामानुलोम्ये तु तस्मादर्द्धार्द्धहानितः॥

अधमेषु वर्णतो गुणतश्च न्यूनेष्वाक्षेप्येषु आक्षेप्तुरधिकस्यार्द्धो दण्डः स च अर्द्धत्रयोदशपणरूपः। पूर्व्ववाक्ये पञ्चविंशतिदमस्य प्रकृतत्वात् परस्त्रीषु परभार्य्यासु उत्कृष्टासु प्रकृष्टासु च विशेषानाभिधानात्। द्विगुणः पञ्चाशत्पणात्मकः एवमुत्तमेऽपि दण्डप्रणयनमिति।

वर्णा ब्राह्मणादयो जातयोऽनुलोम[2]जा अम्बष्ठादयः। वर्णाश्च जातयश्चेति वर्णजातयः वर्णजातयश्च ते उत्तराधराश्च वर्णजात्युत्तराधरास्तैः परस्परमाक्षेपे क्रियमाणे दण्डस्य प्रणयनं प्रकर्षेण नयनमूहनं कार्य्यम्,

---

१ घ पुस्तके प्रतिलोमापवादेषु। २ विलोमजाः।

तच्च उत्तराधरेति विशेषोपादानात् यादृगुत्तराधरभाव स्तदपेक्षयैव कार्य्यम् ।

प्रातिलोम्येति यदा वर्णेषु ब्राह्मणक्षत्रियवैश्येषु प्रातिलोम्येनापवादोऽधिक्षेपो भवति तदा क्षत्रियेण ब्राह्मणापवादे द्विगुणः । वैश्येन तदाक्षेपे त्रिगुणः । यदा तु ब्राह्मणेन क्षत्रियाक्षेपस्तदा पूर्व्वोक्तादर्द्धदण्डः क्षत्रियेण वैश्याक्षेपे तदर्द्धमित्यर्थः ।

मनुः,—

ब्राह्मण-क्षत्रियाभ्यान्तु दण्डः कार्य्यो विजानता ।
ब्राह्मणे साहसः पूर्व्वः क्षत्रियेष्वेव मध्यमः ॥
विट्-शूद्रयोस्त्वेवमेव स्वजातिं प्रति तत्त्वतः ।
छेदवर्ज्जं प्रणयनं दण्डस्येति विनिश्चयः ॥

ब्राह्मणक्षत्रियाभ्यां परस्परमाक्रोशे कृते ब्राह्मणस्य पूर्व्वसाहसो दण्डः क्षत्रियस्य मध्यसाहसो दण्डः । वैश्यशूद्रयोरप्येवमेव स्वजातिं तुल्यजातिं प्रति तत्त्वतः स्वरूपगुणोत्कर्षापकर्षतारतम्याद्दण्डव्यवस्था । तत्रापि छेदवर्ज्जमिति जिह्वाछेदनिवृत्त्यर्थम् ।

अतः कुल्लूकभट्टः,—

पतनीयाक्रोशविषयमिदं वचनद्वयं, एवञ्चैकजातिमित्यनेनोक्ते जिह्वाछेदे वैश्यनिषेधात् ब्राह्मणक्षत्रियविषयतया व्यवतिष्ठते इत्याह ।

१ ख पुस्तके चिह्नितांश्च पतितः ।

एवञ्चैतन्मते छेदवर्ज्जमित्यस्यान्वयो विट्शूद्रयोरेवमेवेत्यत्रैव द्रष्टव्यः।

नारायणोऽप्याह,—

तयोः स्वस्वजात्याक्षारणे छेदवर्ज्जं तत्तज्जात्युचितं दण्डमात्रप्रणयनं तेनार्थात् ब्राह्मणक्षत्रियाक्षारणे छेद इत्यर्थ इति।

अधमवर्णस्योत्तमवर्णानामाक्रोशाक्षेपाभिभवे अष्टौ पुराणा इत्युपक्रम्य हारीतः,—

अन्टताभिशंसने पादताडने तदङ्गच्छेदः पञ्चशतन्वाद्येषु पादो, न वा किञ्चित् स्वामित्वादादिवर्णत्वाच्च। उत्तमानामीशानतमो हि ब्राह्मणः।

पुराणशब्दोऽत्र द्वाविंशद्राजतकृष्णलपर इति रत्नाकरः। अन्टताभिशंसनमाक्रोशः। अङ्गमत्र जिह्वा अपकृष्टवर्णेषु उत्कृष्टवर्णं प्रति मिथ्यातीव्राक्रोशे जिह्वाछेदः पञ्चशतं वा दण्डः।

हीनवर्णस्य दण्डमुक्त्वाऽधिकृतमस्याह—आद्येष्वित्यादि आद्येषु उतकृष्टेषु निकृष्टं प्रति मिथ्यातीव्राक्रोशे पञ्चशतपादः।

मतान्तरमाह न वेति,— आदिवर्णत्वात् शूद्रापेक्षया ब्राह्मणादीनां प्रथमवर्णत्वात्।

तदेतद्यथा रत्नाकरे व्याख्यातम्।

वस्तुतस्तु, अभिशंसनमेव आक्रोशः। तस्मिन् असत्यार्थेऽतितीव्रे जिह्वाच्छेदोऽन्यत्र पञ्चशतपुराणो दण्डः।

विषमयोस्तुल्यवद्विकल्पानुपपत्तेः सत्येतु पारिशेष्यादष्टौ पुराणाः।

यद्वा पादच्छेदनेऽन्ताभिशंसने इति समभिव्याहार-दर्शनात् पादताडने तदङ्गच्छेदः। अन्ताभिशंसने पञ्चशतदण्ड इति व्यवस्थेति प्रतिभाति।

तथा न वा किञ्चिदिति मतं यद्यप्यसङ्कुचितविषय-मिति युक्तं त्रैवर्णिकोपक्रमत्वात् हेतुसाधारण्याच्चेति। तथापि ब्राह्मणमात्रपरतया नेयम्। उपसंहारे ईशान-तमो ब्राह्मण इत्यनुवाददर्शनात्। उपदधाति इत्यत्र सामान्येन प्राप्तेऽञ्जनद्रव्ये तेजो वै घृतमित्यनुवाददर्शनेन तद्विशेषपरिनिष्ठावत्।

न च स्वामित्वस्यैवायमित्यनुवाद इति वाच्यम्।

ईशानतम इति तमोपादानविरोधात्। अनुवाद-मात्रस्य वैयर्थ्याच्च।

न च,—

यथा,—तिलांश्च विकिरेत्तत्र परितो बन्धयेदजाम्।
असुरोपहतं श्राद्धं[1] तिलैः शुद्ध्यत्यजेन च॥

इत्यत्र अजानात्मकदेशे फलसम्बन्धप्रतिपादनार्थमजेने-त्यनूद्यते। तथा इह किञ्चित् प्रयोजनमस्ति तस्मात् कामं पूर्व्वपूर्व्वो वर्णो उत्तरोत्तरस्यादित्वादभ्यर्हितत्वेन स्वामी। ब्राह्मणस्तु स्वामितमः स्वामिस्वामित्वात्।

---

१ ख पुस्तके असुरोपहता भूमिः।

अतस्तस्यैव दण्डाभावो वैश्यक्षत्रिययोस्तु स्वाम्यतारतम्यानुसारी दण्डलेशोऽस्त्येवेति तात्पर्य्यार्थो गम्यते ।

स चायं दण्डाभावो निर्गुणशूद्रपरत्वेन व्यवतिष्ठते । गुणहीनस्येत्यादिवक्ष्यमाणबृहस्पतिवचनसम्वादात् । अन्यत्र सर्व्वत्र दण्डोपदेशात् ब्राह्मणपदञ्च न कृषीबलादिसाधारणजातिमात्रपरमपि तु गुणवदभिप्रायम् । तस्यैवेशानसामर्थ्यात् । तदेवं न वेति विकल्पस्य विषयव्यवस्थायामष्टदोषदुष्टत्वमप्यपास्तं[१] भवतीति चतुरस्रम् ।

मनुनारदौ,—

समवर्णे द्विजातीनां द्वादशैव व्यतिक्रमे ।
[२]वादेष्ववचनीयेषु तदेव द्विगुणं भवेत् ॥

अत्र द्विजातित्वमतन्त्रमिति रत्नाकरः । व्यतिक्रमो वाक्पारुष्यम्, अवचनीयो वादोऽप्रकाश्यप्रकाशकं वचनम् ।

अवचनीयेषु त्वं स्वसृगामीत्यादिषु आक्रोशमात्रतात्पर्य्येणोक्तेष्विति नारायणः ।

कात्यायनोशनसौ,—

मोहात् प्रमादात् संहर्षात् प्रीत्या चोक्तं मयेति यः ।
आह [३]नैवं पुनर्वक्ष्ये दण्डार्द्धं तस्य कल्पयेत् ॥

एतत् परिहार्य्यवाक्पारुष्याभिप्रायमिति रत्नाकरः ।

---

१ ग अस्तं । २ घ पुस्तके वादेषु वचनीयेषु ।

३ मूले पाठः—नाहमेवं ।

अथ ब्राह्मणादीनामेकतमेनान्यतमाक्षेपे दण्डः ।

तत्र ब्राह्मणस्य तमाह बृहस्पतिः,—

विप्रे शतार्द्धं दण्डस्तु क्षत्रियस्याभिशंसने ।
वैश्यस्य चार्द्धपञ्चाशच्छूद्रस्यार्द्धत्रयोदश ॥
सच्छूद्रस्यायमुदितो विनयोऽनपराधिनः ।
गुणहीनस्य पारुष्ये ब्राह्मणो नापराध्नुयात् ॥

विप्रे आक्षेप्तरीति शेषः । अभिशंसनमाक्रोशः ।

क्षत्रियस्य दण्डमाहतुः शङ्खलिखितौ—

आक्रोशे ब्राह्मणस्य क्षत्रियस्य शतं दण्डः शतार्द्धं वैश्यस्य पञ्चविंशतिः शूद्रस्य ।

वैश्यस्य दण्डमाह बृहस्पतिः—

वैश्यस्तु क्षत्रियाक्षेपे दण्डनीयः शतं भवेत् ।
शूद्राक्षेपे क्षत्रियस्य पञ्चविंशतिको दमः ॥
वैश्यस्य चैतद्द्विगुणं शास्त्रविद्भिरुदाहृतम् ।

तथा—ब्राह्मणाक्षेपे मनुर्वक्ष्यति ।

शूद्रस्य दण्डमाह बृहस्पतिरेव ।

वैश्यमाक्षारयन् शूद्रो दाप्यः स्यात् प्रथमं दमम् ।
क्षत्रियं मध्यमञ्चैव विप्रमुत्तमसाहसम् ॥

प्रथमं पणानां सार्द्धशतद्वयं मध्यमं पञ्चशतानि उत्तमं साहस्रमिति रत्नाकरः ।

अत्रैव मनुः,—

शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति ।
वैश्योऽध्यर्द्धशतं [1]त्वेव शूद्रस्तु वधमर्हति ॥

---

१ क्वचित् वैश्योऽप्यर्द्धशतं त्वेव ।

अत्र पारिजातः,—

आक्रुश्य मध्यमेन पारुष्येणेति शेष इत्याह ।

अध्यर्द्धशतं सार्द्धशतं द्वे वेत्याक्षेपगौरवापेक्षया व्यवस्था । वधस्ताडनादिरूप इति कुल्लूकभट्टः । ताडनं जिह्वाच्छेद्यात्मकमिति रत्नाकरः ।

इदमत्र चिन्त्यं वाक्यस्यास्य मध्यपारुष्यविषयत्वे- नान्तरोक्तं वैश्यमित्यादि बृहस्पतिवचनं प्रथमपारुष्य- विषयं प्राप्तं दण्डलाघवदर्शनात् । तथाच शूद्रस्योत्तमे पारुष्ये को नाम दण्डोऽस्तु न तावज्जिह्वाच्छेद एव मध्यमेनावरोधात् । नान्यः— अनभिधानादिति ।

अत्र उत्तमे ब्राह्मणाक्षेपे जिह्वाच्छेदो द्रष्टव्य औचित्यात्, अन्नताभिशंसने तदङ्गच्छेद इति हारीतवाक्ये रत्नाकर- कृतैव तीव्राक्रोशे जिह्वाच्छेदव्याख्यानाच्चेति ।

अत्र मनुनारदौ,—

एकजातिर्द्विजातिन्तु वाचा दारुणया क्षिपन् ।
जिह्वायाः प्राप्नुयाच्छेदं[1] जघन्यप्रभवो हि सः ॥
नामजातिग्रहं त्वेषामभिद्रोहेण कुर्व्वतः ।
विधेयोऽयमयः[2] शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः ॥

एकजातिरिह शूद्र उपनयनाभावात् दारुणया मर्म्म- स्पृशा पातित्यादिबोधिकया, जघन्यप्रभवः श्रुतौ पद्भ्या- मुत्पन्नत्वेन बोधितत्वात् ।

---

१ मूले च्छेदम् । २ ख पुस्तके निक्षेप्योऽयोमयः ।

एतेन सङ्करजातानामपि द्विजातिं प्रति दारुणाक्षेपेऽयं दण्डः तेषामपि जघन्यजातत्वात्।

अत एव एकजातिरन्त्यजन्मेति सर्व्वज्ञः। अतिद्रोह अतिशयद्रोह इति रत्नाकरः। अथेति पठित्वा अतिद्रोहेण आक्रोशाभिमानेनेति सर्व्वज्ञेन व्याख्यातम्। अयोमयो लौहमयः, शङ्कुः कीलकः। अग्निप्रदीप्तोऽयं मुखे प्रक्षेप्य इति कुल्लूकभट्टः।

मनुः,—

श्रुतं देशञ्च जातिञ्च कर्म्म शारीरमेव च।
वितथेन ब्रुवन् दर्पाद्दाप्यः स्याद्द्विशतं दमम्॥

कर्म्म तपश्चर्य्यारूपं शारीरं शरीरावयवं वितथेनासत्येन। दर्पः स्वगुणदार्ढ्येन परावज्ञानम्, तेन यच्च श्रुत देश जाति तपश्चर्य्या शरीरावयवविशेषमधिकृत्य दर्पादसत्यं वदति तच्च द्विशतं दण्ड्यः। वितथेनेति प्रकृत्यादिभ्य उपसंख्यानमिति तृतीया।

श्रुतादीनां वितथवचनं यथा नानेन वेदः श्रुतः, नास्य चार्य्यावर्त्तो देशः, नायं विप्रः, नानेन तपः कृतं नायं दुश्चर्म्मा इति रत्नाकरः।

शारीरं कर्म्मेति समानाधिकरणं तेन शरीरसंस्कारकमुपनयनादिकं तदिति कुल्लूकभट्टः।

भारवाहनादीति नारायणः। तथा एवं वदन् द्विज एव दण्ड्यो न तु शूद्रस्तस्य तु वध एवेति नारायणेनैव व्याख्यातं युक्तञ्चैतत्—

अनन्तरोक्तनानावचनसम्बादात् । वधस्तु जिह्वा-च्छेदादिरिति विशेषः । अत एव समानजातिविषयमिदं वचनमिति कुल्लूकभट्टोक्तमपि घटते ।

अथ तेषु तेषु पारुष्यविशेषे दण्डविशेषाः ।

तत्र व्यासः,—

पापोपपापवक्तारो महापातकशंसकाः ।
आद्यमध्योत्तमान् दण्डान् दद्युस्ते ते यथाक्रमम् ॥

अत्र महापातकं प्रसिद्धं ततो न्यूनमुपपातकं ततोऽपि न्यूनं पापं ततो न्यूने पापेऽधमदण्डः । उपपापे मध्यमो महापातके तूत्तमः ।

याज्ञवल्क्यः,—

पतनीयकृताक्षेपे दण्ड्यो मध्यमसाहसम्[१] ।
उपपातकयुक्ते तु दाप्यः प्रथमसाहसम् ॥

पतनीयकृताक्षेपे पातित्यहेतुभिर्ब्रह्महत्यादिभिः कृता-क्षेपे । इदं गुणवदुत्कृष्टाक्षेपकविषयमिति प्रतिभाति ।

विष्णुः,—

परस्य पतनीयाक्षेपे कृते उत्तमसाहसं उपपातक-युक्ते मध्यमं त्रैविद्यवृद्धानां क्षेपे जातिपूगानाञ्च ग्राम-देशयोः प्रथमम् ।

त्रैविद्यवृद्धानामित्यत्रोत्तमसाहसमित्यनुषङ्गः । जाति-पूगानामित्यत्र मध्यममित्यनुषङ्गः ।

१ क्वचित् पाठः पतनीयकृते क्षेपे दण्डो मध्यमसाहसः ।

तथा च याज्ञवल्क्यः,—

त्रैविद्य नृप देवानां क्षेप उत्तमसाहसः ।
मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोः ॥

अत्र त्रैविद्या वेदत्रयसम्पन्नाः, नृपः प्रजापालः । जातयो ब्राह्मणमूर्द्धाभिषिक्तादयः तेषां पूगः समूहः । ग्रामदेशयोः प्रथम इत्यत्राप्युपपातकयुक्त इत्यनुषङ्गो युक्तः साहचर्य्यादिति केचित् । तन्न ।

आक्षेपविशेषेणैवाप्यनाक्षेप्याक्षेप्यतारतम्यापेक्षया यथोत्तरं दण्डापकर्षविधानात् पापपरत्वस्य स्मृत्यन्तरसम्वादात् ।

यदाह वृहस्पतिः,—

देशादिकं क्षिपन् दण्ड्यः पणानर्द्ध त्रयोदशान् ।
पापेन योजयन् दर्पाद्दण्ड्यः प्रथमसाहसम् ॥

तथा,—

एष दण्डः समाख्यातः पुरुषापेक्षया मया ।
समन्यूनाधिकत्वेन कल्पनीयो मनीषिभिः[1] ॥ इति

अत्र नारदः,—

न किल्बिषेणापवदेच्छास्त्रतः कृतपावनम् ।
न राज्ञोद्धृतदण्ड[2]ञ्च दण्डभाक् तद्व्यतिक्रमात् ॥

कृतपावनं कृतप्रायश्चित्तम् । अपवदेदाक्रोशेत् उद्धृतदण्डं कृतदण्डं अत्र हेतुर्दण्डभागिति । तौ प्रायश्चित्तदण्डौ द्वावनपेक्ष्य किल्बिषभागी दण्ड्यो यत इत्यर्थः ॥

---

१ क्वचित् पाठः महर्षिभिः । २ घ पुस्तके घृतदण्डञ्च ।

अथ तत्तदाक्षेपविषये याज्ञवल्क्यः,—

सत्याऽसत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम् ।
क्षेपं करोति चेद्दण्ड्यः पणानर्द्धत्रयोदशान् ॥

न्यूनाङ्गाः करादिहीनाः, न्यूनेन्द्रिया नेत्रादिहीनाः, रोगिणः कुष्ठिप्रभृतयः। तेषां क्षेप आक्रोशः। स सत्यो यथा नेत्रशून्ये नेत्रशून्यस्त्वमसीत्यादि। असत्यो यथा इन्द्रियवतीन्द्रियशून्यस्त्वमसीत्यादि। अन्यथास्तोत्रमन्ध एव चक्षुष्मानसीत्यादि। एतत् समजातिगुणविषयम्।

समजातिगुणानाञ्च वाक्पारुष्ये परस्परम् ।
विनयोऽभिहितः शास्त्रे पणा अर्द्ध त्रयोदश ॥

इति बृहस्पतिसम्वादात्।

विष्णुः,—

दण्ड्यः काणखञ्जादीनां तत्त्ववाद्यपि कार्षापणद्वयम्। कार्षापणोऽत्र पणः। एतत् समगुणातिदरिद्रविषयमित्यविरोधः।

याज्ञवल्क्यः,—

शतं स्त्रीदूषणे दद्याद्द्वे तु मिथ्याभिशंसिता ।

स्त्रीशब्देनात्र प्रकृतत्वात् कन्याऽवगम्यते तेन यो विद्यमानापस्माररजयक्ष्मादिदीर्घकुत्सितरोगसंसृष्टमैथुनत्वादिदोषान् प्रकाश्य कन्यां दूषयत्यसौ शतं दाप्यः। मिथ्याभिशंसने पुनरविद्यमानदोषाविष्करणे द्वे शते दाप्यः।

अत्र विवाहयितुमुपस्थितायाः परिहारार्थं सत्यदोषप्रकाशे दोषाभावो द्रष्टव्यो वक्ष्यमाणनारदवचनात्।

तथा,—

अभिगन्ताऽस्मि भगिनीं मातरञ्च तवेति हि।
शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम्॥

भगिनीमित्यादि जायादेरप्युपलक्षणमिति मिताक्षरा। विवादचिन्तामणौ,—

अभिगन्तासि भगिनीं मातरं यन्ममेति हि।

इति पठितम्।

याज्ञवल्क्यः,—

बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः।
[1]शत्यस्तदर्द्धिकः पादकर्णनासाकरादिषु॥
अशक्तस्तु वदन्नेवं दण्डनीयः पणान् दश।
तथाशक्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु॥

अत्र बाह्वादीत्यनेन प्रधानमङ्गं विवक्षितं पादादीत्यनेनाप्रधानमिति रत्नाकरादयः। शत्यः शतपरिमितः। अशक्त इत्यादि बाहुपादादिकम् ते कर्त्तयिष्यामीति वाचिकेऽपराधे समानेऽपि यस्तथा कर्त्तुमशक्तस्तस्य दशपणात्मको दण्डो यस्तु शक्तस्तस्य शत—तदर्द्धात्मकः, किञ्चास्य सकाशादाक्षेप्यक्षेमाय प्रतिभूरपि ग्राह्य इत्यर्थः।

मनुः,—

मातरं पितरं जायां भ्रातरम् तनयं गुरुम्।
आक्षारयन् शतं दाप्यः पन्थानञ्चाददद्गुरोः॥

आक्षारयन् वाक्पारुष्यविषयं कुर्व्वन्निति रत्नाकरः। मिथ्याभिशापेन योजयन्निति हलायुधः। आक्षारयन्-

१ ख शक्तः।

अगम्यमैथुनेनाभिशंसन्, तेन जायां प्रति तव माता स्वैरिणीत्यादिरभिलापो द्रष्टव्यः। एवं मात्रादिष्वपीति नारायणः ।

कुल्लूकभट्टोऽपि आक्षारितः क्षारितोऽभिशस्त इत्यभिधानकोषादुपपातकादिनाऽभिशपन्नित्यर्थमाह ।

तथा,—

मातृभार्य्यादीनां लघुगुरुपापाभिशापने न दण्डसाम्यं समाधेयमित्याह ।

मिताक्षराकारस्तु सापराधेषु मात्रादिषु निरपराधेषु जायादिषु द्रष्टव्यमेव तदित्याह । मेधातिथिस्तु आक्षारणं भेदनमित्युक्त्वा मात्रादीनां परस्परभेदनकर्त्तुरयं विधिरित्याह ।

धर्म्मकोषे तु [१]आक्रोशयन्निति पठित्वा आक्रोशनं साक्षेपाह्वानमिति व्याख्यातम् ।

बृहस्पतिः,—

क्षिपन् स्वस्रादिकं दद्यात् पञ्चाशत्पणिकं दमम् ।

अथाधिकृताक्रोशे,—क्रोशत इत्यनुवृत्तौ शङ्खलिखितौ ।

तथाधिकृतान् गुरून् विप्रांश्च निर्भत्सनं[२] ताडनं गोमयाप्रलेपनं खरारोहणं[३] दर्पहरो दण्डो वा ।

अपराधतारतम्यापेक्षया व्यवस्थितोऽत्र विकल्पः ।

प्रकृतीनाञ्च दूषकान् हन्याद्द्विट्सेविनस्तथा ।

---

१ च पुस्तके आक्रोपयन्निति पठित्वा आक्रोपनं साक्रोपाह्वानमिति पाठः ।

२ क्वचित् निर्भत्सयतो मुण्डनम् । ३ मूले पाठः खरारोपणम् ।

इति मनुवचनमप्येवमेव नेयम्। तत्र प्रकृतीनाममात्यादीनां दूषकान् विनादोषं दोषोद्भावकानिति रत्नाकरः। भेदकानिति मनुटीका।

यत्तु,—

स्वाम्यमात्यसुहृत्कोषदण्डराष्ट्रमित्राणि प्रकृतयः तद्दूषकांश्च हन्यात्।

इति विष्णुवचनं—तत्र स्वामी राजा, अमात्यशब्देन प्रधानशिष्टो विवक्षित इति रत्नाकरः।

पूर्व्ववाक्येप्येवमेव वधश्चायमब्राह्मणविषयो ब्राह्मणस्य तु तत्प्रतिनिधिग्रहणमिति वक्ष्यते।

अथ राजाक्रोशे नारदः,—

लोकेऽस्मिन् द्वाववक्तव्याववध्यौ च प्रकीर्त्तितौ।
ब्राह्मणश्चैव राजा च तौ हीदं बिभृतो जगत्॥
अवक्रुश्य च राजानं वर्त्मनि स्वे व्यवस्थितम्।
जिह्वाछेदाद् भवेच्छुद्धः सर्व्वस्वग्रहणेन वा॥

वर्त्मनीत्यादेः प्रजानवेक्षणा[1]नपराधदण्डनादिराजदोषाभावे तात्पर्य्यं कार्य्यिणां राजाक्षेपे दण्डाभावो दण्डव्यवस्थायां दर्शितः।

याज्ञवल्क्यः,—

राज्ञोऽनिष्टप्रवक्तारं तस्यैवाक्रोशकं तथा।
तन्मन्त्रस्य च भेत्तारं जिह्वां छित्वा प्रवासयेत्॥

मिताक्षरायामाक्रोशकमित्यत्राक्रोशिनमिति पठितं

१ घ पुस्तके प्रजानारक्षणानपराध।

व्याख्यातञ्च,—

अनिष्टममित्रस्तोत्रादि तस्य प्रवक्तारं प्रकर्षेण भूयो भूयो वक्तारं तस्यैव राज्ञ आक्रोशिनं निन्दाकरणशीलं तदीयस्य च मन्त्रस्य स्वराष्ट्रवृद्धिहेतोः परराष्ट्रक्षयकारस्य च भेत्तारममित्रकर्णेषु जपन्तं जिह्वामुत्कृत्य स्वराष्ट्रान्निष्काशयेदिति ।

यत्तु,—त्रैविद्यनृपदेवानां क्षेप उत्तमसाहसः ।

इति याज्ञवल्क्यवचनं तत्र लघुतः क्षेपो विवक्षित इति न विरोधः ।

यच्च राजानुवृत्तौ कात्यायनः,—

अप्रियस्य च यो वक्ता वधं तेषां प्रकल्पयेत् ।

ये राज्ञोऽप्रियवादशीलास्ते वध्या इत्यर्थ इति रत्नाकरः । एतदब्राह्मणविषयम् ।

इह यत्र विशिष्टदण्डो नोपदिष्टस्तत्र निष्ठुराश्लीलतीव्रेषु पारुष्येषु यथोत्तरं दण्डगौरवमूहनीयमित्याह ।

उशनाः,—

यत्र नोक्तो दमः पूर्व्वैरानन्त्याच्च महात्मभिः ।
तत्र कार्य्यं परिज्ञाय कर्त्तव्यं दण्डधारणम् ॥

एतत्तु विषयान्तरेऽपि द्रष्टव्यं न्यायसाम्यात् ।

अथ नारदः,—

यत्र स्यात् परिहारार्थं पतितत्वेन कीर्त्तनम् ।
वचनात्तत्र न स्यात्तु दोषो यत्र विभावयेत् ॥
अन्यथा तुल्यदोषः स्यान्मिथ्योक्तावुत्तमो दमः ।

वचनात् शास्त्ररूपात् परिहारार्थमिति पतितादि-संसर्गपरिहारार्थं यदि पातित्यादि कीर्त्तयति तदा न दोषः, अन्यथा पतितादिभिः सह तुल्यदोषः स्यादित्यर्थः ॥

तथा,—

अतथ्यं श्रावितं राजा प्रयत्नेन विचारयेत् ।
अनृताख्यानशीलानां जिह्वाच्छेदो विशोधनम् ॥

जिह्वाच्छेद इत्यब्राह्मणविषयं, तत्र उत्तमसाहसो दण्डो द्रष्टव्यः ।

तथा हि हारीतः,—

मिथ्यादूषितानां मेलकानां जिह्वां छिन्द्याद्दण्डयेद्वा साहसम् ।

मिथ्यादूषितानां मिथ्यावाक्पारुष्यकर्त्तृणां मेलकानां वाक्पारुष्यकर्त्तृमेलयितॄणाम् ।

कात्यायनः,—

एकपात्रेऽथ पंक्त्या वा सम्भोक्ता येन यो भवेत् ।
कुर्व्वाणस्तं तथा दण्ड्यस्तस्य दोषमदर्शयन् ॥

भोजनविरोधिनं दोषमदर्शयन् तं तथा कुर्व्वाणो दण्ड्य इत्यर्थः। यद्यप्येष क्रियादोषो न वाक्पारुष्यं, तथापि तन्नियतत्वात्तत्तुल्यन्यायत्वाच्चात्र लिखितः ।

बृहस्पतिः,—

आक्रुष्टस्तु समाक्रोशन्नापराधी भवेन्नरः ।

नारदः,—

पारुष्ये सति संरम्भादुत्पन्नक्रोधयोर्द्वयोः ।
स मान्यते यः क्षमते दण्डभाग्योऽतिवर्त्तते ॥

अत्र मान्यते पूज्यते न दण्ड्यत इति यावत् । क्षमते पारुष्यं नानुबध्नाति अतिवर्त्तते पारुष्यं तनोतीति रत्नाकरकृता व्याख्यातम् । एवञ्च बृहस्पतेरनपराधाभिधानमनुबन्धाभावविषयमनुबन्धे तु तत्रापि दण्ड इति गम्यते ।

वस्तुतस्तु—यः क्षमते सहते न तु स्वयमपि प्रतिपारुष्यं प्रवर्त्तयति स मान्यते वाचा पूज्यते यस्तु तादृशमप्यतिवर्त्तते पुनराक्षारयति स दण्डभाग् दण्ड्यते ।

वस्तुतस्तु सोढुमशक्नुवन् प्रत्याक्रोशति तस्य दण्डाभाव इति ऋजुरेव व्याख्या ।

अत्रानुबन्धाभावेऽपि बृहस्पतेरनपराधाभिधानं समन्यूनौ प्रति मन्तव्यमधिकं प्रत्येवंविधेरप्यपराधस्योक्तत्वादिति रत्नाकरः ।

बृहस्पतिः,—

वाक्पारुष्यादिना नीचो यः सन्तमभिलङ्घयेत् ।
स एव ताडयन्तस्य नान्वेष्टव्यो महीभुजा ॥

नीचोऽनुत्तमः सन्तमुत्तमं स एव उत्तम एव तस्य ताडयन्निति हिंसार्थे षष्ठी नान्वेष्टव्य इति हीनं ताडयतोऽधिकस्य दण्डो न करणीय इत्यर्थः ।

दण्डश्चायं द्विधा प्रसक्तः । वाक्पारुष्ये तस्यैवौचित्यादनुचितस्य दण्डपारुष्यस्य प्रणयनात् राजकर्त्तव्यस्य तस्य स्वयंकरणाच्च तदुक्तं ताडयन्निति स एवेति एतच्च श्वपाकादिपरं नारदवचनेनैकमूलकत्वे लाघवात् । अस्तु वा तदितरपरमपि न्यायसाम्यात् ।

नारदः,—

श्वपाक पण्ड चाण्डाल वेश्या वधकवृत्ति[1]षु।
हस्तिप व्रात्यदासेषु गुर्व्वाचार्य्यातिगेषु च॥
मर्य्यादातिक्रमे सद्यो घात एवानुशासनम्।
न च तद्दण्डपारुष्ये दोष[2]माहुर्मनीषिणः॥
यमेव ह्यतिवर्त्तेरन्नेते सन्तं जनं प्रति।
स एव विनयं कुर्य्यान्न तद्विनयभाक् नृपः॥
मला ह्येते मनुष्याणां धनमेषां मलात्मकम्।
अपि तान् घातयेद्राजा नार्थदण्डेन दण्डयेत्॥

श्वपाकः क्षत्रियायामुग्राज्जात इति रत्नाकरः। उग्र-स्त्रियां क्षत्रियाज्जातः स इति तत्त्वम्,—

क्षत्ताज्जातस्तथोग्र्यान्तु श्वापक इति कीर्त्त्यते।
इति मनुदर्शनात्।

उग्रस्तु,—

"शूद्रायां क्षत्रियाज्जातं प्राहुरुग्र इति द्विजा"
देवलेनोक्तः।

पण्डशब्द क्लीवपरः मिताक्षरायां षण्डेत्येवाच पठितम्, चाण्डालः शुद्राद्ब्राह्मण्यां जातश्च। वधकवृत्तिः पर-वध एव वृत्तिर्जीवनं यस्य स वधक इति स्वार्थे कन् इति रत्नाकरः।

कामधेनौ कल्पतरौ च वेश्यासु वधकर्त्तृष्विति स्पष्टमेव पठितम्। अत्र मिताक्षरायां व्यङ्गेषु वधकर्त्तृष्विति पाठः।

---

१ मूले पाठः—व्यङ्गेषु वधवृत्तिषु। २ मूले स्तेयमिति पाठः।

हस्तिपो हस्त्यवरोहकः दासोऽत्र गृहजातादिः। गुर्व्वाचार्य्यातिगः—गुर्व्वाचार्य्यवचनलङ्घयिता, मर्य्यादा धर्म्मव्यवस्था, सद्यो विलम्बितं घातस्ताडनं एवकारोऽर्थदण्डनिवृत्त्यर्थः। यमेवेति।

अयमर्थः श्वपाकादयो येषु पारुष्यं कुर्व्वते तत्र वैषां दण्डं कुर्य्युः, न चैते स्वातन्त्र्येण दण्डप्रणयनदोषाद्राज्ञा दण्ड्याः प्रत्युत यद्येते शालीनत्वादसमर्थत्वाद्वा स्वयं न दण्डयन्ति तदा राजैव श्वपाकादीन् दण्डयेत्।

राज्ञापि ते ताड्या एव न त्वर्थेन दण्ड्याः। श्वपचादयो हि स्वरूपेणैव जनापसदत्वान्निन्दिताः। धनं चामीषां सुतरां निन्दितमिति। शेषं दण्डपारुष्यव्यवस्थायामनुसन्धेयम्।

इति महामहोपाध्याय-धर्म्माधिकरणिक-श्रीवर्द्धमानकृतौ दण्डविवेके वाक्पारुष्यदण्डपरिच्छेदः पञ्चमः॥

---

# अथ दण्डपारुष्यदण्डः।

तत्र बृहस्पतिः,—

हस्त-पाषाण-लगुडैर्भस्म-कर्द्दम-पांशुभिः।
आयुधैश्च प्रहरणं दण्डपारुष्यमुच्यते॥

अत्र भस्मादिभिर्द्दण्डादिभिरायुधैरिति करणत्रैविध्यात् प्रहरणस्य त्रिविधत्वमुक्तं तत्र यथोत्तरं बलवत्।

तथा हि नारदः,—

हीनमध्योत्तमानाञ्च द्रव्याणां समतिक्रमात्।
[1]अवगूरण-निःशल्कपातन-क्षतदर्शनैः॥
तस्यापि दृष्टं त्रैविध्यं मृदुमध्योत्तमक्रमात्।

अवगूरणं शस्त्राद्युत्थापनं निःशल्कपातनमरुधिरं शस्त्रादिघातनम्।

अत्र प्रहरणस्य प्रारम्भो निष्पत्तिः फलानुबन्ध इत्यस्य वैचित्र्यात् त्रैविध्यमुक्तं मृदुमध्यमोत्तमक्रमादित्यनेन यथोत्तरं बलवत्वमुक्तम्।

सर्व्वविधञ्चैतत् स्वयंकृतमन्यद्वारकृतञ्चेति द्विविधम्। तथा द्वयोः परस्परेण प्रवर्त्तितमेकतरेण वेति द्विविधम्। प्रहर्त्ता चैकानेकभावादुत्तमादिभेदाच्चानेकविधः स्थावर-जङ्गमभेदाद्द्विपदचतुष्पदभेदाच्चास्य द्वैविध्यमधिकम्।

एवमाढ्यत्वानाढ्यत्वादयोऽपि द्रष्टव्यास्तत्र ते विशेषा दण्डविशेषोपयोगिनः प्रमुख एवानुसन्धेयाः।

---

१ क्वचित्पाठः अवगोरणा निःशङ्क।

तथा स्वामिने हृतभग्नदानमपहर्त्तुर्दण्डद्वैगुण्यं गाढ-प्रहर्त्तुः समुत्थानव्ययदानमित्यादिकञ्च दण्डोपदेशकाल एवाकल्पनीयम् ।

तत्र याज्ञवल्क्यः,—

कलहापहृतं देयं दण्डश्च द्विगुणस्ततः ।

कलहेन यद्येनापहृतं तत्तेन देयं ततः प्रहृतद्रव्या-द्विगुणो दण्डश्चापहर्त्तुः कर्त्तव्य इत्यर्थः ।

कात्यायनः,—

वाग्दण्डस्ताडनञ्चैव येषूक्तमपराधिषु ।
हृतं भग्नञ्च दाप्यास्ते शोध्यं निस्वैः स्वकर्म्मणा ॥

भग्नं गृहरथ्यादि, निःस्वैर्निर्द्धनैरपराधिभिः कर्म्मणा सेवादिरूपेण शोध्यं पूरणीयम् ।

मनुः,—

अङ्गानां पीडनायाञ्च व्रणशोणितयोस्तथा ।
सर्व्वस्वञ्च व्ययं दाप्यः सर्व्वदण्डमथापि वा ॥

व्रणो मांसभेद इति नारायणः । अङ्गानां करादीनां व्रणशोणितयोर्व्वा छेदनभेदनादिना पीडितस्य यावता कालेन समुत्थानसामर्थ्यं भवति तावत्पर्य्यन्तं यावान् पथ्यौषधादिव्ययो भवति तावत्तं पीडाकर्त्ता दद्यात् ।

अथ तं व्ययमसौ न दातुमिच्छति तदा यः समुत्थान-व्ययो यश्च दण्डस्तं सर्व्वं राज्ञा दाप्यः ।

अत्र व्रणपदस्थाने प्राणपदं क्वचित् पठ्यते । तत्र प्राणो बलमिति नारायणेनोक्तम् ।

कात्यायनः,—

देहेन्द्रियविनाशे तु यथा दण्डं प्रकल्पयेत् ।
तथा तुष्टिकरं देयं समुत्थानञ्च पण्डितैः ॥
समुत्थानव्ययञ्चासौ दद्यादाव्रणरोहणात्[1] ।

देयं दाप्यमित्यर्थः । अत्र प्रतिभाति इन्द्रियादीनां यत्रात्यन्तमेव नाशः करादीनां कर्म्माक्षमत्वञ्च भवति तत्र पीडितस्य तुष्टिकरं नष्टाङ्गगौरवलाघवानुसारेण ताडको दाप्यः । तेषां प्रकृतिलाभपक्षे तु समुत्थानव्ययमात्रमिति व्यवस्था ।

विष्णुः,—

सर्व्वे पुरुषपीडाकराः समुत्थानव्ययं दद्युर्ग्राम्यपशु-पीडाकराश्च ।

अत्रापि पशूनां प्रकृतिलाभपक्षे तत् समुत्थानव्यय-मात्रमन्यत्र स्वामिने पशुप्रतिनिधिमूल्ययोरेकतरदान-मिति द्रष्टव्यम् ।

अत्र याज्ञवल्क्यः,—

दुःखेषु[2] शोणितोत्पादे शाखाङ्गच्छेदने तथा ।
दण्डः क्षुद्रपशूनान्तु द्विपणाद्विगुणः क्रमात् ॥
लिङ्गस्य छेदने मृत्यावधमो[3] मूल्यमेव च ।
महापशूनामेतेषु स्थानेषु द्विगुणो दमः ॥

शाखा अनारम्भकशृङ्गादिरूपा अङ्गमारम्भकं कर-चरणादि । तेन क्षुद्रपशूनामजादीनां शोणितं विना

१ मूले—रोपणात् । २ मूले दुःखेऽथ । ३ घ मृत्यौ मध्यमः ।

दुःखोत्पादे शाखाच्छेदेऽङ्गच्छेदे यथाक्रमं द्विपणचतुष्पणाष्टपण-षोडशपणा दण्डा इति हलायुधः। एवमेव रत्नाकरः ।

मिताक्षरायान्तु,—

द्विपणाद्द्विगुण इत्यत्र द्विगुणप्रभृतिरिति पठितम् ।

उक्तञ्च नात्र द्विपणस्त्रिपणश्चतुष्पणः पञ्चपण इति वाच्यम्। यथोत्तरमपराधगौरवेऽप्यश्रुतत्रित्वादिसंख्याश्रवणे गौरवात्। तस्माद्वरं श्रुतद्वित्वसंख्याया एवाभ्यासोऽस्तु तेन द्विपणचतुष्पणषट्पणाष्टपणक्रमेण दण्ड इति ।

क्षुद्रपशूनामेव लिङ्गच्छेदने मारणे च मध्यमसाहसो दण्डः। पशुस्वामिने च मूल्यदानं महापशूनान्तुरगादीनामेतेषु दण्डस्थानेषु द्विपणादयो दण्डाद्द्विगुणाः कार्य्या इति ।

विष्णुः,—

गजाश्वगवोष्ट्रोपघाती चैकपादः कार्य्यः ग्राम्यपशुघाती कार्षापणशतं दण्डः। पशुस्वामिने च तन्मूल्यं दद्यात्। अरण्यपशुघाती पञ्चाशतं कार्षापणान् पक्षिघाती मत्स्यघाती च दशकार्षापणान् कीटोपघाती कार्षापणम्।

अतज्जीविनामेष दण्ड इति कृत्यसागरस्मृतिसारौ।

हलायुधस्त्वाह,—

परपरिगृहीत कीटमत्स्यादिवधे दण्डोऽयं स्वामिने मूल्यदानाभिधानादिति ।

कात्यायनः,—

त्रिपणो द्वादशपणो घाते तु मृगपक्षिणाम् ।
सर्प-मार्ज्जार-नकुल-श्व-शूकरवधे नृणाम् ॥

अत्रात्यन्तापकृष्टमृगपक्षिघातेषु त्रिपणः, उत्कृष्ट तद्घातकेषु द्वादशपणः । विष्णूक्तस्तु पञ्चाशत्पणोऽत्यन्तोत्कृष्टमृगपक्षिवधविषयो वक्ष्यमाणमनुवचनात् ।

पुत्रादीन् पारुष्याय प्रेरयत एव पित्रादेरपराधो नत्वन्यथेत्यादिकमपीदानीमेवालोचनीयम् ।

तत्र नारदः,—

पुत्रेऽपराद्धे न पिता श्ववान् शुनि न दण्डभाक् ।
न मर्कटे च तत्स्वामी तेनैव प्रहितो न चेत् ॥

याज्ञवल्क्यः,—

[1]शक्तो ह्यमोचयन् स्वामी दंष्ट्रिणां शृङ्गिणां तथा ।
प्रथमं साहसं दण्ड्यो विक्रुष्टे द्विगुणन्तथा ॥

विक्रुष्टे—स्वीयं शृङ्गिणमपसारयेत्यसकृदाक्रोशकृते ।

अत्र याज्ञवल्क्य एव,—

चतुष्पदकृतो दोषो नापैहीति प्रभाषतः ।
काष्ठलोष्ट्रेषु पाषाण बाहुयोग्या[2]कृतस्तथा ॥

चतुष्पदमश्वगवादिकमारुह्यान्यथा वा नयतस्तथा काष्ठादिना न्यायसाम्यात् । अन्यस्य द्रव्यैर्योग्यमभ्यासं कुर्व्वतः ।

---

१ क्वचित्पाठः शक्तोऽप्यमोचयन् ।

२ मूले युग्मकृतस्तथा ।

परोपघातशङ्कया प्रथममेव दूरमपैहीति प्रजल्पतः । प्रकर्षेणोच्चैर्भाषमाणस्याश्वादिकृतमनुष्यादिदोषोऽश्वादिनेतुरभ्यासकर्त्तुश्च न भवतीत्यर्थः ।

अथ मनुः,—

यानस्यैव हि जन्तोश्च यानस्वामिन एव च ।
दशातिवर्त्तनान्याहुः शेषे दण्डो विधीयते ॥

यानस्य रथादेर्यद्यपि पश्वादेर्न्न दण्डस्तथापि शिविकावाहकपुरुषस्यास्तीति यानग्रहणमिति नारायणः । जन्तोः सारथेर्दण्डमतिक्रम्य वर्त्तन्त इत्यतिवर्त्तनानि अदण्डनिमित्तानि ।

दशविधानि तान्याह स एव ।

[1]छिन्ननस्ये भिन्नयुगे[2] तिर्य्यक् प्रतिमुखागते ।
अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च ॥

भेदने चैव यन्त्राणां योक्त्र-रश्म्योस्तथैव च ।
आक्रन्दे वाप्यपैहीति न दण्डो मनुरब्रवीत् ॥

छिन्ननस्ये छिन्ननासासमुद्ररज्जौ भिन्नयुगे युगकाष्ठभेदे प्रतिमुखागते प्रत्याहृत्यागत इति नारायणः ।

तिर्य्यक् प्रतिमुखागते इति तिर्य्यक् प्रतिमुखञ्च यत् तत् प्रतिबोधादगतगमनं तेन तिर्य्यक् प्रतिमुखविरोधिगमनस्य यानान्तरबलेन यदपरस्य यानस्यागमनादितरदपि न दण्डहेतु इत्यर्थ इति रत्नाकरः ।

---

१ घ पुस्तके छिन्नेनास्ये । २ ख भग्नयुगे ।

अक्षश्चक्रमध्यकाष्ठं, यन्त्राणां युगादिवन्धनानां, काष्ठ-सन्धिघटितानामिति सर्व्वज्ञः। योक्तं मुखवन्धनरज्जुः, रश्मिः प्रग्रहः। आक्रन्दे चाप्यपैहीति रथादेरशक्यनिवर्त्तनत्वे दूरं गच्छेत्यभिलापे सारथ्यादिना कृते तदनादृत्य समीप-मुपगच्छन् पश्चादपसरन् वा यदि रथादिना पीड्यते तदा सारथ्यादेर्न दण्ड इत्यर्थः।

तथा,—

यत्रापवर्त्तते युग्यं वैगुण्यात् प्राजकस्य तु ।
तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतं दमम् ॥

यत्रानभिज्ञः प्राजकः सारथ्यादिः स्वामिना कृतः, तदज्ञानाच्च युग्यं तुरगाद्यतिवर्त्तते अतिक्रामति तत्र तज्जन्यहिंसायामशिक्षितसारथिनियोगदोषात् स्वामी द्विशतं दमं दण्ड्यः।

मनुष्यमारणे क्षिप्रमित्यादिकञ्च दण्डमर्हतीति मनुटीका।

यत्र पुनरभिज्ञ एव प्राजकः कृतस्तत्र तस्यैव दण्डो न स्वामिन इत्याह स एव।

तथा,—

प्राजकश्चेद् भवेदाप्तः प्राजको दण्डमर्हति ।
युग्यस्थाः प्राजकोऽनाप्तः सर्व्वे दण्ड्याः शतं शतम् ॥

आप्तोऽभिज्ञः, युग्यस्था इति स्वामिव्यतिरिक्ता अन्येऽपि यानारूढा अकुशलसारथिकयानारोहणदोषाद्दण्ड्या इत्यर्थ इति भट्टः। ये यानस्थाः सारथिपक्षपूरकतया विज्ञाताः स्वामिना नियुक्तास्ते दण्ड्या इति नारायणः।

तथा च,—

स चेत्तु पथि संरुद्धः पशुभिर्व्वा रथेन वा ।
प्रमापयेत् प्राणभृतस्तत्र दण्डोऽविचारितः ॥

वाकारोऽनास्थायां तेन प्रपातगमनोच्चावरोहणतिर्य्यग्गमनादिनाऽपीत्यर्थः । यत्र प्राजकाकौशलप्रयुक्तः पश्चाद् यानान्तरे यानप्रतिबद्ध-प्राणिहिंसाहेतुर्भवति । तत्रापि प्राजकस्य दण्डोऽविचारितो निश्चित इत्यर्थ इति रत्नाकरः ।

नारायणेन तु अशक्यविषये हिंसायामाहेति वचनमिदमवतारितं व्याख्यातञ्च दण्डो विचारितो मुनिभिर्नास्त्येवेत्यर्थ इति ।

इदानीं प्राणिविशेषे मृते सारथेर्द्दण्डविशेषमाह स एव ।

मनुष्यमारणे क्षिप्रं चौरवत् किल्बिषं भवेत् ।
प्राणवत्सु महत्स्वर्द्धं गोगजोष्ट्रहयादिषु ॥

अथ लगुडादिना बुद्धिपूर्व्वकमारणे दण्डमाहेति कृत्वा सर्व्वज्ञेनैव तदवतारितम् । अत्र चौरवदित्यनेन महति साहसे योऽर्थदण्डः सोऽतिदिश्यते न तु वधदण्डः, तस्यार्द्धत्वासम्भवेन गवादिष्वर्द्धमित्यभिधानविरोधादिति हलायुधः ।

एवमेव रत्नाकरादयः । एवमेव कुल्लूकभट्टः, चौरदण्ड उत्तमसाहस इति च व्याख्यातवान् ।

नारायणसर्व्वज्ञस्तु यस्य चौर्य्ये यावान् धनदण्डस्तदर्द्धमित्याह ।

युक्तञ्चैतत् । न चैवं मनुष्यमारणप्रकरणोक्तदण्ड-विरोधस्तत्र जिघांसया मनुष्यमारणमिह तु प्रमादादिनेति विशेषात् ।

एकत्र परस्य मरणमभिप्रेत्य प्रहरणमन्यत्र तस्य पीडा-मभिसन्धाय [1]प्रहारे दैवात्तु ततस्तन्मरणमिति प्रहर्त्तुरप-राधलाघवगौरवयोरौचित्यात् । अत एव गवादिवधे बुद्धि-पूर्व्वकत्वाबुद्धिपूर्व्वकत्वाभ्यां प्रायश्चित्तोपदेशविशेषो घटते ।

अत एवेदं वचनम् निबन्धकारैः पारुष्यप्रकरणेऽव-तारितम् न तु मनुष्यमारणप्रकरणे ।

न च घातने तु प्रमापणमित्येतत् प्रकरणावतारित-बृहस्पतिवचनविरोधः, तस्यापि बुद्धिपूर्व्वकवधविषयत्वात् ।

तथापि यत्र बहुषु प्रकारेषु कृतेष्ववसन्नमरणस्यापि पुनःपुनर्न्निःशल्क[2]दण्डादिना प्रहरणं यत्र वा हिंसकत्वेन प्रसिद्धस्य खड्गादेः पातनं ततस्तन्मरणं तद्विषयमिदं वचन-मिति न विरोधगन्धोऽपि ।

वस्तुतस्तु प्रकृतः पाठ एवासिद्धः । कामधेन्वादौ पातनस्य पठ्यमानत्वात् ।

तथा च यथोत्तरवाक्ये कर्णादीनां भेदे मध्यमो दण्डः पातने तद्द्विगुणस्तथा पूर्व्ववाक्येऽप्यस्थिभेदे उत्तमस्तेषां पातने द्विगुण इति तुल्यन्यायतया प्राप्तं तत्र चायं वैकल्पिकः शारीरो दण्डः ।

---

१ घ पुस्तके प्रहारात् । २ ख निःशङ्क ।

तथा च प्रमापणं नाशनं तच्चास्थ्नामेव प्रकृतत्वात् सन्निधिश्रुतत्वाच्च तेषामेव सम्बन्धित्वेन प्रतीतेः ।

एवं सति प्रपातनमित्येव किन्नोक्तमिति चेन्न, अङ्गुल्यङ्गुष्ठयोर्वध इति नारदोक्तिवत् स्वतन्त्रोक्तेरपर्य्यनुयोज्यत्वात् । इत्थमस्थ्नां सम्बन्धित्वे स्थिते घातनस्यापि पातनार्थत्वेन व्याख्यानं सुकरम् ।

एवञ्च यः प्रकृत्य परस्यास्थि पातयति तस्य तथैवास्थिपातनं दण्ड इति नैयायिको वाक्यार्थः ।

अत्र यद्यपि पदार्थे काचिद् वक्रताऽस्ति तथापि न दोषः । वाक्यार्थानुरोधेन पदार्थपरिकल्पनाया दृष्टत्वात् । न्यायानुग्रहाच्च । यो यथाऽपराध्यति तस्य तथैव दण्ड इत्ययं हि न्यायः प्रकृतपाठवादिनाऽपि वाच्य एव ।

न्यायमूलान्येव चैतानि वचनानीति पुरोभागितामपहाय सहृदयैरनुसन्धेयम् ।

तथा,—

क्षुद्रकाणां पशूनाञ्च हिंसायां द्विशतो दमः ।
पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु ॥
गर्दभाजाविकानाञ्च दण्डः स्यात् पञ्चमाषिकः ।
[1]माषकस्तु भवेद्दण्डः श्वशूकरनिपातने ॥

क्षुद्रत्वमल्पपरिमाणत्वं तच्च वयस्तः शलभादीनां जातितो ऽजादीनामिति रत्नाकरादयः । क्षुद्राणां विशेषोपदिष्टादन्येषां वानरादीनामिति कुल्लूकभट्टः ।

---

१ ख पुस्तके माषिकस्तु ।

तथा पशूनामित्यल्पवयसां किशोरकादीनामिति-व्याख्यातवान्।

नारायणसर्व्वज्ञस्त्वाह,—

क्षुद्रपशूनां मृगपक्ष्यादीनां द्विशत इत्युक्तमदण्डोपदर्शनमेतत् तच्च तच्च तु क्षुद्रत्वह्रासक्रमेण ह्रासः। एतच्च परिगृहीतविषये। अपरिगृहीते त्वाह पञ्चाशत्त्विति।

शुभमृगा रुरुप्रभृतयः। श्व-साहचर्य्यात् शूकरोऽत्र ग्राम्यः। माषके द्वे रूप्यकृष्णलके इति पारिजातः।

कुल्लूकभट्टोऽपि पञ्चमाषिकः पञ्चरूप्यमाषपरिमाणः। न चात्र हैरण्यमाषकग्रहणमुत्तरोत्तरं लघुमाषकादि विधानादित्याह।

नारायणस्तु पञ्चभिः सुवर्णमाषकैर्न्निष्पाद्यः पञ्चमाषिक इत्याह।

कात्यायनः,—

प्रमापणे प्राणभृतां प्रतिरूपन्तु दापयेत्।
तस्यानुरूपमूल्यं वा दाप्य इत्यब्रवीन्मनुः॥

परकीयाणां द्विचतुष्पदानां दण्डपातनजनिता या हिंसा या रथाद्यभिघातप्रभवा तदुभयसाधारणमिदं वचनम्। प्रतिरूपं प्रमापितस्य गुणादिना सदृशम्। एतच्च प्रतिरूपादिदानं प्रमापितस्वामिनः।

अथ मनुः,—

वनस्पतीनां सर्व्वेषामुपयोगो यथा यथा।
तथा तथा दमः कार्य्यो हिंसायामिति धारणा॥

वनस्पतिपदमुपयुक्तसर्व्वस्थावरोपलक्षणार्थं न्याय-साम्यात् ।

तथा—उपयोगगौरवलाघवानुसारेण ।

अत्र कुल्लूकभट्टः,—

'फलपुष्पपत्रादिषूत्तममध्यमाधमेषूपयोगेषूत्तमसाहसादिर्दण्ड' इत्याह ।

युक्तञ्चैतत् "फलोपगद्रुमच्छेदी तूत्तमसाहसमित्यादि-वक्ष्यमाणविष्णुवचनसंवादात् ।

इहास्वामिकेषु वृक्षलतादिषु स्वयं परद्वारा वा छिन्नेषु छेत्तुर्दण्डो विध्यतिक्रमात् तेषामपि वृथाछेदस्य निषिद्ध-त्वात् ।

"फलपुष्पोपयोगान्[1] पादपान्न हिंस्यात्" ।

इत्यादिवसिष्ठादिवचनदर्शनात् ।

फलदानान्तु वृक्षाणां छेदने जप्यमृक्शतम् ।
गुल्मवल्लीलतानाञ्च पुष्पितानाञ्च वीरुधाम् ॥

इत्यादि प्रायश्चित्तोपदेशाच्च ।

स च दण्डः प्रकीर्णकप्रकरणे विस्तरेण वक्ष्यते ।

सस्वामिकेषु तु तत्स्वामिने तत्प्रतिनिधि-तन्मूल्ययो-रेकतरदानमपीति विशेषः ।

अथ यदि पतिपित्रादिर्भार्य्यापुत्रादीननुशासन् स्वयं शिष्यादिद्वारा वा ताडयति तदा प्रहाराधिक्य एव तस्य दण्डो न त्वन्यथेत्याह मनुः,—

---

१ ष पुष्पोपगान् ।

भार्य्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः ।
प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा ॥
पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कदाचन ।
अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चौरकिल्विषम् ॥

भार्य्यापदमजहत्स्वार्थलक्षणया स्नुषादिपरमपि, एवं पुत्रपदं पौत्रादिपरमपि, दासपदं मुख्यगौणदाससाधारणमधीनमात्रपरं वा ।

शास्ता निर्द्देशमादिशेत् ।

इत्यापस्तम्बवाक्ये शूद्रो यस्य शुश्रूषां करोति स तस्य शास्तेति रत्नाकरव्याख्यानदर्शनात् ।

भ्राता कनिष्ठः । पृष्ठतोऽमर्म्मणि नोत्तमाङ्गे न मर्म्मणीत्यर्थो न्यायसाम्यात् । चौरकिल्विषमिति ताडितस्यामरणे उत्तमस्तेयदण्डो मरणे तु भूयस्त्वमूह्यमिति नारायणः ।

ब्रह्मचारीत्यनुवृत्तौ नारदः,—

भृशं न ताडयेदेनं नोत्तमाङ्गे न वक्षसि ।
अनुशास्य च विश्वास्यः शास्यो राज्ञाऽन्यथा गुरुः ॥

भविष्यपुराणे,—

पुत्रः शिष्यस्तथा भार्य्या शासितश्चेद्विनश्यति ।
न शास्ता तत्र दोषेण लिप्यते देवसत्तम! ॥

पुत्र इत्यादि शास्यादाहरणम्, शासनञ्चात्र यथोक्तम् । अथ पितापुत्रादेरन्यत्र द्वयोः प्रहर्त्तृत्वे विशेषमाह ।

नारदः,—

पूर्व्वमाक्षारयेद् यस्तु नियतं स्यात् स दण्डभाक्[1]।
पश्चाद् यः सोऽप्यसत्कारी पूर्व्वे तु विनयो गुरुः॥

पूर्व्वमादौ आक्षारयेत् पारुष्यं कुर्य्यात् दोषभाक् दण्ड्यः, असत्कारी सापराधः। विनयो दण्डो गुरुरितरापेक्षया तेन प्रथमप्रवृत्तरि यथोक्तो दण्डश्चरमप्रवृत्तरि तदपेक्षयाऽल्प इति तात्पर्य्यम्।

प्रहारयोः पूर्व्वापरभावानवधारणे त्वाह।

कात्यायनः,—

पारुष्यदोषाच्च तयोर्युगपत् संप्रवृत्तयोः।
विशेषश्चेन्न दृश्येत विनयः स्यात् समस्तयोः॥

पारुष्यदोषाद्विनय इत्यर्थः। विशेषोऽयमेवं पूर्व्वं कृतवानित्याकार इति रत्नाकरः।

यद्यपि प्रहारयोः पूर्व्वापरभावेऽज्ञाते वादिनोः शपथादिना निर्णयात्तयोर्निश्चयः, अन्यथा विवादानारोहात्।

तथापि मल्लयोरिव मेषयोरिव वाऽवास्तवं यत्र यौग्यपद्यं यत्र च प्रधानयोः कलहे तत्तद्दृश्यानां सम्मर्द्दे प्रहारप्राथम्यं दुर्बोधं तद्विषयमिदम्।

उपलक्षणञ्चैतत् तेन यत्रैकस्यारम्भकत्वेऽन्यस्यानुबन्धित्वे यत्र चैकस्याल्पेऽपि पारुष्ये प्राथमिके अन्यस्य पश्चात्तनेऽपि तस्मिन्नधिकेऽपराधसाम्यं तत्रापि सम एव दण्डः। एतदभिप्रायकमेव रत्नाकरीयमादिपदम्।

---

[1] मूले दोषभाक्।

यदि तु पश्चात् प्रवृत्तोऽपि कलहमुत्तरोत्तरमनुबध्नाति तदा सोऽप्यधिकमेव दण्ड्य इत्याह—

नारद एव,—

द्वयोरापन्नयोस्तुल्यमनुबध्नाति [१]योऽधिकम् ।
स तयोर्दण्डमाप्नोति पूर्व्वो वा यदि वोत्तरः[२] ॥

तुल्यमापन्नयोः पारुष्ये तुल्यप्रवृत्तयोरधिकं दण्डमित्यन्वयः ।

द्वयोः प्रहरतोर्दण्डः समयोस्तु समः स्मृतः ।
आरम्भकोऽनुबन्धी च दाप्यः स्यादधिकं दमम् ॥

इति बृहस्पतिसंवादात् ।

तथैकस्मिन् हस्तादिना भस्मादिना वा प्रहरमाणे यद्यपरस्तीक्ष्णेन दण्डेन प्रहरति तदा तस्याधिको दण्ड इत्याह ।

कात्यायनः,—

आभीषणेन दण्डेन प्रहरेद् यस्तु मानवः ।
पूर्व्वं वाऽपकृतो वाऽथ सोऽपि दण्ड्योऽधिकं भवेत्[३] ॥

आभीषणेन खड्गादिना ।

अथ बृहस्पतिः,—

आक्रुष्टस्तु समाक्रोशन् ताडितः प्रतिताडयन् ।
हत्वाततायिनञ्चैव नापराधी भवेन्नरः ॥

एतदनुबन्धाभावविषयमनपराधाभिधानं तदपि न्यूनसमानौ प्रति द्रष्टव्यम् । अधिकं प्रत्येवंविधेऽप्यपराधस्योक्त-

१ ग पुस्तके यः पुनः । २ मूले पूर्व्वन्तु विनयेद्गुरुः ।
३ क्वचित् पाठः स दण्ड्यः परिकीर्त्तितः ।

त्वात् पश्चात्कारिणि नारदीयमल्पदण्डाभिधानं तदनुबन्धिकलहविषयमिति रत्नाकरः ।

प्रतिताडयन्नित्यत्र तुल्यरूपं ताडनं विवक्षितमिति धर्म्मकोषे त्रिलोचनमिश्राः ।

आततायिनमाहतुर्मनुवसिष्ठौ,—

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारापहारी च षडेते आततायिनः ॥

विष्णुकात्यायनौ,—

उद्यतासिं कराग्निञ्च शापोद्यतकरन्तथा ।
आथर्व्वणेन हन्तारं पिशुनञ्चापि राजनि ।
भार्य्यातिक्रमिण[१]ञ्चैव विद्यात् सप्ताततायिनः ॥

मत्स्यपुराणम्,—

गृहक्षेत्रापहर्त्तारं तथा पत्न्यभिगामिनम् ।
अग्निदं गरदञ्चैव तथाह्यभ्युद्यतायुधम् ॥
अभिचारञ्च कुर्व्वाणं राजगामि च पैशुनम् ।
एतान् हि लोके धर्म्मज्ञाः कथयन्त्याततायिनः ॥

बृहद्विष्णुः,—

उद्यतासिः प्रियाधर्षी धनहर्त्ता गरप्रदः ।
अथर्व्वहन्ता[२] तेजोघ्नः षडेते आततायिनः ॥

अत्र धनापहेत्युक्त्वा क्षेत्रापहारीति पृथगभिधानं धनस्य बहुतरत्वप्रतिपादनार्थं तेन क्षेत्रस्य शासनादेरल्पस्यापि धनस्य बहुतरस्यैव यस्यापहरणे वर्त्तनस्योच्छेदो भवति

१ घ क्रामिणम् । २ क ग पुस्तके—हर्त्ता ।

तस्यापहर्त्तातताथी । राजगामि च पैशुनं यदभिधाने-ऽवश्यं प्राणत्यागो भवति तद् द्रष्टव्यम् । तेजोघ्नश्चाच यो मद्यदानेन ब्राह्मं तेजो हन्ति सोऽभिप्रेतः ।

यत्र कुतश्चिन्निमित्तादात्मनो वधनिश्चयो न भवति तत्र शस्त्रपाणेरायुधोद्यमनेऽपि नाततायित्वम् ।

अत एव भविष्यपुराणे,—

हत्वा तु प्रहरन्तं[1] वै ब्राह्मणं वेदपारगम् ।
कामतोऽपि चरेद्धीर द्वादशाब्दाख्यमुत्तमम् ॥

इति प्रायश्चित्तमुक्तम् ।

प्रहारो ह्यत्र न वधोऽपदार्थत्वात् किन्त्वभिघातमात्रं चक्षुराद्यवयवानां प्रकर्षेण हरणं वा । सर्व्वत्रैव चात्रो-द्यतासिपदादिसमभिव्याहारात् प्रवृत्तक्रिय एवाततायी नत्वतीतक्रियो भाविक्रियो वेति सिद्धान्तमाहुः ।

युक्तञ्चैतत् वृत्तवर्त्तिष्यमाणक्रिययो राजसकाशादप्यनु-शासनसम्भवे स्वयं शस्त्रधारणानुपपत्तेः परीक्षार्थमपि न शस्त्रमाददीतेति[2] निषेधात् ।

अत्र केचित्—

प्रहारस्थले यथा तथास्तु दारापहारादौ निवृत्तक्रियो-ऽप्याततायीत्युपेयं कैमुतिकन्यायात् । अपहारादेः सम्भा-वनापेक्षया निश्चयस्य बलवत्त्वादतस्तत्राप्यपहर्त्रादेर्वधे न दण्डो न वा प्रायश्चित्तमिति ।

तच्चिन्त्यम् । नह्यपराधाधिक्यमाततायिनो वधाभ्यनुज्ञा-

१ घ हन्ता । २ घ उपाददीत ।

बीजमाहुरपि तु विहितस्यात्मगोपनस्यान्यथानुपपत्तिः। सा च प्रहारस्थले साक्षादन्यत्र परम्परयेति सर्व्वत्राविशिष्टा।

हन्त्वैवं दारापहारे साक्षात् परम्परया वात्मगोपना-विरोधात् कथमनुज्ञेति चेत् आत्मरक्षणवद् दाररक्षण-स्यापि विहितत्वात्।

सर्व्वेषामेव वर्णानां दारा रक्ष्यतमाः स्मृताः।

इति परदाराभिमर्षणप्रकरणीयमनुवचनात्। परेण स्व-दारावमर्षणात् वर्णसङ्करेण सर्व्वनाशस्य मनुनैवोक्तत्वात्।

स्यादेतत् स्त्रीणां प्रमादमदमोहबलात्कारकृते व्यभि-चारे रजसा शुद्धिः।

यत्तु बलात्कारादावपि चिरात्रप्रायश्चित्तं स्मर्य्यते तद-संजातरजस्काया निवृत्तरजस्काया वेत्यविरोधः।

कामजे तु व्यभिचारे चान्द्रायणेन शुद्धिः। गर्भसम्भवे, गर्भपातने गुरुशिष्यसुतपतितचाण्डालादिगमने च त्यागः।

स चात्र भोगधर्म्मकार्य्ययोर्बहिष्करणलक्षण इति बृहस्पति-यम-याज्ञवल्क्य-शङ्ख-वसिष्ठादिवाक्यैकवाक्यतया निबन्धेषु व्यवस्था दर्शिता।

मिताक्षराकारस्तु व्यभिचाराहृतौ शुद्धिरित्याह। अप्रकाशितान्मनोव्यभिचारात् पुरुषान्तरसम्भोगसङ्कल्पात् यत् पापं तस्य ऋतौ रजोदर्शनाच्छुद्धिरिति। तथा गर्भे त्यागो विधीयत इत्याह।

स च शूद्रकृतगर्भे त्यागः।

ब्राह्मणक्षत्रियविशां भार्य्याः शूद्रेण सङ्गताः।
अप्रजास्ता विशुद्ध्यन्ति प्रायश्चित्तेन नेतराः॥

इति स्मरणादिति।

तदेवं व्यवस्थिते शास्त्रार्थे किं तत् प्रियाधर्षणं यत्र वर्णसङ्करभियाभिगन्तुर्ब्राह्मणस्यापि वधोऽनुज्ञायत इति।

अस्तु बलात्कारविषयमेतत् अतिक्रमकारिवत् प्रियाधर्षित्वेनापि तस्य स्फुटत्वात् ञिधृषा प्रागल्भ्य इति धात्वर्थालोचनात् अपहारीत्यतिक्रामिणमित्यभिगामिनमित्यमीषामपि तत्परत्वात् पुरुषव्यापारप्राधान्यप्रतीतेः।

कृतां भावकारकवाचित्वेऽपि तद्विशेषस्य णिनेरुद्रिक्तक्रियांशत्वादिति चेन्न।

यद्यपि णिनावुद्रिक्तः क्रियांशः स्यात् तथापि बलात्कारे रजसा चिरात्रेण वा शुद्ध्येदिति गत्यन्तरसम्भवेन वधस्यादृष्टार्थत्वापातात्, अत एव कामकृतविषयत्वमपास्तम्।

तत्र चान्द्रायणादपि शुद्धिसम्भवात् गर्भोत्पत्त्यादौ तद्योगादेव न सङ्करसंज्ञेति[1] न तद्विषयत्वम्।

किञ्च सर्वत्रात्र सङ्करो वर्णान्तरेणापहाराद् भवति न ब्राह्मणेन अत एव "शस्त्रं द्विजातिभिर्ग्राह्यम्" इत्यादि मनुवाक्ये द्विजातीनां विप्लव उत्तमस्त्रियाऽधमेन योगादिति नारायणेन व्याख्यातमिति कुतस्तद्व[2]धः।

अपि चापहारो नह्यस्वरूपेण सङ्करहेतुरपि तु पुत्रो-

१ क्वचित् शङ्केति। २ घ तद्वाधः।

त्यक्तिद्वारेति ऋतुराचिभ्यो बहिर्दोषो न स्यात् अथास्तु ऋतुराचिषु क्षत्रियविशोर्ब्राह्मणीमभिगच्छतोर्वधः ।

वस्तुतस्तु,—स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ।

इति भगवद्गीतासूपनिषत्सु दर्शनाद् ब्राह्मणेनाब्राह्मणेन वा कामादकामाद्वा सङ्गतासु स्त्रीष्वविशेषादेव सङ्करदोष इत्युपेयम् ।

अत एव पातिव्रतऽस्खलनमेव तद्धेतुमाहतुः शङ्खलिखितौ "एकव्रतक्षयभावात् परोपहतत्वाच्च दुष्टाः स्त्रियः सङ्करकारिण्यो भवन्ति" ।

इति चेन्न प्रायश्चित्तादिनापि दोषापहारसम्भवे वधस्यानौचित्यात् ।

यत्तु केचिदूचुः,—

परदारान् रमन्तस्तु द्वेषात्तत्पतिभिर्हताः ।

इति ब्रह्मपुराणदर्शनात् ब्राह्मणादेः प्रवृत्तक्रियस्य वधो गम्यत इति ।

तच्चिन्त्यं वचनस्यास्य पातित्यं विधातुं वधानुवादरूपत्वात् "पतितास्ते प्रकीर्त्तिताः" इत्युपसंहारदर्शनात् वधस्यानुवाद एव ।

सिद्धमाक्षिपतीति चेन्न आक्षिपतु नाम नत्वयं विधिपूर्व्वको हि नियमः प्रत्युत द्वेषादितिवचनाद् वैरिवधकोटिः कटाक्ष्यत इति ।

अत्रोच्यते प्रियाधर्षिणो वचनादेवाततायित्वमाततायिवधे वचनादेव पापाभाव इति ।

एतच्च भवदेवमतमाश्रित्योक्तम् ।

मिताक्षराकारस्तु,—

आततायिनमायान्तमपि वेदान्तपारगम् ।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ।

इति कात्यायनवचनं तावदर्थशास्त्रम् ।

इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् ।
कामतो ब्राह्मणवधे निष्कृतिर्न[1] विधीयते ॥

इति मनुवचनं धर्म्मशास्त्रं तदनयोर्व्विरोधे धर्म्मशास्त्रं बलवत्—

अर्थशास्त्रात्तु बलवद्धर्म्मशास्त्रमिति स्थितिः ।
इति याज्ञवल्क्यदर्शनात् ।

एवञ्च मनुना "शस्त्रं द्विजातिभिर्ग्राह्यम्"। इत्याद्युपक्रम्य "आत्मनश्च परित्राणे" इत्यादिवचनेनाततायिनमकूट-शस्त्रेण घ्नतो न दण्डभागित्वमिति यदुक्तं तस्यानुवादार्थं "गुरुं वा बालवृद्धौ वा" इत्यादिकमुच्यते ।

तथा चात्र वाशब्दश्रवणादाततायिनमित्यादावपि शब्दश्रवणाद् गुर्व्वादीनत्यन्तावध्यानप्याततायिनो हन्यात् किमुतान्यानित्यर्थान्न गुर्व्वादीनां वध्यत्वं "नाततायिवधे दोषोऽन्यत्र गोब्राह्मणात्" इति सुमन्तुवचनात् ।

आचार्य्यञ्च प्रवक्तारं पितरं मातरं गुरुम् ।
न हिंस्याद्ब्राह्मणान् गाश्च सर्व्वांश्चैव तपस्विनः ॥

इति मनुवचनाच्च । इदं हि वचनमाचार्य्यादीना-माततायिनां हिंसाप्रतिषेधेनार्थवन्नान्यथा, हिंसामात्र-प्रतिषेधस्य सामान्यशास्त्रेणैव सिद्धत्वात् ।

---

१ घ निष्कृतिः ।

एवञ्च नाततायिवधे दोष इत्येतदपि ब्राह्मणादि-व्यतिरिक्तविषयमेव अत एवाग्रतो गत्वा अग्निदो गरद इत्यादिना उद्यतासिरित्यादिना च सामान्येनाततायिनो दर्शिताः।

तदेवं ब्राह्मणादय आततायिन आत्मादित्राणार्थं हिंसानभिसन्धिना निवार्य्यमाणाः प्रमादाद् यदि म्रियन्ते तदा तत्र लघुप्रायश्चित्तं राजदण्डाभावश्चेत्याह।

नारायणेनापि मनुवचनमङ्गच्छेदादिमात्रपरतया व्याख्यातमित्युक्तमधस्तात्।

शूलपाणिस्तु,—

मनुवचने हन्याद्देवेत्येवकारो नियमार्थ इति व्याख्याय विशेषमाह।

कात्यायन इत्युपक्रम्य,—

अनाक्षारितपूर्व्वो यस्त्वपराधे प्रवर्त्तते।
प्राणद्रव्यापहारे च प्रवृत्तस्याततायिता॥

इति लिखित्वा अनाक्षारितोऽनपकृतः, तेन पूर्व्वं कृता-पराधस्य मारणोद्यतस्यापि नाततायित्वमतः प्रत्यपकारि-वधे दोष एवेति व्याख्यातवान्।

तथा "नाततायिवधे दोषोऽन्यत्र गोब्राह्मणा"दिति "हन्यात् प्रायश्चित्तं कुर्य्यादि"ति सुमन्तुवचने,—

स्त्रिखानमपि गोविप्रं न हन्याद्वै कदाचन।

इति भविष्यपुराणे चाततायिनोरपि गोब्राह्मणयोर्हनने दोषप्रतिपादनाद्विरोधमुद्भाव्य,—

अत्र व्यवस्थामाह कात्यायन इत्युपक्रम्य,—

आततायिनि चोत्कृष्टे तपः-स्वाध्याय-जन्मतः ।
वधस्तत्र तु नैव स्यात् पापे हीने वधो भृगुः ॥

इति वचनमित्थं व्याख्यातवान् जन्मपदेन जातिः कुलञ्चोच्यते तेनाधमवर्णेनाततताय्यप्युत्तमवर्णो न हन्तव्यः । समवर्णेनापि तपोविद्याकुलैरुत्कृष्टो[1] न वध्यः ।

अत एव भगवद्गीतायामुक्तम् ।

पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः । इति

एतान् भीष्मादीनत्यन्तोत्कृष्टगुणानित्यर्थ इत्याह ।

हलायुधेनापि कात्यायनवचनानुसारेणैव व्यवस्थोक्ता ।

अत्र प्रतिभाति,—आत्मगोपनश्रुतिमूलमाततायिवधाभ्यनुज्ञावचनं आत्मघातनिषेधस्मृत्या सममेकमूलकत्वे लाघवात् न चेह तद्वक्तुं[2] युक्तं आत्मानं गोपायीत न पुनरमर्षादिकषायितोऽनशनादिना वा विषभक्षणादिना वा हन्यादिति तदर्थात् ।

असूर्य्या नाम ते लोका अन्धेन तमसा वृताः ।
तांस्ते प्रत्यभिगच्छन्ति ये के चात्महनो जनाः ॥

इति श्रुत्या सममेकवाक्यत्वे लाघवात् । अन्यथा भोज्यान्तराभावे महामांसादिभक्षणेनाप्यात्मा रक्षणीयः स्यात् तदर्थं ब्राह्मणसुवर्णहरणमपि कर्त्तव्यं स्यात् ।

न चेदं युक्तमेकत्र विधावपरविध्यविरोधस्यानुरोध्यत्वात् विधिनिषेधयोर्व्वैधयोरेकतरेण स्पृष्टेऽन्यतरानवकाशात् ।

१ घ त्वतिरिक्ता— ।   २ घ वधत्वं ।

किञ्चैवं चौर्य्याधिकारे ब्राह्मणमुपक्रम्य—

अवृत्तौ प्रायश्चित्ती सः ।

इति दण्डवाधप्रकरणव्याख्यातगोतमवचने प्रायश्चित्तोपदेशो विरुध्येत ।

यत्तु नारायणीयं मतमङ्गच्छेदादिरूपं हननं मनुवचनार्थो न त्वात्यन्तिकमिति तच्चिन्त्यम् ।

अङ्गच्छेदादिनाप्यात्मरक्षणानुपपत्तौ विध्यतिक्रमतादवस्थ्यात् । अन्यायश्चायं यदात्मरक्षणार्थं ब्राह्मणस्य वध इति ब्रह्मवधे कामकृते प्रायश्चित्तस्य प्राणान्तिकत्वात् ।

'अनशनेन कर्षितोऽग्निमारोहेत्' ।

इति काठकश्रुतिदर्शनात् ।

द्वादशवार्षिकमुक्त्वा—एतदेव व्रतमोत्तमामुच्छ्वासाच्चरेत् ।

इत्यापस्तम्बादिस्मरणाच्च ।

तस्मादलमनेन ।

प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ।

इति न्यायात् ।

अपि च परेणापि युक्तः सर्व्वात्मना राष्ट्रं गोपयेत् 'सर्व्वत आत्मानं गोपयेत्,' इति विष्णुवचनादात्मरक्षणवत् प्रजानां रक्षणं विहितम् । एवं शरणागतानाम् । अतस्तदर्थमपि ब्राह्मणो हन्तव्यः स्यात् प्रजादिरक्षणविधेरवश्यानुरोधात्[1] ।

अथ यथा 'दैक्षं पशुमालभेत' इति श्रुतेः ।

---

१ घ अनुरोध्यत्वात् ।

'न हिंस्यात् सर्व्वा भूतानि' इतिश्रुत्या न वाधः। उत्सर्गापवादन्यायेन सामञ्जस्यात्।

एवमिहापि।

'आततायिनमायान्तं हन्यात्' इति स्मृतेर्न हन्याद् ब्राह्मणान् गांश्चेति स्मृतेर्वाधाभावाददोषो ब्राह्मणस्याततायिनो वध इति चेन्न आचार्य्यञ्चेत्यादिमनुवचनानुपपत्तेः। अथ,—सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे।

आचार्य्ये शतसाहस्रं सोदर्य्ये दत्तमक्षयम्॥
समद्विगुणसाहस्रमानन्त्यञ्च यथाक्रमम्।
दाने फलविशेषः स्याद्धिंसायां तद्वदेव हि॥

इति दक्षवचनसंवादात् पापातिशयपरं मनुवचनमिति चेत्, अस्तु तर्हि ब्राह्मणव्यतिरिक्तविषयमाततायिवधाभ्यनुज्ञावचनं तावतैव सर्व्वसामञ्जस्यं स्यात्।

आततायिन्यपि ब्राह्मणे कामतो हते पूर्णं पापमाचार्य्यादौ तस्यातिशयः क्षत्रियादौ तदनुपपत्तिरिति।

वस्तुतस्तु क्षत्रियादिवधेऽपि दण्डाभावमात्रं ध्रुवं 'प्राणात्यये तु यत्र स्यात्'। इत्यादिदण्डवाधप्रकरणोक्तकात्यायनवचनसंवादात्। पापन्तु स्तोकमस्त्येव।

आचार्य्याः पितरः पुत्रास्तथैव च पितामहाः।
मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा॥
एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन।
पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः॥

इति भगवद्गीतादर्शनात्।

अत एवाततायिनमपि रावणं हत्वा रामस्य प्रायश्चित्ता-

चरणं घटते। अत एवोद्यतासिमपि ब्राह्मणमश्वत्थामानं भ्रातरञ्च कर्णं हत्वा तत्पापपनोदनाय युधिष्ठिरस्याश्वमेधयजनमुपपद्यते ।

अत एव पापशङ्कया विरतयुद्धं[1] वीभत्सुं प्रवर्त्तयतापि भगवता आततायिवधाभ्यनुज्ञानं न दर्शितमपि तत्तदभिप्रेतं शरीरमनःसंयोगविशेषनाशरूपं मरणविशेषेण नाशमात्रतयाऽपि परिगृह्यात्मानं सञ्चार्य्य तस्य नित्यत्वादवध्यत्वेन तत्र तदसम्भवं प्रतिपादयितुमलौकिकमपि सांख्यमतमवतारितम् ।

तथाच विचिकित्सन्तमुपलभ्य,[2]—

अपि चेदसि पापेभ्यः सर्व्वेभ्यः पापकृत्तमः ।
सर्व्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यति ॥

इति गत्यन्तरं दर्शितम्। तदर्थञ्चाशक्यानुष्ठानमपि योगतन्त्रमुपन्यस्तम्। अत एव युधिष्ठिरेण गोत्रवधपापापनोदनाय पृष्टो व्यासोऽपि भगवानभ्यनुज्ञानमनाहृत्याश्वमेधमेवोपदिष्टवानिति दिक् ।

एवञ्च मन्वादिवचनानां ब्राह्मणेतरपरत्वे स्थिते "हत्वा तं प्रहरन्त" मित्यादिभविष्यपुराणवचनमपि तथैव नेयमेकमूलकत्वेन लाघवात्। यथाव्याख्यातपरत्वे दण्डगौरवानुपपत्तेः, अस्मिन्नेवार्थे सुमन्तसूत्रमपि संवदति।

अथ नैकमिदं सूत्रं येन तदुक्तसंवादः स्यादपि तु सूत्रत्रयमिदमित्याह भवदेवभट्टः।

---

१ ङ—युद्धविमुखं ।  २ घ पुस्तके उपालभ्य ।

तथाहि ब्रह्मवधप्रायश्चित्तमुक्त्वा यस्तैः सह सम्बन्धं कुर्य्यात्तस्याप्येवमेव प्रायश्चित्तमित्यभिधाय आततायिवधेऽप्येकं सूत्रं पूर्व्वोक्तप्रायश्चित्तनिषेधकं सुमन्तुनोक्तं, दोषोऽन्यत्रेति द्वितीयमाततायिव्यतिरिक्तवधे दोषप्रतिपादकम्। गोब्राह्मणान् घ्नतः प्रायश्चित्तं कुर्य्यादिति तृतीयं प्रायश्चित्ताङ्गस्य प्रतिपादकम्।

तच्च गोस्नानं गोशृङ्गोदकस्नानम्,—

श्रूयन्ते यानि तीर्थाणि त्रिषु लोकेषु नित्यशः।
अभिषेकः समस्तेषां गवां शृङ्गोदकस्य च॥

इति व्यासोक्तम्। ब्राह्मणपदस्य विधिवाक्ये परत्वात्तद्धेतुकमघमर्षणस्नानमिति चेन्नैवं सूत्रावच्छेदभेदकल्पनाया मिताक्षरादिविरोधेनाश्रद्धेयत्वात्।

अपि च ब्रह्मवधिनः प्रायश्चित्तमुपदिश्य तत्संसर्गिणि तदतिदिश्य तदपवादकं प्रथमं सूत्रमिति त्वयैवोक्तमेवञ्चाततायिघातिनो यः संसर्गी तस्येदं नास्तीति सूत्रार्थो वाच्यः।

न चायं सुवचो[1] वधशब्दस्य वधकर्त्तृसंसर्गिणि सामर्थ्याभावात्। किञ्च यद्याततायिवधे दोषो नास्ति तदा तत्संसर्गिणि सुतरामतः कथं तत्प्रायश्चित्तातिदेशः कथं वा तदपवादो घटते प्रसक्त्यभावात्।

वस्तुतस्तु वधशब्दो नास्त्येव सूत्रे, आततायिन्यदोष इति कल्पतरौ पाठदर्शनात्। द्वितीयञ्च सूत्रं यद्यात-

१ क घ पुस्तके अवचः।

तायिघातिव्यतिरिक्तसंसर्गे ब्रह्मवधप्रायश्चित्तप्रतिपादकं तदापूर्व्वक[1] एव दोषः, दोषशब्दस्य प्रायश्चित्ते शक्त्यभावात् सूत्रवैयर्थ्यञ्च स्यात्। निरपवादादतिदेशवाक्यादेव प्रायश्चित्तप्राप्तेः ।

यदि तु वधदोषविधायकं तदित्युच्यते तदा प्रकरणविरोधः सूत्रवैयर्थ्यञ्च अपवादकाभावेन वधव्यवस्थयैव तत्प्रतिपादनात्। तृतीयेऽपि सूत्रे गोशब्दस्य गोशृङ्गोदकपरत्वे लक्षणाभ्युपगमः। ब्राह्मणादिति तृतीयार्थे पञ्चमीप्रयोगपरिकल्पने च प्रकरणातिपातः स्यात् प्रायश्चित्तोपदेशावसर एव तदङ्गोपदेशौचित्यात् ।

वस्तुतः कथम्। सुमतिः सुमन्तुरल्पाक्षरमसन्दिग्धमित्यादिलक्षणवाक्यं विस्मृत्य तादृशं सूत्रं प्रणयेद् यत्र विवक्षितो यः सन्दिह्यते प्रत्युताविवक्षितः स्फुटतरमवभासते, तस्मादेकमेवेदं सूत्रं गोब्राह्मणातिरिक्तस्याततायिनो वधे दोषाभावप्रतिपादकमित्युपेयम् ।

मन्वादिवचनैः सममेकमूलकत्वकल्पने लाघवात् बौधायनवचनसंवादाच्च ।

कल्पतरौ राजधर्म्मकाण्डे तद् यथा,—

भीत-मत्तोन्मत्त-विसन्नाह-स्त्रि-बाल-वृद्ध-ब्राह्मणैर्न युध्येतान्यत्राततायिनः। न दोषो हिंसायामन्यत्र [2]व्यङ्गसारथ्यनायुधाञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टमूलवृक्षारूढाहतकगोब्राह्मणादिभ्यः ।

---

१ तथा— ।    २ ख पुस्तके व्यग्र— ।

अत्र हि पूर्व्वप्रतीके ब्राह्मणाततायिना युद्धमात्रमनुज्ञातं तच्च तन्निवारणमात्राभिप्रायमुत्तरप्रतीके युद्धप्रसञ्जितां हिंसामाशङ्क्य तस्याः प्रतिषेधात् ।

अत एव प्रायश्चित्तकाण्डे ब्राह्मणादीनां गवादीनाञ्चाततायिनां वधाभ्यनुज्ञावचनानि दर्शयित्वा सुमन्तुवचनं लिखित्वा लक्ष्मीधरेण तेषां गोब्राह्मणेतरपरत्वं स्पष्टमुक्तम् ।

एतद्वचनसमनन्तरमाततायिनि चोत्कृष्ट इत्यादिकात्यायनवचनमप्यनेन लिखितमिति चेत् ।

एवमपि हि शूलपाणिव्यवस्था स्यान्न तदभिमतः [1]सर्व्वत्र दोषाभावः ।

तस्मादाततायिनोऽपि ब्राह्मणादेर्वधे पापं स्यादेव दण्डस्तु नास्ति कात्यायनवचनान्तरस्यार्थशास्त्रत्वेन तदपवादकत्वात् न च दण्डाभावे पापाभावनियमो वेश्याभिगमनादौ तदभावस्मरणेऽपि प्रायश्चित्तोपदेशात् ।

तदियमत्र व्यवस्था यदि निर्गुणं शूद्रं केनचिन्निमित्तेन कषायितो ब्राह्मणः प्रथमप्यभिहन्ति तदा तस्य दण्डाभावो वाक्पारुष्यप्रकरणप्रपञ्चितान्न वेत्यादिहारीतवचनात् ।

निर्गुणमपि शूद्रमब्राह्मणोऽमुं कश्चिदन्यं यः कश्चिदन्यो वा यदि प्रथमं प्रहरति यस्य निरपवादो यथोक्तदण्डो नियतमिति नारदवचनात् ।

यस्तु तेन ताडितः सहते स वाचा पूज्यः सामान्यतो यः क्षमते इति पूर्व्वप्रकरणोक्तनारदवचनात् ।

---

१ घ सर्वथा ।

यस्तु सोढुमशक्नुवन् समे न्यूने प्रहर्त्तरि प्रहारानुरूपमनुबन्धेन प्रहरति तस्य दण्डाभावो बृहस्पतिवचनात् ।

गुणजात्यादिनाऽधिके तु प्रहर्त्तरि हीनस्य श्वपचादेः प्रहारानुरूपमपि सकृदपि प्रहरतो दण्ड एव क्षमायां प्राप्तायां प्रहारमात्रस्यैवानौचित्यात् ।

न हि कश्चिदनुन्मत्तोऽपराधं विनैव परं प्रहरति, अतो हीनस्य प्राक्तनो वाक्पारुष्यादिरपराधो वाच्यः । तच्च चाधिकस्यायथापराधमपि प्रत्यपराध्यतो न दोषः । वाक्पारुष्येत्यादि पूर्व्वप्रकरणोक्तबृहस्पतिवचनस्वरसात् ।

एवं ब्राह्मणेऽप्रहर्त्तरि निर्गुणस्य शूद्रस्यापि दण्डो द्रष्टव्यः । यः पुनरपराधतारतम्यानुसरणोदासीनः प्रहरन्नपि प्रहारमननुबन्धेन प्रवर्त्तयति अनुबध्नन्नप्यधिकं वा प्रहरति तस्य यथोक्तादल्पो दण्डः पूर्व्वे तु विनयो गुरुरिति नारदवचनस्वरसात् ।

यस्तु प्रहर्त्तारं प्रहृत्य[१] तस्मिन् तुष्णीं तिष्ठति अनुरूपं प्रतिकृत्य विवदते वा पुनः कलहमनुवर्त्तयति यो वा प्रतिप्रहर्त्ता प्रहर्त्तरि यथोक्तं प्रहारं प्राप्य विरते तथा करोति एतयोर्यथोक्तादधिको दण्डः ।

"पूर्व्वो वा यदि वोत्तरः" ।

इत्यादि नारदवचनात् ।

एवं यो भस्मादिप्रहर्त्तरि खड्गादिना प्रहरति सोऽप्यधिकमेव दण्ड्यः कात्यायनवचनात्, अभिघाताभिद्रोहयोरुत्तरत्रापराधाधिक्याच्च ।

---

१ प्रहर्त्ता परं प्रहृत्य ।

यत्र तु प्रहारयोः पूर्व्वापरभावपरिच्छेदो नास्ति यत्र वाऽपराधसाम्यं तत्र तु द्वयोरपि यथोक्तो दण्डः कात्यायन-वचनस्वरसात्। आततायिवधे च दण्डाभाव एव बृहस्पति-वचनादिति ।

इयञ्च व्यवस्था वाक्पारुष्येऽपि सञ्चारणीया न्यायसाम्यात्। वाग्दण्डपारुष्याधिकारे विधिः पञ्चविध-स्तूक्त एव—एतयोरुभयोरपीत्युपक्रम्य निरुक्तप्रकाराणां नारदेनोपन्यासात् बृहस्पतिवचनयोरुभयोर्विषयतायाः स्फुटत्वाच्च ।

---

# अथ बहूनामेकं प्रहरतां दण्डमाह ।

याज्ञवल्क्यः,—

एकं घ्नतां बहूनाञ्च यथोक्ताद्द्विगुणो दमः ।

द्विगुणः प्रत्येकमिति शेषः ।

एकं बहूनां निघ्नतां प्रत्येकस्योक्तदण्डाद् द्विगुणः ।

इति विष्णुसंवादात् ।

अथ यत्र हीनः पारुष्यकारी तत्रोत्तमस्य ताडनादिना तं दण्डयतोऽपि न दण्ड इत्यादिका वाचनिकी व्यवस्था च हीनपरिगणनञ्च द्वयमपि वाक्पारुष्यप्रकरणे दर्शित-मतस्तत्रैवानुसन्धेयम् ।

इति विविक्ता दण्डपारुष्यदण्डमातृका ।

---

# अथ प्रहरणोद्यमनदण्डः ।

अत्र बृहस्पतिः,—

उद्यतेऽश्मशिलाकाष्ठैः कर्त्तव्यः प्रथमो दमः ।

याज्ञवल्क्यः,—

उद्गूर्णे हस्तपादे तु दश-विंशतिकौ दमौ ।
परस्परस्य सर्व्वेषां शस्त्रे मध्यमसाहसम् ॥

सर्व्वेषां ब्राह्मणादीनां वर्णानां परस्परं वधार्थमिति-शेषः। शस्त्रे उद्गूर्णे इत्यनुषङ्गः। एतद्वचनद्वयं समान-जातिं प्रति प्रहारोद्यमे ।

दण्ड इत्यनुवृत्तौ विष्णुः,—

"हस्तेनोद्गूरयित्वा तु दश कार्षापणान्, पादेन विंशतिं, काष्ठेन प्रथमसाहसं, शस्त्रेणोत्तमम्"।

उत्तममुत्तमसाहसमित्यर्थः। कृत्यसागर स्मृतिसागरयो-रुत्तमसाहसमित्येव पठितम् ।

याज्ञवल्क्यः,—

विप्रपीडाकरं छेद्यमङ्गमब्राह्मणस्य तु ।
उद्गूर्णे प्रथमो दण्डः संस्पर्शे तु तदर्द्धकः[१] ॥

उद्गूर्णे शस्त्रादेरुद्यमने वधार्थमुल्लासन इति यावत् । संस्पर्शे उद्यमनार्थं तस्यैव ग्रहणे ।

इदमुभयमधमेनोत्तमं प्रति हस्ताद्युद्यमने। अत्रोद्यमने शूद्रस्य हस्तादिछेदनमेव वक्ष्यमाणमनुदर्शनादिति मिताक्षराकारः ।

१ घ पुस्तके तदर्द्धिकः ।

यथानुवृत्तौ शङ्खलिखितौ,—

प्रहारोद्यमे षट्पञ्चाशत् निपातने तद्द्विगुणम्।

प्रह्रियतेऽनेनेति प्रहारोऽश्मदण्डादिः, षट्पञ्चाशत् षडधिकपञ्चाशत्, इदमुत्तमवर्णेनाधमवर्णस्य दण्डपारुष्योद्यमे।

---

# अथ प्रहरणादण्डः।

तत्र भस्मादिप्रक्षेपे बृहस्पतिः,—

भस्मादीनां प्रक्षेपणं ताडनञ्च करादिना।
प्रथमं दण्डपारुष्यं दण्डः कर्षोऽत्र माषिकः॥
एष दण्डः समे युक्तः परस्त्रीष्वधिकेषु च।
द्विगुणस्त्रिगुणो ज्ञेयः प्राधान्यापेक्षया बुधैः॥

ताडनमत्रोद्यमनमात्रमिति ग्रहेश्वरमिश्राः। एवमेव हरिनाथोपाध्यायाः। एवं व्याख्याने कामं प्रथममिति घटते दण्डगौरवन्तु दुर्घटम्।

उद्गूरणात्तु हस्तस्य कार्य्यो द्वादशको दमः।
स एव द्विगुणः प्रोक्तः पातनेषु सजातिषु॥

इति कात्यायनविरोधात्।

तस्मात् प्रहरणमेव ताडनपदार्थः प्रत्युत ताडनञ्चेति चकारः समुच्चयार्थः। न्यूनश्च ताडयिता। प्रथममित्यस्य

तु मुख्यमिदं पारुष्यमित्यर्थ इति भाति। माषिको माष-परिमित इति रत्नाकरः, समेषु जात्यादिभिस्तुल्येषु।

याज्ञवल्क्यः,—

भस्मपङ्करजःस्पर्शे दण्डो दशपणः स्मृतः।
[1]अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणस्ततः॥
समेष्वेवं परस्त्रीषु द्विगुणस्तूत्तमेषु च।
हीनेष्वर्द्धं दमो मोहमदादिभिरदण्डनम्॥

अमेध्यमत्र अश्रु-श्लेष्म-नख-केश-कर्णविट-दूषिका-भक्तोच्छिष्टादिरूपम्। पार्ष्णिश्चरणस्य पश्चिमो भागः, चरण एवास्य तात्पर्य्यमित्येके। निष्ठ्यूतं मुखनिःसारितं जलं तैः स्पर्शने, ततो दशपणात् द्विगुणो विंशतिपणो दण्डः। अत्र पुरीषादिस्पर्शने विशेषं वक्ष्यति कात्यायनः।

एवञ्च वचनस्याधःस्पर्शविषयत्वेन कायमध्यमूर्द्धस्पर्शने गुणाधिक्यं द्रष्टव्यं कात्यायनानुसारात्, परस्त्रीषूत्तमेषु च भस्मादिस्पर्शे विंशतिपणा अमेध्यादिस्पर्शे चत्वारिंशत्पणा दण्डः।

हीनेष्वपकृष्टेष्वर्द्धं भस्मादिस्पर्शे पञ्च, अमेध्यादिस्पर्शे दशपणा इत्यर्थः। मोहश्चित्तवैकल्यं, मदो मद्यादिजनिता विकृतावस्था, आदिपदादुन्मादादिसंग्रहः।

बृहस्पतिवाक्ये भस्मादिभिः प्रहारो विवक्षित इति। तत्र दण्डगौरवमिह तु तेषां स्पर्शनमात्रमिति दण्ड-लाघवमतो न विरोध इति प्रतिभाति। एतन्मात्रस्पर्शे याज्ञवल्क्य इति स्मृतिसारेऽवतारणिकादर्शनात् स्पष्टम्।

१ ख ग पुस्तकद्वये अमेध्ये।

छर्द्यादिप्रक्षेपे कात्यायनः,—

छर्द्दिमूत्रपुरीषाद्यैरापाद्यः स चतुर्गुणः।
षड्गुणः कायमध्ये तु[1] मूर्द्ध्नि चाष्टगुणः स्मृतः॥

आदिपदाद्वसाशुक्रमज्जासृजां संग्रहः। चतुर्गुणत्वादिकं दशपणापेक्षं तेन कायमध्यशिरोव्यतिरिक्ताङ्गस्पर्शने चत्वारिंशत्पणाः, कायमध्यस्पर्शे षष्टिः, शिरःस्पर्शेऽशीतिः पणा इत्यर्थः।

मनुनारदौ,—

अवनिष्ठीवतो दर्पाद् द्वावोष्ठौ छेदयेन्नृपः।
अवमूत्रयतो मेढ्रमवशब्दयतो गुदम्॥

अवनिष्ठीवत उपरि निष्ठीवनं कुर्व्वतः। अवमूत्रयतो मूत्रसेकं कुर्व्वतः। अवशब्दयतो गुदेन शब्दं कुर्व्वतः।

कुल्लूकभट्टेनावगर्द्दयत इति पठित्वा गर्द्दनं गुदशब्दस्तेनावमानयत इति व्याख्यातं तत्र फलतो न विशेषः। दर्पादिति प्रमादमदमोहादिव्यावृत्त्यर्थम्।

अत्र कुल्लूकभट्टेन पूर्व्वश्लोकं दृष्ट्वा शूद्रस्येत्यनुवर्त्तितम्। सर्व्वज्ञेन तु सर्व्वमिदमुक्तमधमेन क्रियमाणे द्रष्टव्यमित्युक्तम्।

अथ याज्ञवल्क्यः,—

पादकेशांशुककरोल्लुञ्चनेषु[2] पणान् दश।
पीडाकर्षांशुकावेष्टपादन्यासे[3] शतं दमः॥

---

१ स्यादिति क्वचित् पाठः। २ ख—करोल्लुञ्छनेषु।
३ घ पादाध्यासे।

पीडाकर्षश्चांशुकावेष्टपदाध्यासश्चेति समाहारे द्वन्द्व इति रत्नाकरः। अस्मिन् समुच्चितेऽयं दण्ड इति मिताक्षराकारः।

कामधेनौ तु पीडाकर्षांशुकावेष्टेऽति पठितं तत्र पीडायै यस्याकर्षस्तेनांशुकेनेत्यर्थः। अंशुकार्थ्यं तत्रोपचारेण तद्व्यपदेशात् पादादीनामन्यतमं गृहीत्वा उन्मुच्चत्याकर्षत्यसौ दशपणान् दण्ड्यः। यस्त्वंशुकेनावेष्ट्य गाढमापीड्याकृष्य पादेन परमध्यास्ते तस्य शतपणदण्ड इति समुदायार्थः।

मनुनारदौ,—

केशेषु गृह्णतो हस्तौ छेदयेदविचारयन्।
पादयोर्दाढिकायाञ्च ग्रीवायां वृषणेषु च॥

अत्र कुल्लूकभट्टेन पूर्व्वश्लोकस्थं दर्पादित्यनुवर्त्तितम्। हस्ताविति द्विवचनमेकेनापि हस्तेन ग्रहणे हस्तद्वयच्छेदनार्थं, दाढिका श्मश्रु।

हारीतः,—

अधोवर्णस्योत्तमवर्णानामाक्रोशाक्षेपाभिभवेऽष्टौ पुराणाः। ग्रीवासञ्जन-गलहस्तन-कचवक्त्रप्रहरणेषु त्रिंशत्। रोमोत्पाटनतर्ज्जनावगूरणेषु त्रिषष्टिः। शिखाकर्णाङ्गभङ्गच्छेदेषु द्विशतम्। पादताडने ऽनृताभिशंसने तदङ्गच्छेदः पञ्चशतं वा। आद्येषु पादोनं किञ्चित् स्वामित्वादादिवर्णत्वाच्चोत्तमानामीशानतमो हि ब्राह्मणः।

त्रिंशदित्यादौ पुराणा इत्यनुषङ्गः। व्याख्याशेषो वाक्पारुष्ये द्रष्टव्यः। अङ्गपदमत्र पाणिपादादिपरमिति शेषः।

मनुः,—

येन केनचिदङ्गेन हिंस्याच्छ्रेयांसमन्त्यजः।
छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम्॥
पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति।
[1]पादेन प्रहरन् कोपात् पादच्छेदनमर्हति॥

हिंस्यात् प्रहरेत्, श्रेयासं त्रैवर्णिकम्, अन्त्यजः शूद्रः।

विष्णुः,—

न मातापितरावतिक्रामेन्न गुरुम्। त्रयाणामतिक्रमेऽङ्गच्छेदः।

अतिक्रमः पदाभिघातः इति रत्नाकरः। एवञ्च छेदः पादस्यैव अभिघातकरणत्वात्।

पञ्चाशत्पणदण्डप्रकरणे याज्ञवल्क्यः,—

अर्घ्याक्रोशातिक्रमकृत् भ्रातृभार्य्याप्रहारदः।

अथ बृहस्पतिः,—

कार्य्यः क्षतानुरूपन्तु लग्ने घाते दमो बुधैः।

तत्रेष्टकादिप्रहारमधिकृत्याह स एव,—

इष्टकोपलकाष्ठैस्तु ताडने च द्विमाषिकः।
द्विगुणः शोणितोद्भेदे दण्डः कार्य्यो मनीषिभिः॥

शस्त्रकरणकप्रहारे विष्णुः,—

दण्ड्यः शोणितेन विना दुःखमुत्पादयिता द्वात्रिंशत्पणान् सह शोणितेन चतुःषष्टिम्।

---

१ ख घ पुस्तके पादेनेत्यादि पङ्क्तिर्नास्ति।

अत्रैव त्वग्भेदशोणिताधिक्ये मनुः,—

त्वग्भेदकः शतं दण्ड्यो लोहितस्य प्रदर्शकः।
मांसभेत्ता तु षण्णिष्कान् प्रवास्यस्त्वस्थिभेदकः॥

निष्कोऽत्र राजतो विशेषणाभावात् आनुरूप्याच्च। षण्णिष्कान् दीनारानिति नारायणः। एतद्वचनं समान-जातिविषयं शूद्रेतरविषयञ्चेति कुल्लूकभट्टः। प्रवास्यो गृहीतसर्व्वस्वो देशान्निर्व्वास्य इति सर्व्वज्ञः।

बृहस्पतिः,—

त्वग्भेदे प्रथमो दण्डो मांसभेदे तु मध्यमः।
उत्तमस्त्वस्थिभङ्गे तु घातने[1] तु प्रमापणम्॥
कर्णनासाकरच्छेदे दन्तभङ्गेऽस्थिभेदने।
कर्त्तव्यो मध्यमो दण्डो द्विगुणः पतितेषु तु॥

घातने वधे, प्रमापणं वध एवेति रत्नाकरः। यथा यत्र भाति तथोक्तमधस्तात् पतितेषु स्वस्थानाच्च्यावितेषु।

कात्यायनः,—

कर्णौष्ठ-घ्राणपादाक्षिजिह्वाशिश्नकरस्य तु।
छेदने चोत्तमो दण्डो भेदने मध्यमो भृगुः॥

छेदने स्वस्थानाच्च्यावने भेदने विदारणे।

तथा,—

एतैः समापराधानां तत्राप्येवं विकल्पयेत्।

समापराधानामङ्गान्तरछेदनभेदनकर्तॄणां प्रमाद-कृतापराधविषयमिति रत्नाकरः।

---

१ मूले—भेदे तु घातेन तु।

याज्ञवल्क्यः,—

करपाददन्तभङ्गे छेदने कर्णनासयोः।
मध्यो दण्डो व्रणोद्भेदे मृतकल्पे हते तथा॥
चेष्टाभोजनवाग्रोधे नेत्रादिप्रविभेदने।
कन्धराबाहुसक्थ्नाञ्च[1] भङ्गे मध्यमसाहसः॥

व्रणोद्भेदे प्ररूढायमानस्य व्रणस्य पुनर्नवीकरणे। मृतकल्पे हते मृतप्रायो यथा भवति तथा हते।

याज्ञवल्क्यः,—

द्विनेत्रभेदिनश्चैव शूद्रस्याष्टशतो दमः।

यत्र चिकित्सापनेयो भेदस्तद्विषयमिदम्। अष्टशतोऽष्टशतपणरूप इति रत्नाकरः।

विष्णुः,—

करपाददन्तभङ्गे कर्णनासावकर्त्तने मध्यमञ्चेष्टाभोजनवाग्रोधे प्रहारदाने नेत्र-कन्धरा-सक्थ्नाञ्च भङ्गे चोत्तमम्। उभयनेत्रभञ्जनं[2] राजा यावज्जीवं वन्धनात् न मुञ्चेत् तादृशमेव वा कुर्य्यात्।

प्रहारदाने च नेत्रकन्धरासक्थ्नामिति चकारो मध्यममित्यस्यानुप्रकर्षकः। भङ्गे चेति नेत्रादीनामित्यन्वयः।

इह पूर्व्वोत्तरवाक्ययोरन्यत्र चैकस्मिन् विषये नानाविधशारीरार्थदण्डविकल्पाः पीडाभूयस्त्वाभूयस्त्वाभ्यामाक्षेप्तुर्धनवत्त्वाधनवत्त्वाभ्यां वा व्यवस्थाप्याः।

ये चार्थदण्डाः शारीरदण्डेन विकल्पिताः तेषामाक्षेपकस्याढ्यत्वानाढ्यत्वाभ्यां व्यवस्थेति रत्नाकरः।

---

१ मूले—सक्थ्यङ्घ्रि—    २ मूले—भेदिनम्।

आह च मनुः,—

मनुष्याणां पशूनाञ्च दुःखाय प्रहृते सति ।
यथा यथा महद्दुःखं दण्डं कुर्य्यात्तथा तथा ॥

अत्र दुःखायेत्यभिसन्धिपूर्व्वकत्वावगमात् प्रमादकृते न च दोषः ।

अथ नारदः,—

[1]राजनि प्रहरेद्यस्तु कृतागस्यपि दुर्म्मतिः ।
शूल्यं तमग्नौ विपचेद्ब्रह्महत्याशतातिगम् ॥

यो अब्राह्मणः कृतागसि कृतापराधे शूलमारोप्य यत्-संह्रियते मांसादि तच्छूल्यम्। तेन राजप्रहारिणः शूल-भेदेन पीडां विधायाग्निपाकेन पीडा कर्त्तव्येत्यर्थः ।

इति महामहोपाध्याय धर्म्माधिकरणिक-श्रीवर्द्धमानकृतौ दण्डविवेके दण्डपारुष्यदण्डपरिच्छेदः षष्ठः ।

---

१ क ख ग पुस्तकत्रये राजानं ।

# अथ प्रकीर्णदण्डः ।

तत्र संग्रहः,—

उद्दिष्टाः केचिदृषिभिर्व्विभजद्भिः प्रकीर्णकम् ।
प्रक्रम्य साहसं केचिदुक्तास्तैरेवमुक्तकाः ॥
विवादविषये क्वापि व्यवहारपदे क्वचित् ।
प्रसङ्गेनोपदिष्टास्तैः केचिदेवञ्चतुर्व्विधाः ॥
तेऽमी चतुर्षु शेषेषु[1] वर्गेषु परिनिष्ठिताः ।
प्रथमे तद्व्यवस्थेति पञ्चवर्गाः प्रकीर्णके ॥

सोऽयं विभागः प्रतिपत्तिवैषम्यार्थमुत्सर्ग[2]माश्रित्य कृत इति द्विचाणां सङ्करेऽपि न दोषः ।

विवादविषयश्चात्र ऋणादानादिर्द्यूतसमाह्वयान्तोऽष्टादशविधो मनूक्तो विवक्षितः । तेन निबन्धेषु—तत्समभिव्याहृतस्यापि तत्शुल्कादेर्बहिर्भावः प्रथमे च वर्गे तस्य प्रवेशः कात्यायनादिभिस्तत्राद्देशात्तदन्तर्गतस्यापि स्तेयादेस्तद्वहिर्भावः प्रकीर्णलक्षणाभावादेव ।

तत्र बृहस्पतिः,—

एष वादिकृतः प्रोक्तो व्यवहारः समासतः ।
नृपाश्रयं प्रवक्ष्यामि व्यवहारं प्रकीर्णकम् ॥

यद्यपि मनुष्यमारणादिव्यवहारा अपि नृपाश्रिता एव तथापि तेषु वादिप्रतिवादिभ्यां स्व-स्व-पक्षेषु दर्शितेषु विचार्य्य तयोरेकतरस्यापराधिनो राजानुशासनम्[3] ।

---

१ क चतुर्व्वर्ग्शेषेषु । २ क उत्सर्गमात्रम् ।
३ क राज्ञोऽनुशासनम् ।

प्रकीर्णके तु शिरोवादिनं विनाऽपि चरादिमु[१]खाद्वर्णाश्रमिणां दोषं श्रुत्वा विचार्य्य तेषां यथाविहितं दण्डं विधाय धर्म्म्ये पथि स्थापनमित्येवास्य तेभ्यो भेदः ।

नारदः,—

यो यो वर्णोऽवहीयेत यश्चोद्रेकमनुव्रजेत् ।
तं तं दृष्ट्वा स्वतो मार्गात् प्रच्युतं स्थापयेत् पथि ॥

मनुः,—

यश्चापि धर्म्मसमयात् प्रच्युतो धर्म्मजीवनः ।
दण्डेनैव तमाप्लोषेत् स्वकाद् धर्म्माद्विधिच्युतम् ॥

समयः शास्त्रीयमर्य्यादा धर्म्मजीवनो ब्राह्मणादिः। आप्लोषेत् दहेत् पीडयेदिति यावत्। विधिच्युतं वेदमार्गातिक्रान्तम् ।

एवञ्च विहितपरित्यागो निषिद्धाचरणमिति द्वयमपि दण्डनिमित्तं तच बृहस्पतिः,—

विहिताकरणान्नित्यं प्रतिषिद्धनिषेवणात् ।
भक्ताच्छादं प्रदायैषां शेषं गृह्णीत पार्थिवः ॥

विहितस्य वर्णाश्रमकर्म्मणोऽसकृत्प्रमादादिव्यतिरेकेणाननुष्ठानात् प्रतिषिद्धस्याभक्ष्यभक्षणादेर्नित्यमनुष्ठानादिति पारिजातः। एतद्देशाचारव्यतिरिक्तविषयमिति कल्पतरुः।

आपस्तम्बः,—

नियमातिक्रमिणं ब्राह्मणमन्यं वा रहसि बन्धयेदासमापत्तेरसमापत्तौ[२] नाश्यः ।

---

१ क वादिमुखात् । २ ख त्वसमापत्तौ ।

नियमातिक्रमिणं नियमस्य शास्त्रस्यातिक्रमेण विहितस्याकर्त्तारम्। अन्यं निषिद्धकारिणमिति कल्पतरुः। आसमापत्तेर्यावदेवं करिष्यामि नैवं करिष्यामि इति वा तस्य सम्प्रतिपत्तिर्भवति असमापत्तावतथासम्प्रतिपत्तौ नाश्यो निर्व्वास्यः। एतदनुबन्धातिशयविषयं ब्राह्मणविषयञ्च ।

अब्राह्मणविषये मनुः,—

मर्य्यादाभेदकश्चैव विचित्रं प्राप्नुयाद्वधम् ।

मर्य्यादा देशजातिकुलशास्त्रराजलोकस्थितिः, तस्या भेदकोऽतिक्रमकारी मर्य्यादातिक्रमे सद्योघात एवानुशासनमिति नारदसंवादात् ।

इह रत्नाकरकृता मनुवाक्ये विकृतं[१] वधं कर्णादिच्छेदनरूपं घातमिति व्याख्यातम् ।

अबीजविक्रयी यस्तु बीजोत्कृष्टा तथैव च ।

इति पूर्व्वार्द्धसमभिव्याहारसंवादात् नारदवचने घातस्ताडनमिति व्याख्यातम् ।

हस्तिप व्रात्य दासेषु गुर्व्वाचार्य्यातिगमेषु च ।

इति पूर्व्वार्द्धसमभिव्याहारस्वरसात्। तदेतद्व्याख्यानद्वयमनुबन्धा[२]भावविषयतया नेयम्। अनुबन्धे त्वसमापत्तिपक्षे क्षत्रियादिविषये हननमेवोभयोरर्थः। तत्रैव ब्राह्मणस्य प्रवासौचित्यात् ।

ननु क्वचित् तद्रत्नाकरोक्तार्थः क्वचित् त्वदुक्त इति सकृदुच्चरिते शब्दे दुर्घटमिति चेत्।

---

१ घ विचित्रं । २ घ अनुबन्धविषयतया ।

सत्यं वधत्वेनाभिधाने तद्विशेषाणां ताडनाङ्कच्छेदन-प्रमापणानां तत्तद्विषयमादाय व्यवस्था(प)नमिति ब्रूमः ।

यथा कूटशासनप्रयोग इत्यादौ शङ्खलिखितवाक्ये एकमेव शारीरमिति पदं कूटतुलादिव्यवहारविषयतया मुण्डनादिरूप इति व्याख्याय राजाज्ञाप्रतिघातविषयतया मारणरूप इति रत्नाकरकृतैव व्याख्यातम् ।

इति प्रकीर्णके व्यवस्थावर्गः प्रथमः ।

नारदः,—

प्रकीर्णके पुनर्ज्ञेयो व्यवहारो नृपाश्रयः ।
राज्ञामाज्ञाप्रतीघातस्तत्कर्म्मकरणन्तथा ॥
पुरप्रधानसम्भेदः प्रकृतीनां तथैव च ।
पाषण्डनैगमश्रेणीगणधर्म्मविपर्य्ययः ॥
पितापुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः ।
[1]प्रतिग्रहावलोपश्च लोप आश्रमिणामपि ॥
वर्णसङ्करदोषश्च तद्वृत्तिनियमस्तथा ।

राज्ञ आज्ञाप्रतीघात आदेशलङ्घनं, तत्कर्म्मकरणं तदसाधारणक्रियाचरणम् । पुरशब्दः पुरवासिलोकपरः, नैगमाः अत्र वणिजः, नानापौरसमूह इति हलायुधः । श्रेण्यो वणिज एवान्यदेशपथोपजीविनः[2] । एककर्म्मप्रवृत्ता वणिक्कृषीवलादय इति कल्पतरुः । तद्वृत्तिनियमस्तेषां वर्णानां प्रवृत्तिनियमः ।

---

१ क्वचित् पाठः—प्रतिग्रहविलोपश्च कोप आश्रमिणामपि ।

२ क देशमध्योपजीविनः ।

कात्यायनः,—

राजधर्म्मान् त्वधर्म्मांश्च सन्दिग्धानाञ्च भाषणम् ।

बृहस्पतिः,—

षड्भागस्तरशुल्कञ्च गर्त्तं देयस्तथैव च ।

सङ्ग्रामचौरभेदी च शस्यघातनकृत्तथा ॥

अत्र षड्भागपदं प्रणष्टाधिगतसुवर्णादिपरं, तत्र राज्ञः षड्भागग्रहणसम्बन्धात् वैश्वदेवमन्नमितिवत् ।

तथा,—

निष्कृतीनामकरणमाज्ञासेधव्यतिक्रमः ।

वर्णाश्रमाणां लोपश्च वर्णसङ्करलोपनम् ॥

निधिर्निष्कुलवित्तञ्च दरिद्रस्य धनागमः ।

अनाम्नातानि कार्य्याणि क्रियावादाश्च वादिनाम् ॥

प्रकृतीनां प्रकोपश्च सङ्केतश्च परस्परम् ।

अशास्त्रविहितं यच्च प्रजायां सम्प्रकीर्त्त्यते ॥

आज्ञासेधव्यतिक्रमः राजाज्ञया वादिनोर्यस्य आसेधो ऽवरोधस्तस्य ताभ्यामतिक्रमणम् तच्च व्यवहारवर्गे स्फुटम् । निधिर्द्विविधो वक्ष्यमाणलक्षणः । निष्कुलवित्तमुच्छन्नबन्धोर्मृतस्य धनं सम्बन्धिनो ग्राहकस्य दण्डहेतुरित्यर्थः । दरिद्रस्य धनागम आकस्मिकः, अन्यमुपायं विना निध्यादिलाभनिश्चयात् दण्डहेतुः ।

अत्र याज्ञवल्क्यः,—

कुलानि जातीः श्रेणीश्च गणं जानपदानपि ।

स्वधर्माच्चलितान् राजा विनीय स्थापयेत् पथि ॥

कुलानि ब्राह्मणादीनां, जातयः क्षत्रियाद्याः, गण-

ताम्बूलिकादीनां जानपदाः कारुकादयः। विनीयेति नहि भयं विना वाङ्मात्रेण विधर्म्माणः शक्या निवर्त्तयितुम्, अदृष्टरूपेषु पापफलेषु श्रुतिवाक्यमश्रद्दधतां लौकिके वचसि विश्वासादरयोरसद्भावात् ।

तस्मादुद्दिष्टस्य सर्व्वस्यास्य प्रकारस्य नियमातिक्रमविशेषत्वात्तत्कर्त्तुर्दण्डः प्राप्तः स च विशेषविधेरन्यत्रापि देशकालाद्यनुसारेण कार्य्य इति तात्पर्य्यम् ।

तत्र राज्ञ आज्ञाप्रतीघाते दण्डमाहतुः,—

शङ्खलिखितौ,—

कूटशासनप्रयोगे राजाज्ञाप्रतिघाते कूटतुलामानप्रतिमानव्यवहारे शारीरोऽङ्गच्छेदो वा ।

शारीरो मारणरूप इति रत्नाकरः ।

यत्तु प्रकाशतस्करप्रकरणे शारीरो मुण्डनादिरूप इति तत्रैव व्याख्यातं तत्कूटतुलादिव्यवहारमात्रविषयम् । अङ्गच्छेदो येनाङ्गेन तत् कुरुते तस्य कर्त्तनं विकल्पस्त्वपराधगौरवागौरवाभ्यां व्यवस्थित इति रत्नाकरः ।

एवञ्चाल्पीयसि राजशासने लङ्घिते तत्कारणभूतस्यापि हस्तादेरेव छेदोऽपराधानुसारादिति द्रष्टव्यम् ।

अत एव,—

प्रतिकूलेष्ववस्थितान् घातयेद्विविधैर्दमैः ।

इति मनुवचने कुल्लूकभट्टेनोक्तं राजाज्ञाव्याघातकारिणोऽपराधापेक्षया करजिह्वाछेदादि दण्डयेदिति ।

राजक्रियाकरणे दण्डमाह याज्ञवल्क्यः,—

राजयानासनारोढुर्दण्डो मध्यमसाहसः ।

यानं गजाश्वादि आसनं सिंहासनादि, अत्र राजाज्ञां विनेति शेषः ।

कात्यायनः,—

राजक्रीडासु ये सक्ता राजवृत्त्युपजीविनः ।
अप्रियस्य तु यो वक्ता वधन्तेषां प्रकल्पयेत् ॥

राजक्रीडासु तदसाधारणीसु क्रीडासु चेष्टासु तदनुमतिं विना ये सक्ता ये च तेनाननुज्ञाताः प्रजापालनरूपां वृत्तिमवलम्बन्ते ये च राज्ञ एवाप्रियवादशीलास्ते वध्या इत्यर्थः ।

तथा,—

प्रतिरूपस्य कर्त्तारः प्राप्नुयुर्व्विविधं वधम् ।

प्रतिरूपस्य राजवेशस्य । अत्रापि तदनुमतिं विनेति द्रष्टव्यम् ।

हन्यादित्यनुवृत्तौ विष्णुः,—

ये चाकुलीना राज्यमभिकामयेयुः ।

अकुलीना राज्ञो यत् कुलं तदप्रसूता इत्यर्थः ।

याज्ञवल्क्यः,—

ऊनं वाप्यधिकं वापि लिखतो राजशासनम् ।
पारदारिकचौराणां मुञ्चतो दण्ड उत्तमः ॥

राजशासनमियद्देयमियद्ग्राह्यमित्यादि राजादिष्टं यो लिखेत्तस्य दण्ड इत्यर्थान्वयः ।

कात्यायनः,—

प्रमाणेन तु कूटेन मुद्रया कूटयाऽपि वा ।
कार्य्यन्तु साधयेद्यो वै स दाप्यो दण्डमुत्तमम् ॥

प्रमाणेन लेख्येन मुद्रया स्वहस्तादिचिह्नेन।

मनुः,—

कूटशासनकर्त्तॄंश्च प्रकृतीनाञ्च दूषकान्।
स्त्रीबालब्राह्मणघ्नांश्च हन्यात् द्विट्सेविनस्तथा॥

शासनमिह राजादेशः, मिथ्या राजाज्ञालिखनमिति-नारायणः। तत्र मारणोत्तमसाहसयोरतुल्यत्वात् पूर्व्वोक्तयोरल्पानपराधविषयतया व्यवस्था, ब्राह्मणे तु वधनिषेधात्तत्प्रत्याम्नायत्वेन सुवर्णशतं दण्डः। महापातकिनो वधे प्राप्ते निर्व्वासनमिति प्रतिभाति।

पुरप्रधानसम्भेदे नारदः,—

मिथः सङ्घातकरणमहेतौ शस्त्रधारणम्।
परस्परोपघातञ्च[1] तेषां राजा न मर्षयेत्॥

मिथः सङ्घातकरणं प्रकृतिसङ्घातप्रतिकूलावान्तरमेलककरणम् अहेतौ भयादिहेतुं विना परस्परोपघातमन्योन्यमनिष्टकरणं तेषां सङ्घातादिकर्त्तॄणां पुरपाषण्डादीनां न मर्षयेत् अपि तु यथाबलं तान् दण्डयेदिति तात्पर्य्यम्। एतेन महत्तमानामवान्तरसङ्घातकरणं व्याख्यातमेवमेव प्रकृतिष्वपि द्रष्टव्यम्।

पाषण्डादिधर्म्मविपर्य्ययेण संविद्यतिक्रमो लक्ष्यते।

तत्र नारदः,—

पाषण्डनैगमश्रेणीपूगव्रातगणादिषु।
संरक्षेत् समयं राजा द्वन्द्वे[2] जनपदे तथा॥

---

१ क्वचित् पाठः परस्परापकारश्च। २ दुर्गे इति मूले पाठः।

पाषण्डास्त्रयीवाह्याः, पूगोऽत्र वणिगादिसमूहः, नाना-जातीयानियतसमूहा इत्यन्ये, व्रात आयुधीयसमूहः, आदिपदेन संघादिसङ्ग्रहः, तत्रार्हतसौगतादिसमूहः सङ्घः, चाण्डालादिसमूहो गुल्मः, अनुक्तसमुदायो वर्गः, समयः स्थितिः सा च पारिभाषिकैर्धर्म्मैर्व्यवहारः ।

तत्र ग्रामनगरातिक्रमे बृहस्पतिः,—

सर्व्वकार्य्ये प्रवीणाश्च कर्त्तव्यास्तु महत्तमाः ।
द्वौ त्रयः पञ्च वा कार्य्याः समूहहितवादिनः ।
कर्त्तव्यं वचनं तेषां ग्रामश्रेणीगणादिभिः ॥

याज्ञवल्क्यः,—

यस्तत्र विपरीतः स्यात्स दाप्यः प्रथमं दमम् ।

कात्यायनः,—

युक्तियुक्तञ्च यो हन्याद्वन्धुर्योऽनवकाशदः ।
अयुक्तञ्चैव यो ब्रूयात् प्राप्नुयात् पूर्व्वसाहसम् ॥

ब्रूयात् कार्य्यचिन्तकेषु ।

मनुः,—

यो ग्रामदेशसङ्घानां कृत्वा सत्येन संविदम् ।
विसंवदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत् ॥
निगृह्य दापयेदेनं समयव्यभिचारिणम् ।
चतुःसुवर्णान् षण्निष्कान् शतमानञ्च राजतम् ॥

निगृह्य धर्षयित्वा, चतुःसुवर्णानिति चत्वारः सुवर्णाः परिमाणं येषां ते तथा एतच्च निष्कविशेषणं परि-भाषाप्रकरणोक्त-निष्कान्तरव्यावृत्त्यर्थमिति रत्नाकरः ।

कुल्लूकभट्टस्तु चत्वारः सुवर्णाः प्रत्येकं चतुःसुवर्णपरिमिताः षण्णिष्का[1] राजतं शतमानमिति, स्वतन्त्रमेव दण्डमाह ।

समयक्रियामभिधाय कात्यायनः,—

पालनीया समस्तैस्तु यः समर्थो विसम्वदेत् ।
सर्व्वस्वहरणं दण्डस्तस्य निर्व्वासनं पुरात् ॥
तत्र भेदमुपेक्षां वा यः कश्चित् कुरुते नरः ।
चतुःसुवर्णाः षण्णिष्कास्तस्य दण्डो विधीयते ॥

भेदः समूहिनामेव—

पृथग्गणांश्च ये भिन्द्युस्ते विनेया विशेषतः ।

इति नारदसंवादात् ।

अनयोर्द्रव्ययोर्द्विरुक्तदण्डश्रवणाद्व्यवस्था विवादपदनिर्णये समुन्नेया ।

याज्ञवल्क्यः,—

गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेत्तु यः ।
सर्व्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत् ॥

गणद्रव्यं ग्रामादिसमूहसाधारणद्रव्यम् ।

कात्यायनः,—

अरुन्तुदः सूचकश्च भेदकृत् साहसी तथा ।
श्रेणीपूगन्टपद्वेष्टा[2] क्षिप्रं निर्व्वास्यते पुरात् ॥

अरुन्तुदो मर्म्मस्पृक्, सूचकः पिशुनविशेषः ।

---

१ क षाणुष्काः । २ क्वचित् पाठः—द्विष्टः ।

बृहस्पतिः,—

सम्भूयैकमतं कृत्वा राजभाव्यं हरन्ति ये।
ते तदष्टगुणं[1] दाप्या वणिजश्च पलायिनः॥

राजभाव्यं राज्ञे देयम्।

पितापुत्रविवाद इति।

यद्यपि पित्रा सह विवादे शृङ्गग्राहिकया साक्षाद्दण्डो न श्रूयते तथापि साक्षिप्रकरणे पित्रा विवदमानश्चेति निन्दादर्शनान्निषेधाभिगमे नियमातिक्रमणप्रयुक्तः साहसोक्तः सामान्यदण्डः पितुर्गुणवत्त्वागुणवत्त्वतारतम्येन व्यवस्थितो द्रष्टव्यः। एवञ्चायं साक्ष्य एवोदाह्रियते।

तत्र विष्णुः,—

पितापुत्र[2]विरोधे साक्षिणां दशपणो दण्डः। यस्तयोः सान्तरीयः स्यात्तस्योत्तमसाहसम्[3]।

सान्तरीयः स्यादिति तयोर्मध्यगो भूत्वा विरोधमुत्पादयतीत्यर्थः। कामधेनौ यस्तयोरन्तरे स्यादिति पठितम्।

याज्ञवल्क्यः,—

पितापुत्रविरोधे तु साक्षिणस्त्रिपणो दमः।
अन्तरे च तयोर्यः स्यात्तस्याप्यष्टशतो[4] दमः॥

अष्टौ शतानि पणा यस्मिन् दमे दीयन्ते सोऽष्टशतः।

---

१ मूले—ते तदष्टगुणं इति पाठः।

२ क ख पुस्तकद्वये पितृपुत्र—

३ क्वचित् पाठः—साहसः।

४ क पुस्तके अष्टपणः।

अत्रोत्कृष्टगुणः पिता विवक्षितः पूर्व्वत्रापकृष्टगुण इत्यविरोधः ।

मिताक्षरायान्तु अष्टगुण इति पठितं व्याख्यातञ्च यस्तयोः कलहे साक्ष्यमङ्गीकरोति न तु तद्वारयति असौ पणत्रयं दण्ड्यो यस्तु तयोः सपणे विवादे पणदानप्रतिभूर्भवति चकाराद्यश्च कलहं वर्द्धयति सोऽपि त्रिपणादष्टगुणं चतुर्व्विंशतिपणान् दण्ड्य इति ।

प्रायश्चित्तस्य व्यतिक्रमोऽननुष्ठानं तदेव निष्कृतीनामकरणमिति कात्यायनोक्तम् ।

तत्र स्मृतिः,—

चतूर्णामपि वर्णानां प्रायश्चित्तमकुर्व्वताम् ।
शारीरं धनसंयुक्तं धर्म्म्यं दण्डं प्रकल्पयेत् ॥

लोप आश्रमिणामित्यत्र—

देवीपुराणे,—

वेश्यादिभवने यस्य राष्ट्रे भुञ्जीत संयमी ।
ब्रह्मचारी व्रती यत्र वेश्यादिवृषलीकृतम् ।
अन्नं भुञ्जीत वै तत्र जायते लोकसंक्षयः ॥

तथा,—

काषायेण तु भूमिष्ठो यती वा त्यजति व्रतम् ।
सङ्गं वेश्यादिभिः कुर्य्यात्तदा लोकभयं भवेत् ॥

अत्र यस्य राष्ट्र इत्यादिदर्शनादुत्सर्गतोऽमीषामधनत्वाच्च सान्त्वेनान्यापदेशेन वा स्वदेशनिष्कासनमेव दण्डः ।

यदाह दक्षः,—

पारिव्राज्यं गृहीत्वा यः स्वधर्म्मेषु न तिष्ठति।
श्वपादेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत्॥

एतच्च ब्राह्मणविषयम्।

अन्यत्र त्वाह नारदः,—

प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजातयः।
निर्व्वासं कारयेद्विप्रं दासत्वं क्षत्रविन् नृपः॥

अत्र शूद्रस्यापि दासत्वमेव कैमुतिकन्यायात्।

वर्णसङ्करदोष इत्यत्र देवीपुराणमेव,—

मद्याद्यैर्गर्हितैर्यत्र सङ्करः शिवयोगिनाम्।
नृपराष्ट्रभयं तत्र कारणञ्चान्यथागमः॥

शिवयोगिनामिति सम्भवाभिप्रायम्। अन्यत्रापि देशादपसारणमेव दण्डः। अन्यथागमस्त्रयीवाह्यः शैवाद्यागमः।

राजधर्म्मान् स्वधर्म्मानिति समभिव्याहारेणाभिधानमविरोधख्यापनार्थम्।

तथाच याज्ञवल्क्यः,—

निजधर्म्माविरोधेन यस्तु सामयिको भवेत्।
सोऽपि यत्नेन संरक्ष्यो धर्म्मो राजकृतश्च यः॥

सामयिकः समूहयोगक्षेमार्थः, यथा पौराणामुत्तमानाञ्च[1] मासं राजोपस्थानं कार्य्यमित्यादिरिति रत्नाकरः।

समयान्निष्पन्नो गोप्रचारोदकरक्षण-देवगृहपालनादिरूप इति मिताक्षरा। राजधर्म्मो मम कृते मासं शान्तिः करणीया इत्यादिरूपो राजकृतो धर्म्मः।

---

१ घ पुस्तके मद्दत्तमानाञ्च।

तच्च कात्यायनः,—

राजप्रवर्त्तितान् धर्म्मान् यो नरो नानुपालयेत्।
ग्राह्यः स पापो दण्ड्यश्च लोपयन्राजशासनम्॥

ग्राह्योऽवरोध्यः।

सन्दिग्धानाञ्च भावनमिति निश्चितत्वेनेति शेषः। एतच्च येनासत्याभिधानेन परस्यानिष्टं जायते तत्परम्। अन्यच्च प्रायश्चित्तमाचरस्य प्रवर्त्तनीयत्वात्तदप्रवृत्तेः। निष्कृतीनामकरणमित्यनेनोक्तत्वात्।

यत्तु वादिनोरनिर्णीते विवादविषये निर्णीतवदेक-तरपक्षाभिधानं तत्र सभ्यादेर्दण्डो व्यवहारवर्गे वक्ष्यते।

अथ प्रनष्टाधिगतमधिकृत्य याज्ञवल्क्यः,—

प्रनष्टाधिगतं देयं नृपेण धनिने धनम्।
विभावयेन्न चेल्लिङ्गैस्तत्समं दण्डमर्हति॥

प्रनष्टं स्वामिनः प्रमादात् शुल्कशालादौ रथ्यादौ वा भ्रष्टं तस्करैरपहृतं वा अधिगतं शौल्किकादिभिः स्थान-पालादिभिर्व्वा तच्च तै राज्ञे समर्पणीयं "प्रनष्टमस्वामिक-मधिगम्य राज्ञे ब्रूयुः" इति गोतमस्मरणात्।

राजा तु तैरर्पितमुपस्थिताय स्वामिने दद्यात् स यदि मुक्तादिरूपं कटकाद्याकारञ्च तदित्यादिकैर्लिङ्गैः सत्वं भावयति। अविभावने तु तत्समं दण्ड्यः।

अवेदयानो नष्टस्य देशं कालञ्च तत्त्वतः।
वर्णं रूपं प्रमाणञ्च तत्समं दण्डमर्हति॥

इति मनुवचनसंवादात्।

दण्डोऽयमसत्यवादित्वादिति मिताक्षराकारः। युक्तञ्चै-तत्प्रत्यर्थिभावान्मिथ्याभियोगाभावेन प्रकृते मिथ्याभियोगी-त्रिगुणमित्यादिवचनाप्रवृत्तेः।

सद्योऽनुपस्थिते तु स्वामिनि वर्षत्रयं राजा तमपेक्षेते-त्याह।

मनुः,—

प्रनष्टस्वामिकं द्रव्यं त्र्यब्दं राजा निधापयेत्।

निधापयेत् रक्षयेत्। कस्य किं नष्टमित्येवं पटहादिनो-द्घोष्य राजद्वारादौ स्थापयेदिति कुल्लूकभट्टः। अत्र त्र्यब्दमित्यावश्यकाभिप्रायमिति मिताक्षरा।

तावतापि स्वामिन्यनुपस्थिते किं कुर्य्यादित्याह,—

मनुः,—

अर्व्वाक् त्र्यब्दात् हरेत् स्वामी परतो नृपतिर्हरेत्।

हरेदिति व्ययीकरणाभ्यनुज्ञानार्थमिति मिताक्षरा।

अत्र विशेषमाह स एव,—

आददीताऽथ षड्भागं प्रनष्टाधिगतान्नृपः।
दशमं द्वादशं वापि सतां धर्म्ममनुस्मरन्॥

रक्षणक्लेशाल्पत्वमध्यत्वमहत्त्वैः षड्भागादिविकल्पो नेतव्य इति रत्नाकरः।

हलायुधोऽप्याह षड्भागादिग्रहणं रक्षापेक्षया व्यव-स्थितमिति।

धनस्वामिनो [1]निर्गुणत्वातिगुणवत्त्वापेक्ष इति कुल्लूक-भट्टः।

---

१ क अतिगुणत्वापेक्ष—।

मिताक्षराकारस्त्वाह ।

प्रथमे तावद्वर्षे कृत्स्नमेव धनिने दद्यात्, द्वितीये तु द्वादशं तृतीये दशमं चतुर्थादिषु षष्ठं भागं रक्षणमूल्यतया गृहीत्वा शेषं स्वामिने दद्यात् ।

त्र्यब्दादूर्द्ध्वं व्ययितेऽपि तस्मिन्नागते स्वामिनि राजा स्वांशमवतार्य्य तत्समं दद्यात् ।

तथा स्वाम्यनागमने कृत्स्नस्य धनस्य तदागमने राजस्वभागस्य चतुर्थमंशमधिगन्त्रे दद्यात् ।

यदाह गोतमः,—

प्रनष्टस्वामिकमधिगम्य वत्सरं राज्ञा रक्ष्यमूर्द्ध्वमधिगन्तुश्चतुर्थोऽंशो राज्ञः शेषमिति ।

सर्व्वञ्चेदं हिरण्यविषयम् । अन्यच्च विशेषमाह ।

याज्ञवल्क्यः,—

पणानेकशफे दद्याच्चतुरः पञ्च मानुषे ।
महिषोष्ट्रगवादौ द्वौ पादं पादमजाविके ॥

एकशफोऽश्वादिः पादश्चतुःपणपादः पण इति यावदिति-रत्नाकरः पणस्योपस्थितत्वात्तस्यैव पाद इति प्रतिभाति ।

इह मनूक्तषड्भागादिग्रहणस्य द्रव्यविशेषेऽपवादमाहेति कृत्वा मिताक्षराकृता वचनमिदमवतारितम्, व्याख्यातञ्च—एकशफादौ प्रनष्टाधिगते तत्स्वामी राज्ञः[१] पणचतुष्टयाधिकं दद्यादिति । कल्पतरावपि राज्ञे रक्षणनिमित्तं चतुरः पणान् स्वामी दद्यादिति व्याख्यातम् ।

---

१ घ पुस्तके राज्ञे ।

वस्तुतस्तु रक्षणमूल्यमश्वमानुषादिषु हिरण्यादिसाधारणं षड्भागादि पृथगेव। एतत्तु पणचतुष्टयादि प्रात्यहिकं पोषणमूल्यं पृथगेव। अन्यथा मूल्यवैषम्यानुपपत्ते रक्षण-क्लेशविपर्य्यासात् हिरण्यादेरतिप्रभूतस्यापि गर्त्तनिधाना-दिना रक्षायाः सुकरत्वात्। अश्वादेरल्पस्यापि तस्य दुष्करत्वात् सद्यः स्वाम्युपस्थितिविषयं वा व्याख्यानद्वय-मिति प्रतिभाति।

हलायुधनिबन्धे आपस्तम्बः,—

प्रमादादरण्ये पशूनुत्सृष्टान् ग्राममानीय स्वामिभ्यो विसृजेत् पुनः प्रमादे सकृदवरुध्य तदूर्द्धं नोत्सृजेत्।

तरशुल्कप्रकरणे वसिष्ठः,—

अकरः श्रोत्रियो राजा पुमाननाथः प्रव्रजितो बाल-वृद्धातरुणप्रजाताः प्रागमिकः कुमार्य्यो मृतपत्यः।

अनाथः स्वजनरहितो रोगार्त्तो वा अतरुणप्रजाता अचिरप्रसूता प्रागमिको लेखहारकादिः, मृतपत्यो विधवाः।

न भिन्नकार्षापणमस्ति शुल्कमित्यादिर्व्वसिष्ठपठितो मानवः श्लोकः प्रकाशतस्करप्रकरणे लिखितः।

विष्णुः,—

तरिकः स्थलशुल्कं गृह्णन् दशपणान् दाप्यः। ब्रह्म-चारि-वानप्रस्थ-भिक्षु-गुर्व्विणी तीर्थानुसारिणां नाविकः शुल्कमाददानश्च। तच्च तेषां जह्यात्[1]।

---

१ क्वचित् दद्यात्।

तरिकः नद्यादिसन्तारणशुल्कनियुक्तः, आददानश्चेति दाप्य इत्यनुषङ्गः। तच्च तरशुल्कं तेषां ब्रह्मचार्य्यादीनाम्।

एतच्च वसिष्ठोक्तानामपि श्रोत्रियादीनां तुल्ययोगक्षेमत्वात्। तेनामीषां शुल्कं गृह्णन् तरिको दशपणान् दण्ड्यः। गृहीतञ्च तेभ्यो दाप्यः इत्यर्थः।

स्थलशुल्कमिति पद्भ्यां सन्तीर्य्यमाणं जलं स्थलप्रायमेव तत्र नौकोत्तारणमूलकं शुल्कं स्थलशुल्कमेव पर्य्यवस्यति तेन पद्भ्यां सन्तरतस्तरशुल्कग्रहणे दशपणात्मको दण्ड इत्यर्थः।

आह च हलायुधः,—

नाविकः सन्तारणव्यतिरेकेणेत्थमेव तरशुल्कं गृह्णन् दशपणान् दाप्य इति।

कल्पतरौ तु स्थानिक इति पठित्वा स्थानिकः स्थानाधिकृत इति व्याख्यातम्।

वस्तुतस्तु द्विविधं शुल्कं स्थानिकं तारिकञ्च।

तत्राद्यं यथा—विष्णुः,—

स्वदेशपण्याच्छुल्कांशं दशममादद्यादित्यादि।

द्वितीयं यथा,—

पणं यानेतरं दद्यात् पौरुषेऽर्द्धपणं तरम्। इत्यादि। तत्र पुरुषवाह्यद्रव्ये दशमांशं शुल्कं गृह्णतोऽयं दण्डः। भारानुसारेण शुल्कस्यान्तरणत्वात् मूल्यानुसारेण लाभापेक्षया वणिक्शुल्कस्य गुरुत्वात् एवमेव मिताक्षरास्वरसः।

वसिष्ठः,—

वाहुभ्यामुत्तरन् पणशतं दण्ड्यः।

राजकरविलोपविषयमेतदिति प्रतिभाति॥

अथ शस्यघातकृत्तथा इति यदुद्दिष्टम्।
तच्च मार्कण्डेयपुराणे,—

सोत्सेधवप्रप्राकारं सर्व्वतः खातकावृतम्।
योजनार्द्धार्द्धविष्कम्भमष्टभागायतं पुरम्।
तदर्द्धेन तथा खेटं तत्पादोनञ्च कर्व्वटम्[1]॥
तथा शूद्रजनप्राया सुसमृद्धकृषीवला।
क्षेत्रोपभोगभूमध्ये वसतिर्ग्रामसंज्ञिता॥

तत्पादोनमिति तत्पदेन खेटानुकर्षः सन्निकर्षात् उत्तरोत्तरमपकर्षदर्शनाच्च। दानसागरे तु ग्रामशतद्वय-प्रधानभूतो ग्रामः कर्व्वटः क्रोशैकविस्तारो ग्रामः खेट इत्युक्तम्।

ग्रामादिषु परिहर्त्तव्यां तत्परिसरभूमिमाह।
याज्ञवल्क्यः,—

ग्रामे तु या गोप्रचारभूमी राजवशेन वा।
धनुःशतं परीणाहो ग्रामक्षेत्रान्तरं भवेत्॥
द्वे शते कर्व्वटस्य स्यान्नगरस्य चतुःशतम्।

प्रथमं ग्रामपदं ग्रामनगरादिवासिलोकपरं धनुश्चतुर्हस्तो दण्डः। ग्रामवासिजनापेक्षया वा भूम्यल्पत्वमहत्त्वानुसारेण वा राजाज्ञया वा गोप्रचारो गोप्रचारणार्थो भूभागः कर्त्तव्यः। तस्य च परीणाहो ग्रामादीनां क्षेत्रस्य चान्तररूपः क्रमेणैकद्विचतुःशतधनुःपरिमाणः कार्य्य इत्यर्थः।

अत्र खेटस्य धनुःशतत्रयरूपमन्तरालम्बनलभ्यं ग्रामादि-परिमाणतारतम्येनान्तरालतारतम्यदर्शनात्।

---

१ घ पुस्तके कर्पटं क्वचित् खर्व्वटं।

मनुः,—

धनुःशतं परीणाहो[1] ग्रामस्य स्यात् समन्ततः ।
शम्यापातास्त्रयो वापि त्रिगुणो नगरस्य च ॥

शम्या युगकीलकः स मध्यमपुरुषबाहुक्षिप्तो यावतीं भुवमुल्लङ्घ्य पतति तत्त्रिगुणो वा ग्रामक्षेत्रान्तरालपरीणाहः। एतच्च ग्राम्याणां धनुःपरिमाणानभिज्ञत्वेनानध्यवसायात् शम्यासौलभ्याच्चोक्तम् । सेयं पूर्व्वपूर्व्वसर्व्वनिबन्धदृष्टपठितव्याख्यानानुसारिणी व्याख्या विवादचिन्तामणौ ।

मिश्रैस्तु सम्पाता इति पठित्वा सम्पाताः काण्डपाता इति व्याख्यातम् । सर्व्वञ्चैतत् परिगणनमौत्सर्गिकम् । यावद्गवाद्याकीर्णं[2] यद्ग्रामादि तावदनुसारेण तत्र गोप्रचार इति तत्त्वम् ।

अथ विष्णुः,—

पथि ग्रामविवीतान्ते न दोषोऽनावृते च । न चाल्पकालम् ।

ग्रामान्ते रक्षितगोप्रचाराभ्यन्तरे विवीतो गवादिनियोगार्थं रक्षितयवसो भूभागः, अनावृते पशुनिवारणसमनुवृत्तिशून्ये रथ्यादिक्षेत्रे। तेन वर्त्मादिसन्निहित-क्षेत्रस्थे शस्ये पशुभिरल्पकालं खादिते पालदोषो नास्तीत्यर्थः । बहुकालभक्षणे त्वत्रापि दोष एव ।

अत एवोक्तं कृत्यसागरे ।

आशयापराधस्तत्र कल्प्यत इति ।

स्मृतिसारे चोक्तं—आशयापराधस्तत्रभवतीति ।

---

१ क्वचिन्मूले पाठः—धनुःशतपरीहारः । २ क पुस्तके यवाद्याकीर्णं ।

अत एवाह याज्ञवल्क्यः,—

पथि ग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते।
अकामतः कामचारे चौरवद् दण्डमर्हति॥

उशनाः,—

गोभिर्विनाशितं धान्यं यो नरः प्रतिलिप्सते[१]।
पितरस्तस्य नाश्नन्ति नाश्नन्ति च दिवौकसः॥

धान्यमित्युपलक्षणम्। ग्राह्यमप्येतन्नरकहेतुत्वान्न ग्राह्यमित्यर्थः। एतदपि वचनं ग्रामसमीपस्थितानावृतधान्यादिविषयमिति पराशरभाष्यम्।

उल्लङ्घितशास्त्रं प्रत्याह नारदः,—

गोभिस्तु भक्षितं धान्यं यो नरः प्रतियाचते।
सामन्तानुमतं देयं धान्यं यत्र तु भक्षितम्[२]॥

शस्यमित्युक्तेर्धान्यमित्ययमस्य प्रत्यनुवादः।

तथा,—

[३]गवत्तं स्वामिना देयं धान्यं वै कर्षकाय च।
एवं हि विनयः प्रोक्तो गवा शस्यावमर्द्दने॥

गवत्तं गवा भक्षितम्। अत्र रत्नाकरादौ गवत्रमिति पाठो यवस इति तद्व्याख्यानञ्च कामधेन्वादिलिखितपाठादर्शनमूलकत्वादनादेयम्। एवमिति भक्षणवदवमर्द्दनेऽपि तस्य दानमित्यर्थः।

विष्णुः,—

सर्व्वञ्च स्वामिने विनष्टशस्यमूल्यञ्च।

---

१ क्वचित् पाठः प्रतियाचते। २ वापितमिति क्वचित् पाठः।
३ गोवद्धमिति मूले पाठः।

सर्व्वत्र सपाले विपाले च मूल्यमिति दाप्य इति शेषः। चकाराद्राजदण्डसमुच्चयः ।

मनुः,—

सपालः शतदण्डार्हो विपालान् वारयेत् पशून्।

विपालान् पालकशून्यान् ।

कात्यायनः,—

क्षेत्रारामविवीतेषु गृहेषु पशुपातिषु ।
ग्रहणं तत्प्रविष्टानां ताडनञ्च बृहस्पतिः॥

पशुपातिषु विकीर्णयवसेषु स्थानेषु, ग्रहणं बन्धनम्। कामधेनौ चकारस्थाने वाकारः पठितः ।

कात्यायनः,—

अधमोत्तममध्यानां पशूनाञ्चैव ताडने ।
स्वामी तु विवदेद् यत्र तत्र दण्डं प्रकल्पयेत् ॥

इति शस्यघातकदण्डमातृका ।

तदेवं गोप्रचारादेरन्यत्र पशुभिर्भक्षणेनावमर्द्दनेन वा शस्ये नाशिते पशूनां पशुपालस्य च ताडनम्। पशुस्वामिनः शस्यस्वामिने तत्तन्मूल्ययोरेकतरदानं राज्ञे च दण्डदानमपवादविनयादन्यत्र स्थितम्।

तत्रापवादः क्वचिद्राजदैवदोषात् क्वचित् पशुविशेषादिति द्विविधस्तयोराद्यमाह ।

नारदः,—

राजग्रहगृहीतो वा वज्राशनिहतोऽपि वा ।
अथ सर्पेण वा दष्टो वृक्षाद्वा पतितो भवेत् ॥

व्याघ्रादिभिर्हतो वापि व्याधिभिर्व्वाऽप्युपद्रुतः ।
न तत्र दोषः पालस्य न च दोषोऽस्ति गोमिनाम् ॥

गोमी गोस्वामी ।

द्वितीयमाह स एव,—

गौः प्रसूता दशाहन्तु महोक्षा वाजिकुञ्जराः ।
विनिवार्य्याः प्रयत्नेन स्वामी तेषां न दण्डभाक् ॥

महोक्षा बीजसेक्ता वृषभः । वाजिकुञ्जराः प्रजापालनोपयुक्ताः ।

अदम्या हस्तिनोऽश्वाश्च प्रजापाला हि ते स्मृताः ।
इत्युशनोदर्शनात् ।

मनुः,—

अनिर्द्दशाहां गां सूतां[1] वृषान् देवपशूंस्तथा ।
सपालान् वा विपालान् वा अदम्यान्[2] मनुरब्रवीत् ॥

देवपशवो देवमुद्दिश्योत्सृष्टाः पशवः, उत्सृष्टवृषाणामपि गवां गर्भार्थं गोपैर्धारणात्सपालत्वमिति कुल्लूकभट्टः ।

शङ्खः,—

देवपशवश्छागवृषाः शस्यापराधे न दण्डमाप्नुयुः ।

वृषशब्देन बीजसेकक्षत्पिचर्यौत्सृष्टवृषयोर्ग्रहणमिति रत्नाकरः । एवञ्च छागोऽपि तादृश एव समभिव्याहारात् ।

उशनाः,—

अदम्याः काणकुण्ठश्च वृषश्च कृतलक्षणः ।
अदण्ड्यागन्तुका या गौः सूतिका चाभिचारिणी ॥

---

१ क सूतौं । २ अदण्ड्यानिति क्वचित् पाठः ।

कुण्ठः खञ्जः, काणकुण्ठशब्दाभ्यामत्यन्तासमर्थ उच्यत इति रत्नाकरः। वृषश्च कृतलक्षणस्त्रिशूलाद्यङ्कितः। अभिचारिणी अत्यन्तमारणशीला इति हलायुधादयः। अत्यन्तधावनशीलेति मिश्राः। पारिजाते तु अभिसारिणीति पठित्वा अभिसारिणी वृषस्यन्तीति व्याख्यातम्। आगन्तुका स्वस्थानपरिभ्रष्टा इति रत्नाकरः।

अत्र विशेषमाह नारदः,—

नष्टा या पालदोषेण गौश्च क्षेत्रं[१] विनाशयेत्।
न तत्र स्वामिनो दोषः पालस्तद्दण्डमर्हति॥

आगन्तुका ग्रामान्तरादागतेति ग्रहेश्वरमिश्राः। एवमेव स्मृतिसारकारः। अत्रैव च शब्दस्वरसोऽपरिशीलितपरयूथप्रविष्टायाः स्वयूथोत्सेकभयात् वा दुर्निवारत्वेन दण्डाभावोऽप्यत्रैव घटते। एवमेव यूथभ्रंशे पालदोषस्यावश्यकत्वात्। इति विविक्तो दण्डमातृकाशेषः।

अथापवादकाभावाद् यत्र दण्डस्तत्र किं सर्व्वत्राविशेषेणैव, नेति ब्रूमः—

गुरोः क्षुद्रात् पशो रात्रावह्नि कामादकामतः।
महानल्पः शस्यनाशो दण्डभेदाय भिद्यते॥

तथा हि हस्त्यादिनाल्पकालकृतोऽपि शस्योपघातोऽधिको भवति अजादिना बहुकालकृतोऽप्यल्पः। रात्रावुत्सर्गतो निवारकाभावात् पालस्य स्वामिनो वाऽभीष्टत्वे यावत्सौहित्यमिच्छया पशवश्चरन्ति न तु दिवा तयो-

१ क चेत्रात्।

रनिच्छायां वा तथा क्वचिद्देते मूलं शस्यमुपघ्नन्ति क्वचित्तस्य शाखापत्रादिमात्रमित्येवम्।

हेतुतः स्वरूपतश्च शस्यनाशो गौरवागौरवाभ्यां भिद्यते दण्डे च गुरुलघुभावं प्रयोजयति ततश्च विषयभेदमादाय वक्ष्यमाणवाक्येषु विरुद्धदण्डविधिव्यवस्था विद्वद्भिरूहयित्वा सुकरा भवति।

तत्र गौतमः,—

पञ्चमाषान् गवि षडुष्ट्रे अश्वमहिष्योर्दश अजाविके द्वौ द्वौ।

माषोऽत्र प्रकरणे राजतो मन्तव्यः। लिखितपरिभाषाप्रामाण्यात्।

मिताक्षरायान्तु माषोऽत्र ताम्रिकपणस्य विंशतितमो भाग इत्युक्तम्। युक्तञ्चैतत्

तद्दापयेत् पणपादं गां द्वौ पादौ महिषीं तथा।

इति कात्यायनादिसम्वादात्। एवं ह्यपराधानुरूपो दण्डो भवति।

शङ्खलिखितौ,—

सर्व्वेषामेव वत्सो माषं महिषी दश खरोष्ट्रौ षोडशाजाविकं चतुरः सर्व्वेषां पशूनाम्।

वत्सः प्रथमवयाः शिशुरिति यावत्।

विष्णुः,—

महिषी चेत् शस्यनाशं कुर्य्यात् तत्पालस्त्वष्टौ माषान् दण्ड्यः। अपालायाः स्वामी। अश्वस्तूष्ट्रो गर्द्दभो वा गौश्चेत्तदर्द्धन्तदर्द्धमजाविकञ्चेद्। भक्षयित्वोपविष्टेषु द्विगुणम्।

अश्वो वणिगादयश्वः प्रजापालत्वाभावात्तस्येति कृत्यसार-स्मृतिसारौ। अश्व इत्यादौ शस्यनाशं कुर्य्यादित्यनुषङ्गः।

अत्र खरोष्ट्रं महिषीसममिति याज्ञवल्क्यदर्शनात्तत्र तत्र समभिव्याहाराच्च खरोष्ट्रगर्द्दभमहिष्यो महान्तः, गौर्मध्यमा, अजाविके क्षुद्राविति विभागः प्रतीयते।

अथ शङ्खलिखितौ।

रात्रौ चरन्ती गौः पञ्चमाषान् द्विरात्रीन्[1]।

नारदः,—

सन्नानां द्विगुणो दण्डो वसतान्तु चतुर्गुणः।

सन्नानां शस्यभक्षणश्रान्तानाम्, वसतां तत्रैव चरित्वा नीतरात्रिकाणाम्।

याज्ञवल्क्यः,—

वसतां द्विगुणः प्रोक्तः सवत्सानाञ्चतुर्गुणः।

सवत्सानां वसतामित्यन्वयः इमाटक

मनुः,—

दण्ड

पथि क्षेत्रे परिवृते ग्रामान्तीऽथवा पुनः।
सपालः शतदण्डार्हो विपालान् वारयेत् पशून्॥

वर्त्मग्रामयोरपि समीपस्थं परिवृतं यत् क्षेत्रं तत्र पाल-शून्यः पशुः क्षेत्रिणैव वारणीयः। सपालः पशुपालेन, यदि तेनासौ न व[illegible] भिसन्धिदोषादस्य पणशतं दण्डः॥

नारदः,—

प्रत्यक्षचारकाणान्तु चौरदण्डः स्मृतो बुधैः।

---

[1] क चिरात्रीन्।

प्रत्यक्षचारकाः क्षेत्रिणां समक्षमेव बलेन चारकाः।

तथा,—

स्वामी समं दमं दाप्यः[1] पालस्ताडनमर्हति।

समं भक्षितशस्यानुरूपं फलं क्षेत्रिणे, दमं दण्डं राज्ञे स्वामिपालसमक्षविषयमेतत्॥

अथ नारदः,—

समूलशस्यनाशे तु स्वामी दममवाप्नुयात्।
वधेन पालो युज्येत दण्डं स्वामिनि पातयेत्॥

यस्मिन्नाशे पुनः प्ररोहो न भवति स समूलशस्यनाशः। एतयोर्दोषे नाशानुरूपं फलं क्षेत्रस्वामिने दण्डञ्च राज्ञे गोस्वामी दद्यात्। पालस्य तु अपराधानुरूपं ताडनमित्यर्थः।

हलायुधे तु,—

यस्मिन् क्षेत्रे चारिते कृशवृत्तेर्ब्राह्मणादेरत्यन्तपीडा भवति, तत्र गोपो वध्य इति। मुख्यार्थपरतया वधेनेति व्याख्यातम्।

अत्र गवादिभक्षितावशिष्टं पलालादि गोस्वामिनैव ग्रहीतव्यम् मध्यस्थकल्पितमूल्यदानेन क्रीतप्रायत्वात्।

अत एव नारदः,—

पलालं गोमिने देयं धान्यं वै कर्षकस्य तु।

इति मिताक्षराकारः।

सर्व्वश्चायं दण्डः प्रत्येकमेकैकं पशुं प्रति द्रष्टव्य इति रत्नाकरः।

---

१ क दद्यात्।

स च पालाधिष्ठानकाले पालस्य। नो चेत् स्वामिन एव।

अपालायास्तत्स्वामी सपालायाः पालः।

इति विष्णुदर्शनात्।

इति कृत्यसागर-स्मृतिसारौ।

क्षेत्रिणे शस्यदानं नाशानुसारेणैव, पालस्य च ताडनमपराधानुसारेणैव, नतु पशुपरिगणनयेति विशेषः।

निधिः पूर्व्वनिखातं चिरविनष्टं धनम्।

स द्विविधो ज्ञायमानस्वामिकोऽज्ञायमानस्वामिकश्च। तयोरन्त्यः परनिधिरित्याख्यायते।

अथ प्रथमे मनुः,—

ममायमिति यो ब्रूयान्निधिं सत्येन हेतुतः।
तस्याददीत षड्भागं राजा द्वादशमेव वा॥

वर्ण-कालाद्यपेक्षया भागविकल्प इति विज्ञानेश्वरः। बहुगुणवत्त्वागुणवत्त्वापेक्षयेति कुल्लूकभट्टः। एवमेव रत्नाकरः। एतच्च ब्राह्मणादन्यत्र द्रष्टव्यम्।

यदाह विष्णुः,—

स्वनिहिताद्राज्ञे ब्राह्मणवर्ज्जं द्वादशमंशं दद्युः, परनिहितं स्वनिहितमिति वदन्तस्तत्समं दण्डमावहेयुः। परनिहितमिति तन्निहितमेवातन्निहितं वदन्त इत्यर्थः।

तत्समं निहितसमं सन्निहितत्वात् द्वादशांशस्यापि अंशि-निरूप्यत्वेन तस्यैव प्रथमं बुद्धिविषयत्वात्[1]। अन्यथा वदन्तश्चेति ब्रूयात् न तु तत्सममिति।

---

[1] ङ पुस्तके बुद्धिस्थत्वात्।

मनुः,—

अनृतन्तु वदन् दण्ड्यः स्ववित्तस्यांशमष्टमम्।
तस्यैव वा निधानस्य संख्ययाऽल्पीयसीं कलाम्॥

अनृतं परकीये स्वकीयत्वं स्ववित्तस्य सर्व्वस्वस्य तस्य निश्चये अष्टमं भागं मिथ्यावादी दण्ड्यः। अनिश्चये त्वल्पीयसीं कलां निधेरेकदेशम्। स च यावता नावसीदति तावान्।

अयमल्पानल्पदण्डविकल्पः सगुणनिर्गुणत्वापेक्ष इति कुल्लूकभट्टः।

अथ द्वितीये निधिभेदे वशिष्ठः,—

अप्रज्ञायमानं वित्तं योऽधिगच्छेद्राजा तद्धरेदधिगन्त्रे षष्ठमंशं प्रदाय।

अप्रज्ञायमानमज्ञातस्वामिकमस्वामिकञ्च। इदमविद्वद्ब्राह्मणविषयं पारिशेष्यात्। अब्राह्मणलब्धे ब्राह्मणभागनियमात्। विद्वद्ब्राह्मणलब्धे राजभागाभावात्।

विद्वानशेषमादद्यादित्यभिधाय—

इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत्।

इति याज्ञवल्क्यवचनसंवादात्।

इतरेण अविदुषेति विज्ञानेश्वर-चण्डेश्वरव्याख्यानात् क्षत्रियादि[1]षूक्तभागविरोधात्।

निध्यधिगमो न राजधनं ब्राह्मणस्याभिरूपस्य, अब्राह्मण आख्याता चेत् षष्ठमंशं लभत इत्येके।

---

१ क अभियुक्तभाग।

इति गौतमवचने अब्राह्मणेति नञो निन्दार्थत्वात्। पर्य्युदासपरत्वेऽप्यभिरूपब्राह्मणान्यत्वेनाविद्वद्ब्राह्मणस्यैव तत् ।

न च विष्णुवाक्ये षष्ठांशस्य राज्ञा दानं याज्ञवल्क्यवाक्ये तस्य ग्रहणमिति विरोध इति चेन्न अभियुक्तव्याख्यानेन तन्निरासात् ।

तथाहि मिताक्षराकारः,—

इतरेण राजविद्वद्ब्राह्मणव्यतिरिक्तेन अविद्वद्ब्राह्मणक्षत्रियादिना निधौ लब्धे राजा षष्ठांशमधिगन्त्रे दत्वा शेषं निधिं स्वयमाहरेदित्याह। गोतमसंवादोऽप्यत्र द्रष्टव्यः ।

अथ मिताक्षराकारः,—

हरेदिति प्रनष्टाधिगतवद्वशीकरणाभ्यनुज्ञानपरम् । यदि तु स्वामी आगत्य स्वरूपसंख्यादिभिर्निधिं सम्भावयति तदा राजा तस्मै निधिं दत्वा षष्ठं द्वादशं वा अंशं स्वयमादद्यादित्याह ।

राज्ञा स्वयं निध्यधिगमे त्वाह राजधर्म्मे विष्णुः,—

निधिं लब्ध्वा ब्राह्मणेभ्यस्तदर्द्धं दत्वा द्वितीयमर्द्धं कोषे प्रवेशयेत् ।

परेण निधिलाभे स एवाह,—

निधिं लब्ध्वा ब्राह्मणः स्वयमेवादद्यात्। क्षत्रियश्चतुर्थमंशं राज्ञे दद्यात् चतुर्थमंशं ब्राह्मणेभ्यः, अर्द्धं स्वयमेवादद्यात् वैश्यश्चतुर्थांशं राज्ञे दद्यात् ब्राह्मणेभ्योऽर्द्धं स्वयमंशद्वयमादद्यात्। शूद्रश्चावाप्तं द्वादशधा विभज्य पञ्चांशं राज्ञे पञ्चांशं ब्राह्मणेभ्योंऽशद्वयं स्वयमादद्यात् ।

ब्राह्मणोऽत्र षट्कर्म्मनिरतः ।

ब्राह्मणश्चेदधिगच्छेत् षट्कर्म्मसु वर्त्तमानो न राजा हरेत् । इति वशिष्ठवचनात् ।

एवञ्च,—

विद्वांस्तु ब्राह्मणो दृष्ट्वा पूर्व्वोपनिहितं निधिम् ।
अशेषतोऽप्याददीत सर्व्वस्याधिपतिर्हि सः ॥

इति मनुवचने विद्वत्त्वमपि षट्कर्म्मनिरतब्राह्मणपरमेव । विदुष एव षट्कर्म्मकरणस्यौत्सर्गिकत्वेन तत्रैव तत्पद-प्रयोगात् द्वयोरेकमूलकत्वकल्पने लाघवात् ।

अस्तु वा वाक्ययोरेकवाक्यतया षट्कर्म्माभिरतविद्व-द्ब्राह्मणपरत्वं एवमप्येकमूलकत्वोपपत्तेः । अतएव विद्वान-शेषमादद्यादिति याज्ञवल्क्यवाक्ये विद्वान् श्रुताध्ययन-सम्पन्नः सदाचारः सर्व्वमेव गृह्णीयादिति मिताक्षरायां व्याख्यातम् ।

इदन्तु याज्ञवल्क्यवाक्यं ममायमिति यो ब्रूयादि-त्याद्युक्त-राजदेयांशनिरासार्थं पित्रादिनिहितविषयमिति मेधातिथि-गोविन्दराजौ ।

कुल्लूकभट्टस्तु,—

परेण निहितं लब्ध्वा राजन्युपहरेन्निधिम् ।
राजगामी निधिः सर्व्वः सर्व्वेषां ब्राह्मणादृते ॥

इति नारदवचनात्,—

राजा लब्ध्वा निधिं दद्याद्द्विजेभ्योऽर्द्धं द्विजः पुनः ।
विद्वानशेषमादद्यात् स सर्व्वस्य प्रभुर्यतः ॥

इति याज्ञवल्क्यवचनाच्च परनिहितविषयमपीत्याह ।

तत्र यद्यपि नारदवाक्ये सर्व्वेषामिति षष्ठ्यन्तादुपस्थितेषु स्वामिषु ब्राह्मणादृते इत्यनेन ब्राह्मणस्वामिकस्य निधेः राजगामित्वं प्रतिषिध्यते, न तु ब्राह्मणाधिगतस्य याज्ञवल्क्यवाक्ये च ब्राह्मणस्य सर्व्वप्रभुत्वश्रुतिरर्थवादमात्रं सर्व्वस्वं ब्राह्मणस्येदमित्यादिवत् ।

अन्यथा बहुविरोधोऽतिप्रसङ्गश्च स्यादतो न तदभिधानवैफल्यापत्तेरपि परनिधिपरत्वं कल्प्यते ।

तथापि राजा लब्ध्वेत्यत्र निधिपदस्य परनिधिपरत्वध्रौव्यादादद्यादित्यत्रापि तस्यैवान्वयत उपस्थितत्वात् ।

स च ब्राह्मणस्वामिकोऽपि यदि तत्त्वेन न निश्चीयते तदा तं राजा हरेदेव । अन्यथा अनध्यवसायेनापरिग्रहे निधिग्राहकानेकवचनवैफल्यात् ।

अथ यदि निधिपात्रलिखनाद्वा दैवज्ञप्रश्नाद्वा तत्तथावध्रियते तदा राजापि न हरेत् । ब्राह्मणादृते इति नारदवचनात् । तस्मादेनं प्राप्य ब्राह्मणेभ्यो दद्यात् ब्रह्मस्वं ब्राह्मणो नयेदिति सम्भूयसमुत्थानप्रकरणीयबृहस्पतिवचनसंवादात् ततः सजातिरित्यनपत्यधनप्रकरणीयनारदवचनस्वरसाच्च ।

नन्वेवं परस्वादानं ब्राह्मणस्य स्यादिति चेत् न अस्मादेव वचनात् परकीयेऽपि निधौ तस्य स्वत्वावगमात् ।

स्वामी रिक्थक्रयविभागपरिग्रहाधिगमेष्विति ।

गोतमस्मरणाच्च ।

अधिगमो निध्यादेः प्राप्तिरिति निबन्धेषु व्याख्यानात् । नन्वेवमधिगमाविशेषेऽपि विष्णुवाक्ये भागभेदप्रतिपादनं द्रष्टव्यमिति चेत् न वाचनिकत्वादेव सुघटत्वात् ।

अथ तथापि परनिहिते स्वामिस्वत्वनिवृत्तिः कुत इति चेत् अज्ञायमानस्वामिको निधिर्द्विविधः। नष्टस्वामिको लुप्तस्वामिकश्चेति।

तयोराद्ये स्वाम्यभावादेव निर्विष्टकत्वम् अतस्तृणादिवदेव तत्र परिग्रहात्[1] स्वाम्यम्। द्वितीये तु प्रच्छन्नस्य स्वामिनोऽननुसन्धानाद्यनुमितादुपेक्षणादेव[2] स्वत्वनिवृत्तिः। अस्तु वा प्रनष्टाधिगतस्थलवदन्यस्वामिकस्यैव विनियोगः, अस्मादेव वचनात्।

न चैवं वाक्यभेदाद्युगपद्वृत्तिद्वयविरोधः स्यादितिवाच्यम्। उक्तादावपि विनियोगमात्रस्यैव विधानात्। एवञ्च उपस्थिते स्वामिनि प्रनष्टस्यैव निधेः परावर्त्तनम्। अत एव मिताक्षराव्याख्यानं तदुक्तभागभेदविकल्पपरिकल्पनञ्च घटते।

ननु स्तेयप्रतिषेधशास्त्रेण विरुद्धमिदं विनियोगवचनमिति चेन्न अर्थशास्त्रत्वात् गोभक्षितशस्यग्रहणस्योशनसा निषेधेऽपि गोतमेन विधानवत्, स्वदारनियमे शङ्खलिखिताभ्यामुक्तेऽपि नारदेन परानवरुद्धस्वदासीगमनाभ्यनुज्ञानवत्। ब्राह्मणस्याहिंस्यत्वे मनुनोक्तेऽपि कात्यायनेन आततायिनो हिंसाभ्यनुज्ञानवत्, मातुलकन्याया मातृसपिण्डत्वेन शातातपादिभिरुद्वहनप्रतिषेधेऽपि बृहस्पतिना दाक्षिणात्यानां तत्प्रतिपादनवच्च।

तस्मादुशनः-शङ्ख-लिखित-मनु-शातातपादिवचनानां धर्म्मशास्त्रत्वेन बलवत्त्वेऽपि यथा गोतम-नारद-कात्यायन-

१ ङ पुस्तके परिग्रहेण। २ ङ पुस्तके—देवेतरस्वत्वनिवृत्तिः।

बृहस्पतिवचनानामर्थशास्त्रत्वेन दण्डाभावपरतया चरितार्थत्वादविरोधस्तथा परस्वादानवर्ज्जनं यद्यपि धर्म्मशास्त्रत्वेन व्रतोपमञ्च बलवत्त्वात्, तथापि यस्तमपहस्तयित्वा निधिं गृह्णाति, तस्य राज्ञोऽविगर्हणमितरस्यादण्डनमिति निधिग्राहकवचनार्थः ।

एष चार्थः,—

अजडश्चेदपोगण्डो विषये चास्य भुज्यते ।
भागं तद्व्यवहारेण भोक्ता तद्धनमर्हति ॥

इति वदता मनुनैव स्पष्टमुक्तः, व्यवहारेणेति वचनात् धर्म्मतः पूर्व्वस्वामिन एवेत्यभियुक्तविवरणात् ।

एवञ्च ब्राह्मणेतरस्वामिकत्वेनैव निश्चितो निधिरादेयस्तदितरस्तु राज्ञा ब्राह्मणेभ्यो देय इति स्थितम् । इह ब्राह्मणादेः कृत्स्नैकदेशग्रहणं राजनिवेदनपूर्व्वकमेव ।

यदाह नारदः—

परेण निहितं लब्ध्वा राजन्युपहरेन्निधिम् ।
तेन दत्तन्तु भुञ्जीत स्तेनः स्यादनिवेदने ॥

स्तेनः स्यादिति स्तेयोक्तदण्डप्राप्त्यर्थम् ।

याज्ञवल्क्यः,—

अनिवेदितविज्ञातो दाप्यस्तं दण्डमेव च ।

तं निधिम् । दण्डं शक्त्यपेक्षमिति मिताक्षराकारः । सर्व्वस्वमिति तत्त्वम् ।

तथा च विष्णुः,—

अनिवेदितविज्ञातस्य सर्व्वस्वमाहरेत् ।

इति प्रकीर्णके उद्दिष्टवर्गः ॥

# अथ साहसमाह ।

नारदः,—

मनुष्यमारणं स्तेयं परदाराभिमर्षणम् ।
पारुष्यमुभयञ्चैव साहसं पञ्चधा स्मृतम् ॥

अत्र प्रकाशकृतत्वलक्षणमाक्षिप्तं सामान्यलक्षणम् । पञ्चधेति विभागः प्राणिहिंसा स्तेयं परदारपरिग्रहो वाक्पारुष्यं दण्डपारुष्यमित्युद्देशः । इह च साहसे रक्षितुर्ज्ञानवारणं नास्ति, स्तेये तु तदस्तीति तस्यासाहसत्वादुक्तविभागानुपपत्तिः स्तेयलक्षणे साहसलक्षणे चाव्याप्तिः । रक्षिसमक्षकृतस्यापि परद्रव्यग्रहणस्यापह्नवे स्तेयत्वादतत्समक्षकृतस्यापि परदारपरिग्रहादेः साहसत्वात् । अतस्तदुभयमनूद्याप्युपेक्ष्य—

सहसा क्रियते कर्म्म यत्किञ्चिद्बलदर्पितैः ।
तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥

इति नारदेनैवोक्तम् ।

एवञ्च समाख्यानुगतं बलकृतत्वमात्रमेतन्मते साहसलक्षणम् ।

तदेतत् स्पष्टमाह,—

आधिः साहसमाक्रम्य स्तेयमाधिश्छलेन तु ।

आधिः पीडनं तद्बलेन यत्र क्रियते तत्साहसम् । यत्र तु रक्षितुरपवार्य्य छलेन क्रियते तत् स्तेयमित्यर्थः ।

एतेन स्तेयस्य द्विरूपत्वमुक्तम् । अत एव स्तेयादीनामविशेषश्रुतावपि बलावष्टम्भेन क्रियमाणानामेषां साहस-

त्वम् । अतस्तत्रैव दण्डाधिक्यं न तु रहसि क्रियमाणाना-मिति । तत्र प्रतिपाद्योक्त एव दण्ड इति मिताक्षराकारः ।

एतदेवाभिसन्धाय याज्ञवल्क्येन ।

सर्व्वः साक्षी संग्रहणे चौर्य्य-पारुष्य-साहसे ।

इति पृथगुपादानं कृतम् ।

एवञ्च परिगणितेभ्योऽन्यस्यापि साहसत्वात्तत्र तदुक्तो दण्डो घटते ।

यथा बृहस्पतिः,—

हीनमध्योत्तमत्वेन त्रिविधन्तत्प्रकीर्त्तितम् ।
द्रव्यापेक्षो दमस्तत्र प्रथमो मध्य उत्तमः ॥

उदाहृतमिदं प्रकीर्णापहारप्रकरणे, नारदः,—

तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः ।
मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्चशतावरः ॥
उत्तमे साहसे दण्डः सहस्रावर इष्यते ।
वधः सर्व्वस्वहरणं पुरान्निर्व्वासनाङ्कने ॥
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे ।

तदङ्गं साहसकरणभूतम् । उत्तमसाहसे वधादयोऽप-राधतारतम्यात्समस्ता व्यस्ता वा योज्या इति मिताक्षरा ।

परद्रव्यस्य हिंसापहारादौ मूल्यसमं दममभिधाय— बृहस्पतिः,—

द्विगुणः कल्पनीयः स्यात् पुरुषापेक्षया नृपैः ।

याज्ञवल्क्यः,—

तन्मूल्याद्द्विगुणो दण्डो निह्नवे तु चतुर्गुणः ।

अस्मादेव विशेषदण्डविधानात् प्रथमसाहसादि-सामान्यदण्डविधानमपहारव्यतिरिक्तविषयमिति गम्यत इति मिताक्षराकारः।

बृहस्पतिः,—

हर्त्ता च घातनीयः स्यात् प्रसङ्गविनिवृत्तये।

अन्य[1]दण्डादिनानुपशाम्यतोऽभ्यासविषयमिदम्।

मनुः,—

द्रव्याणि हिंसेद्यो यस्य ज्ञानतोऽज्ञानतोऽपि वा।
स तस्योत्पादयेत्तुष्टिं राज्ञे दद्याच्च तत्समम्॥

तुष्टिं हिंसितप्रतिसंस्कारादिना। अत्र ज्ञानतोऽज्ञानतो वेति तुष्ट्युत्पादनापेक्षयोक्तम्। दण्डस्तु ज्ञानतो नाशित-मूल्यसमः। अज्ञानतस्तदर्द्धमिति नारायणेनोक्तम्।

तथाच,—

चर्म्मचार्म्मिकभाण्डेषु काष्ठलोष्ट्रमयेषु च।
मूल्यात्पञ्चगुणो दण्डः पुष्पमूलफलेषु च॥

चार्म्मिकमुपानत्पानपात्रादि। काष्ठमयं मान-पात्रादि। लोष्ट्रमयं कुम्भादि। प्रथमं चर्म्मपदं स्फुटार्थ-मिति रत्नाकरः।

सर्व्वत्राच साहसिनो गुणवत्त्वागुणवत्त्वाभ्यां आढ्यत्व-दरिद्रत्वाभ्याञ्च विषयस्य वैशिष्ट्यावैशिष्ट्याभ्यामपराधस्य गौरवलाघवाभ्याञ्च व्यवस्था।

नन्वेवमदूषयितुमवमतानुवादो व्यर्थः। न व्यर्थः—कामं स्तेयादिकं साहसं किन्तु तस्यापि बलदर्पाभिष्टम्भोपाधि-

१ ड अर्थ दण्डादिना, ग अर्थ दण्डादिना इति पाठः।

कृतत्वे दण्डाधिक्यमित्येवंपरत्वात् बलं विनापि साहस-प्रयोगोऽस्तीत्येवं परत्वाच्च ।

अस्य च बलं विनाऽपवारितकेन यानि दुष्टचेष्टितानि तेषां गौणं साहसत्वमभिधाय तेष्वपि यथोक्तदण्ड-प्राप्त्यर्थत्वात् ।

अत एव तैस्तैर्ऋषिभिस्तानि तानि वचनानि साहस-प्रकरणे पठितानि । तदनुसारिषु च कामधेन्वादि-निबन्धेषु तत्रैवावतारितानि । केवलमस्माभिः प्रकरण-भेदप्रतिज्ञानाद्विभाजकोपाधिभेदसम्वादनाय प्रकीर्णप्रकरणे संगृहीतानि ।

तत्र गृहे कण्टकादिक्षेपे याज्ञवल्क्यः,—

दुखोत्पादि गृहे द्रव्यं क्षिपन् प्राणहरन्तथा ।
षोडशाद्यः पणान् दण्ड्यो द्वितीयो मध्यमं दमम् ॥

गृहे परकीये, दुःखोत्पादि कण्टकादि, प्राणहरं सर्पादि ।

दण्ड इत्यनुवृत्तौ विष्णुः,—

गृहे पीडाकरं द्रव्यं प्रक्षिपन् पणशतम् ।

पीडातारतम्यादत्र व्यवस्था ।

इह गृहपदेन यत्र विश्रब्धं वर्त्तमानस्य कण्टकादिना वेधासम्भवस्तादृशं वर्त्मादिकमप्युपलक्ष्यते ।

यत्तु शारीरोऽङ्गच्छेदो वेत्यनुवृत्तौ मार्ग-रसद्रव्यदूषणे इति शङ्खलिखिताभ्यामुक्तम् । तत्र मार्गदूषणं तीक्ष्ण-शलाकादिना रसद्रव्यदूषणं विषादिनेति रत्नाकरकृता व्याख्यातमतो दण्डगौरवं घटते ।

तथा हि विषाक्ता लौहमयी शलाका कच्छपिका शृङ्गा-टिका प्रच्छन्नं शूलगर्भं गर्त्तम् विषाक्तं सर्पिः पयो वेत्यादिप्राणापहारव्याप्तम्। अव्याप्तावपि प्रयोक्तुः पर-जिघांसां गमयति ।

अत एव यत्र प्रयुक्तैरेतैः परस्य प्राणवधस्तत्र प्रयोक्तु-रपि शारीरो मारणरूपो दण्डः। यत्र तु पीडातिशयमात्रं तत्राङ्गच्छेद इति विकल्पो घटते ।

एवञ्च सर्पादेः प्राणहरत्वेऽपि तत्प्रक्षेप्तुर्जिघांसावगमेऽपि यत्र प्रक्षिप्तस्य तस्यापसरणात् पीडाभावस्तत्र याज्ञवल्क्योक्तो दण्ड इति द्रष्टव्यम् ।

अथ मार्गाद्युपघाते मनुः,—

समुत्सृजेद्राजमार्गे यस्त्वमेध्यमलादिकम् ।
स द्वौ कार्षापणौ दण्ड्योऽमेध्यञ्चाशु शोधयेत् ॥

राजमार्गः कात्यायनेनोक्तः,—

सर्व्वे जानपदा येन प्रयान्ति सचतुष्पदाः ।
अनिषिद्धा यथाकामं राजमार्गः स उच्यते ॥

अमेध्यं पुरीषमिति मनुटीका। अनापदि आर्त्त्यभावे। अस्यापवादमाह,—

आपत्कृते यथा वृद्धो गर्भिणी बाल एव वा ।
परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः ॥

परिभाषणं मा पुनः कृत्यमिति वाग्दमम् ।

विष्णुः,—

पथ्युद्यान उदकसमीपे अशुच्युत्करादित्यागे पणशतम्। तच्चापास्येत ।

पणशतं दण्ड्य इत्यनुषङ्गः।

कात्यायनः,—

तडागोद्यानतीर्थानि योऽमेध्येन विनाशयेत्।
अमेध्यं शोधयित्वा तु दण्डयेत् पूर्व्वसाहसम्॥

अथ गृहकुड्यादिभेदे विष्णुः,— दण्डानुवृत्तौ।

गृहकुड्याद्युपभेत्ता मध्यमसाहसं तच्च योजयेत्।

तद्गृहकुड्यादि योजयेत् प्रतिसंस्कुर्य्यात् भेदक इत्यर्थात्। एतच्च गृहसहितकुड्यादिगतप्रौढविदारणविषयम्।

अन्यच्च याज्ञवल्क्यः,—

अभिघाते तथा भेदे छेदे कुड्यावघातने[1]।
पणान्दण्ड्यः पञ्चदश विंशतिं तद्द्वयं यथा॥

कुड्यस्याभिघातो बन्धनशिथिलीकरणम्। तत्र पञ्चपणा दण्डः। भेदः क्वापि बन्धनादिविघटनं, तत्र दशपणाः। छेदो द्वैधीकरणम्। तत्र विंशतिपणाः। अवघात उक्तेभ्योऽधिको विमर्द्दः। तत्र चत्वारिंशत्पणा इत्यर्थः, इति रत्नाकरः। एवमेव मिश्राः।

मिताक्षरायान्तु कुड्यावघातन इत्यत्र कुद्दालपातन इति तद्द्वयमित्यत्र तद्व्ययमिति च पठितम्।

व्याख्यातञ्च। कुद्दालादिना कुड्याभिघाते विदारणे द्वैधीकरणे च यथाक्रमं पञ्चपणो दशपणो विंशतिपणश्च दण्डः। कुड्यस्यापासने पुनरेते त्रयो दण्डाः समुच्चिता

१ क्वचित् अवपातने इति पाठः।

दाप्याः। कुड्यस्य पुनःसम्पादनार्थञ्च धनं स्वामिने दद्यादित्युक्तम्।

हलायुधोऽप्याह,—

कुड्याभिघातमात्रे पञ्चपणाः, विदारणे दशपणाः, द्वैधीकरणे विंशतिः। अवपातने तु समुच्चित एवायं दण्डः। अभिहतादिदानञ्च स्वामिने सर्व्वत्रेति।

युक्तञ्चैतत् नैयायिकत्वात्। कामधेन्वादावपि तद्वय-मिति पाठः।

कात्यायनः,—

प्राकारं भेदयेद्यस्तु पातयेच्छातयेत वा।
वध्नीयादथवा मार्गं प्राप्नुयात् पूर्व्वसाहसम्॥

प्राकारः पाषाणेष्टकादिकृता वृतिः।

विष्णुः,—

गृहकुड्यादिभेत्ता मध्यमसाहसम्। तच्च योजयेत्।

मनुः,—

प्राकारस्यावभेत्तारं परिखाणाञ्च पूरकम्।
द्वाराणाञ्चैव भेत्तारं क्षिप्रमेव प्रमापयेत्॥

द्वाराणां द्वारमार्गादीनामिति नारायणः। अत्र प्रमा-पयेदित्यत्र मनुटीकायां प्रवासयेदिति कुल्लूकभट्टेन पठितम्। देशान्निर्व्वासयेदिति च व्याख्यातम्।

प्राकारभेदस्याल्पानल्पभावभेदेन दण्डव्यवस्था। भिन्न-प्रतिसंस्कारश्च गृहकुड्यादिवदत्रापि द्रष्टव्यो न्याय-साम्यात्।

अथ पूज्यातिक्रमादौ षोडशके याज्ञवल्क्यः,—

[१]अर्घ्याक्रोशातिक्रमकृद्भ्रातृभार्य्याप्रहारदः ।
सन्दिष्टस्याप्रदाता च समुद्र-गृहभेदकः ॥
सामन्तकुलिकादीनामपकारस्य कारकः ।
पञ्चाशत्पणिको दण्ड एषामिति विनिश्चयः ॥
स्वच्छन्दविधवागामी विक्रुष्टोऽनभिधावकः ।
अकारणे च विक्रोष्टा चण्डालश्चोत्तमान् स्पृशन् ॥
शूद्रप्रव्रजितानाञ्च दैवे पित्र्ये च भोजकः ।
अयुक्तं शपथं कुर्व्वन्नयोग्यायोग्यकर्म्मकृत् ॥
वृष-क्षुद्र-पशूनाञ्च पुंस्त्वस्य प्रतिघातकः ।
साधारणस्यापलापी च दासीगर्भविनाशकः ॥
पितापुत्रस्वसृभ्रातृ-दम्पत्याचार्य्यशिष्यकाः ।
एषामपतितान्योन्यत्यागी च शतदण्डभाक् ॥

अर्घ्य अर्घार्हः, आचार्य्यादिः । अतिक्रम आज्ञालङ्घनम् । प्रहारस्ताडनम् । सन्दिष्टस्य प्रेषितस्य द्रव्यस्य प्रतिश्रुतस्येति मिताक्षरा । समुद्रगृहभेदको मुद्रितगृहमुद्राभेदकोऽनियुक्त इति शेषः । सामन्ताः स्वगृहक्षेत्रादिस्थायिनः । कुलिकाः कुलजाताः । आदिशब्दादन्येऽपि स्वग्रामोद्भूताः स्वदेशोद्भूताश्च गृह्यन्ते ।

अथ कुड्यभिन्नद्रव्याभिघातादौ कात्यायनः,—

क्षतिर्भङ्गोऽवमर्द्दो वा कुर्य्याद्द्रव्येण यो नरः ।
प्राप्नुयात् साहसं पूर्व्वं द्रव्यभाक् स्वाम्युदाहृतः ॥

---

१ घ ङ पुस्तकद्वये आर्य्याक्रोश ।

क्षतिः किञ्चिन्नाशः। भङ्गोऽर्द्धनाशः। अवमर्द्दः सर्व्व-नाशः। अत्र अल्पाघातेन यदनुपयुक्तं भवति तन्महामूल्यं स्फटिकादिद्रव्यं विवक्षितम्। तेन सर्व्वत्र दण्डसाम्यं घटते।

हलायुधोऽप्याह,—

क्षतादीनां लघुगुरुभावेऽपि दण्डसाम्यं द्रव्यविषया-विषयतया समर्थनीयमिति। द्रव्यभागिति।

क्षतादिकर्त्ता एषामपकारकोऽनिष्टकृत्।

हलायुधस्तु एषां नोपकारं यः करोतीत्याह। मिश्रैस्तु आकारस्य नेति पठित्वा एषामनाह्वायक इति व्याख्यातम्।

स्वच्छन्दविधवागामी नियोगाभावेऽपि तद्गामी।

विष्णुः,—

चौराद्याक्रान्ते रक्षार्थमाहूतो नाभिधावकः सत्वरं तद्-सन्निधिगामी।

यदाह हलायुधः—शक्तः सन् यो न धावतीति। मिश्रैस्तु अनभिधायक इति पठित्वा प्रतिवचनाप्रदातेति व्याख्यातम्।

उत्तमान् ब्राह्मणादीन्। शूद्रप्रव्रजितानां दिगम्बरा-दीनाम्। अयुक्तं शपथं स्वमातरं गच्छामीत्याकारम्। अत्रानियुक्तः शपथकारीति विष्णूक्तमपि ग्राह्यम्। तस्याप्य-युक्तत्वात्। अयोग्यः शूद्रादिः। योग्यं कर्म्म प्रतिग्रहादि। तेन प्रतिग्रहाद्ययोग्यः प्रतिग्रहादिकारीत्यर्थः।

वृक्षेति पुंस्त्वस्य फलप्रसवशक्तेरौषधादिप्रयोगेण प्रति-घातकः। वृषो बलीवर्द्दः। पशूनां क्षुद्रता हस्त्याद्यपेक्षया।

विष्णुना तु पशूनां पुंस्त्वोपघातीति सामान्येनोक्तम्। व्याख्यातञ्च तत्र रत्नाकरकृता पुंस्त्वोपघातो गुद[१]च्छेद इति।

साधारणापलापी अपरसाधारणद्रव्ये निष्कम्पवञ्चकः। इह विक्रुष्टस्यानभिधावतः शतदण्डोऽयमाक्रोशकस्य घाताद्यभावे, तत्सत्त्वे तदनुसारी दण्ड इत्याह।

विष्णुः,—

एकं बहूनां निघ्नतां प्रत्येकस्योक्तदण्डाद्द्विगुणः। उत्क्रोशन्तमनभिधावतां तत्समीपवर्त्तिनाञ्च।

द्विगुणो घातकदण्डापेक्षया। तथा चाण्डालस्य शतदण्डोऽकामकृते स्पर्शे।

अन्यच्च विष्णुः,—

अस्पृश्यः कामचारेण अस्पृश्यान् स्पृशन् वध्यः। रजस्वलां शिफाभिस्ताडयेत्।

रजस्वलां स्पृशन्तीमिति शेषः। शिफा वृक्षनेत्रम्। तत्प्रभवया रज्वा प्रहरेदित्यर्थः। तथा शूद्रादेः प्रतिग्रहादेरनभ्यासे शतदण्डः।

अभ्यासे त्वाह मनुः,—

यो लोभादधमो जात्या जीवेदुत्कृष्टकर्म्मभिः।
तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत्॥

अत्र तु जात्या अधमो वैश्यादिः। उत्कृष्टस्य क्षत्रियादेरसाधारणकर्म्मणा जीवेत् तं धनहीनं कृत्वा स्वराष्ट्रान्निःसारयेदित्यर्थ इति हलायुधः। एवमेव रत्नाकरः।

---

१ क अङ्गच्छेदः।

तथा तत्रैवोक्तं दासीगर्भविनाशेऽच पणशतावबोधात्, ब्राह्मणीगर्भवधे सर्व्वस्वहरणावबोधात्—

शस्त्रावपाते गर्भस्य घातने चोत्तमो दमः।

इति याज्ञवल्क्यवचने तदन्यगर्भघातो विवक्षित इति।

मिताक्षरायामपि दासी ब्राह्मणीगर्भव्यतिरेकेणेति शेषमन्तर्भाव्य वचनमिदमाख्यातम्। तत्र ब्राह्मणीगर्भवधे सर्व्वस्वहरणं यद्यपि शृङ्गग्राहिकतया न क्वचिदुक्तं तथाप्यौचित्यादेव तत्र द्रष्टव्यम्।

यद्यपि मिताक्षरायां हत्वा गर्भमविज्ञातमित्यत्र ब्रह्महत्यातिदेशं वक्ष्यतीत्यत्रोक्तं तदपि तदभिप्रायकमिति प्रतिभाति।

इह च प्रहारस्य करणत्वमपेक्षितं शस्त्रावपातस्य सन्निधिश्रुतत्वात्। परगात्रपरस्यापि तस्य प्रकृतेरनन्वयात्। उपस्थितत्वात् वचनान्तरसंवादाच्च।

यथाहोशनाः,—

परिक्लेशेन पूर्व्वः स्याद्भैषज्येन तु मध्यमः।
प्रहारेण तु गर्भस्य पातने दण्ड उत्तमः॥

परिक्लेशेन आयासेन गर्भस्येत्यन्वयः। भैषज्येन गर्भस्य पातने इति सम्बन्धः।

विष्णुः,—

पितृपुत्राचार्य्ययाज्यर्त्विजामन्योन्यापतितत्यागी। न च तान् जह्यात्।

तान् पतितानिति शेषः। त्यागो विहितसत्काराद्यनाचरणम्। अत्यागश्च निषिद्धसम्भाषणाद्याचरणम्।

अयं शतदण्डो विदुषोरन्योन्यत्यागे।

न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति।
त्यजन्नपतितानेतान् राज्ञा दण्ड्यः शतानि षट्॥

इति मनूक्तः शतदण्डो विदुषा कामादेकतरत्यागे द्रष्टव्यः।

अत्याज्या माता तथा पिता सपिण्डा गुणवन्तः सर्व एवात्याज्याः। यस्त्यजेत् कामादपतितान् स दण्डं प्राप्नुयाद्विशतम्।

इति शङ्खलिखितोक्तो द्विशतदण्डः कामादविदुषैकतरत्यागे द्रष्टव्यः।

अथ मार्गादानादौ विष्णुः,—

येषां देयः पन्थास्तेषामपथदायी कार्षापणपञ्चविंशतिपणान् दण्ड्यः। आसनार्हस्य आसनमददत्, पूजार्हमपूजयंश्च, प्रातिवेश्यब्राह्मणे निमन्त्रणातिक्रमे च निमन्त्रयित्वा भोजनादायी च निमन्त्रितस्तथेत्युक्त्वा चाभुञ्जानः सुवर्णमाषकं निकेतयितुश्च[1] द्विगुणमन्नम्।

अत्र मनुः,—

चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः।
स्नातकस्य च राज्ञश्च पन्था देयो वरस्य च॥

चक्री चक्रयुक्तरथादियानवान्। दशमीं गतो नवतिवर्षोपरिवयाः। वरो विवाहाय प्रस्थितः। एतदाचार्य्योपाध्यायगुर्व्वादीनां विद्यावृद्धादीनाञ्चोपलक्षकम्।

अपथदायी उक्तानां पन्थानमददानः। आसनार्हस्य

१ मूले निमन्त्रयितुश्च।

आसनादाने पूजनार्हस्यापूजने पञ्चविंशतिरित्यनुषञ्जनीयं चयाणां तुल्यरूपत्वात् । [1][एवं सुवर्णमाषः पूर्व्वयोरपि द्रष्टव्यस्त्रयाणां तुल्यरूपत्वात्] ।

प्रातिवेश्यब्राह्मणनिमन्त्रणातिक्रामी निमन्त्रणावसरे प्राप्ते दोषं विना निरन्तरगृहवासिब्राह्मणनिमन्त्रणास्वीकारी । निकेतयितुर्निमन्त्रयितुः ।

शतदण्डानुवृत्तौ 'पन्थानञ्चाददानस्तु' इति मनुवचनमाचार्य्यादिपूज्यतमविषयमित्यविरोधः ।

मनुः,—

प्रातिवेश्यानुवेश्यौ च कल्याणे विंशतिद्विजे ।
अर्हावभोजयन् विप्रो दण्डमर्हति माषकम् ॥

आनुवेश्य एकान्तरगृहवासी । कल्याणमिह माङ्गल्यकर्म्म, विंशतिर्द्विजा भोज्यन्ते यत्र तद्विंशतिद्विजम् । एतदुभयं ब्राह्मणभोजननिमित्तमात्रोपलक्षणम् । विप्र इति वचनात् क्षत्त्रियस्य न दोष इति नारायणः ।

तथा,—

श्रोत्रियः श्रोत्रियं साधुं भूतिकृत्येषु भोजयन् ।
तदन्नं द्विगुणं दाप्यो हैरण्यञ्चैव माषकम् ॥

श्रोत्रियः सदाचारवान् । श्रोत्रियं तथाविधमेव, साधुं गुणवन्तम् । स च प्रकृतत्वात् प्रातिवेश्यानुवेश्यरूप एवेति कुल्लूकभट्टः । भूतिकृत्येषु विवाहादिष्विति मनुटीका । तदन्नं तद्भोज्यमन्नं द्विगुणं दाप्यः, अभोजितायेति रत्नाकरः ।

---

१ घ पुस्तके [ ] चिह्नितांशो नास्ति ।

भोजनमकृतवते इति तत्त्वम् । विष्णुवचनेनैकमूलकत्वात् । हिरण्यमाषकं दाप्यो राज्ञे ।

अत्र प्रतिभाति—एतत् प्रातिवेश्यानुवेश्यव्यतिरिक्त-साधुश्रोत्रियविषयं विंशतिद्विज इति विशेषणस्वरसात् ।

एवञ्च पूर्व्ववाक्येऽपि माषः सौवर्ण एव वाच्यः, प्रकरणात् विषयसाम्याच्च ।

अर्हो निमन्त्रयितुरर्हन्निमन्त्रणास्वीकारिणा विष्णूक्तेन तुल्यत्वात् सन्निहितेन निर्द्दोषेण व्यवहितस्य सगुणस्य तुल्यत्वाच्च । पूर्व्वञ्च दोषाभावे सति सान्निध्यस्यैव गुणत्वौ-चित्येन निमन्त्रणप्रयोजकत्वात् ।

यत्तु हलायुधेन तत्रोक्तं माषकश्चात्र रौप्यो बोद्धव्यो मानवेनोत्तरश्लोकेन अतोऽधिके भूतिकृत्यात्मके प्रातिवेश्य-श्रोत्रियाभोजनरूपे अपराधे विशिष्य हिरण्यमाषकदण्डा-भिधानादिति । तच्चिन्त्यम् ।

उत्तरश्लोकविषयस्य दर्शितत्वात् । तस्यापि प्रातिवेश्य-विषयत्वे दण्डभेदानुपपत्तेर्भेदहेत्वभावात् गुणवत्त्वस्य व्यवहितनिमन्त्रणप्रयोजकत्वेन चरितार्थत्वात् ।

न च पूर्व्ववाक्ये विंशतिद्विज इति वचनान्माङ्गल्यस्य च कर्म्मणो लाघवम् । उत्तरवाक्ये भूतिकृत्य इतिवचनात्तस्यैव गौरवं विवक्षितम् । अतः प्रभूतेऽपि कर्म्मणि सन्निहित-श्रोत्रियानिमन्त्रणमित्यधिकोऽपराध इति युक्तं दण्डाधिक्य-मिति वाच्यम् ।

विंशतिद्विजेऽपि कर्म्मणि बाधकाभावे प्रातिवेश्यपरित्यागे अपराधाधि[1]क्यात् ।

१ क अपवाधाधिक्यात् ।

न च सन्निहित एव श्रोत्रियसाधावनिमन्त्रिते हैरण्यो माषोऽनैवंभूते राजत इति व्यवस्थेति वाच्यम्।

तरिकः स्थानिकं शुल्कं गृह्णन् दाप्यः पणान् दश।
ब्राह्मणान् प्रातिवेश्यांश्च तद्वदेवानिमन्त्रयन्॥

इति याज्ञवल्क्यवचनविसंवादात्।

मम तु सन्निहितनिर्गुणब्राह्मणविषयत्वेनास्य सामञ्जस्यात्।

द्विजे भोज्ये तु सम्प्राप्ते पापे नास्ति व्यतिक्रमः।

इति कामधेनुलिखितमत्स्यपुराणदर्शनात्। तस्मादुत्तरवाक्यं यथाव्याख्यातविषयमेव।

निमन्त्रणास्वीकारिणो भोजनादायिनोऽभुञ्जानस्यानिमन्त्रयितुश्च चतूर्णामुक्तरूपाणां सौवर्ण एव माषको दण्डः। उत्तरयोर्द्विगुणभोजनदानमधिकम्।

अस्तु वा सन्निहितेष्वेव गुणतारतम्यात् सौवर्णो माषो दशपणा राजतो माष इति व्यवस्था।

हलायुधस्त्वाह तुल्यरूपे विप्रे हैरण्यं माषकं ततो हीने दशपणाः, ततो हीनतरे रूप्यमाषकमिति व्यवस्था।

अथाहेतुकप्रतिग्रहत्यागे विष्णुः,—

आमन्त्रितो द्विजो यस्तु वर्त्तमानः प्रतिग्रहे।
निष्कारणं न गच्छेत्तु स दाप्योऽष्टशतं दमः॥

प्रतिग्रहार्थं निमन्त्रितो विना कारणेन यो न गच्छति तस्याष्टोत्तरशतपणो दण्ड इत्यर्थः।

इह च प्रतिग्रहान्तरे वर्त्तमानस्य प्रकृते वैमुख्यं दातुर्दोषमुल्लिखतीति वाक्यपारुष्यवदेष दोषः।

अथ ब्राह्मणादिदूषणे दण्ड इत्यनुवृत्तौ,[1]

विष्णुः,—

अभक्ष्येण ब्राह्मणस्य दूषयिता षोडशसुवर्णान्, जात्यपहारिणा शतम्, सुरया वध्यः । क्षत्रियदूषयितुस्तदर्द्धम् । वैश्यदूषयितुस्तदर्द्धम् । शूद्रदूषयितुः प्रथमसाहसम् ।

अत्र अभक्ष्येणान्नपानादिमिश्रितेन स्वरूपेण वेति मिताक्षरा । अभक्ष्यमपेयस्याप्युपलक्षणम् ।

अभक्ष्यमथवाऽपेयं ब्राह्मणान् ग्रासयन् द्विजान् ।

इति मनुसंवादात् ।

तेन अभक्ष्येण विण्मूत्रादिना । जात्यपहारिणा लशुनादिना । शूद्रस्याभक्ष्यं कपिलादुग्धादि । जात्यपहारि निषिद्धपञ्चनखमांसादि । तदर्द्धमिति अभक्ष्येण दूषणे अष्टौ सुवर्णान् जात्यपहारिणा पञ्चाशदित्यर्थः । तदर्द्धमिति पञ्चविंशतिसुवर्णानित्यर्थः ।

एतदुक्तमब्राह्मणादिविषयम् । अन्यत्र त्वाह

याज्ञवल्क्यः,—

द्विजं प्रदूष्याभक्ष्येण दण्ड उत्तमसाहसः ।
क्षत्रियं मध्यमं वैश्यं प्रथमं शूद्रमर्द्धिकम् ॥

यच्च,—

कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी ।
त्र्यङ्गहीनास्तु कर्त्तव्याः दाप्याश्चोत्तमसाहसम् ॥

इति याज्ञवल्क्यवचनम् ।

तत्र त्रीण्यङ्गानि नासा-कर्ण-कररूपाणीति मिताक्षरा-रत्नाकरादयः ।

---

१ क्वचित् पाठः दण्डानुवृत्तौ ।

यच्च एकपादः कार्य्य इत्यनुवृत्तौ विमांसविक्रयी चेति विष्णुवचनम्।

अत्र विमांसं विरुद्धमांसम्[1]। शृगालादिमांसमिति यावत्।

यच्च,—

अभक्ष्यस्य अविक्रेयस्य च विक्रयी। देवप्रतिमाभेदकश्चोत्तमसाहसं दण्डः।

इत्यपरं विष्णुवचनम्। सर्व्वत्राच्च विक्रयो न दूषणपरः। अन्यथा औषधत्वेनापि तद्विक्रये दोषः स्यात्।

एवञ्चामीषां वाक्यानां उत्तमानुत्तमविषयतया वा व्यवस्था द्रष्टव्या।

अत्र विष्णुः,—

जातिभ्रंशकरस्याभक्ष्यस्य च भक्षयिता विवास्यः।

भक्षयिता भोक्ता कामादिति शेषः।

ग्रसितारः स्वयं कार्य्या राज्ञा निर्व्विषयास्तु ते।

इति मनुदर्शनात्।

अथ अभिचारादौ मनुः,—

अभिचारेषु सर्व्वेषु कर्त्तव्यो द्विशतो दमः।
मूलकर्म्मणि चानाप्तैः कृत्यासु विविधासु च॥

अभिचारेषु श्येनादिषु शास्त्रीयेषु सूचीलिखन-पादपांशुग्रहणादिष्वलौकिकेषु अनपराधिनं प्रति क्रियमाणेषु। मूलकर्म्मणि भेषजादिप्रयोगे अनाप्तैरहितैषिभिः क्रियमाणे। कृत्यासु उच्चाटनादिरूपासु रोगाद्युत्पत्त्यर्थम्, मातृ-

[1] क पुस्तके कुमांसेत्यधिकम्।

ग्रहणाद्युत्थापनरूपासु चासहशीषु कर्त्तुर्द्विशतो दम इत्यर्थः।

अभिचार्य्यमाणस्य मरणाभावपक्षे अयं दण्डो मरणे तु मनुष्यमारणदण्ड एवेति मनुटीकायां कुल्लूकभट्टः।

प्रकाशतस्करप्रकरणे मूलकर्म्म वशीकरणं धन-ग्रहणार्थञ्च तस्य प्रयोगः। इह तु परमारणाद्यर्थं भेषजादिप्रयोगः, अनाप्तैरिति स्वरसादिति प्रकरणभेदः।

नारायणस्त्वाह अनाप्तः—असम्बन्धी। मूलादिप्रयोगरूपं वशीकरणम्। तस्मिन्नसम्बन्धिविषये कृते दोषो न भर्त्रादाविति।

अथ अदुष्टदूषणादौ मनुः,—

अदूषितानां द्रव्याणां दूषणे भेदने तथा।
मणीनामपवेधे च दण्डः प्रथमसाहसः॥

दूषणे अपद्रव्यसंसर्गेण दुष्टत्वापादने। भेदने येषां भेदमात्रेणैव विघटनं तेषां भेदे। मणीनां मुक्तादीनामपवेधे दोषावहे वेधकरणे।

अथ जारापलापादौ याज्ञवल्क्यः,—

जारं चौरेत्यभिवदन् दाप्यः पञ्चशतं दमम्।
उपजीव्य धनं मुञ्चन् तदेवाष्टगुणीकृतम्॥

उपजीव्य उपादाय, यो जारं कुलभ्रंशादिभयात् स्वस्त्रीदोषमपह्नुवानश्चौर इत्यपह्नुते पञ्चपणशतानि दाप्यः।

यस्तु तस्मादुत्कोचादिरूपं धनं गृहीत्वा तं परित्यजति स तदुत्कोचधनादष्टगुणं दाप्य इत्यर्थः। इति हलायुधचण्डेश्वरादयः। पञ्चविंशतिमष्टगुणामिति मिश्राः।

अथ अविक्रय्य-विक्रये नारदः,—

अविक्रेयाणि-विक्रीणन् ब्राह्मणः प्रच्युतः पथः ।
मार्गे पुनरवस्थाप्यो राज्ञा दण्डेन भूयसा ॥

यद्यपि,—

वैश्यवृत्तावविक्रेयं ब्राह्मणस्य पयो दधि ।
घृतं मधु मधूच्छिष्टं लाक्षा-क्षार-वसा-रसम् ॥
मांसौदनं तिलं क्षौमं सोम-पुष्प-फलोपलाः ।
मनुष्यविषशस्त्राम्बु-लवणापूपवीरुधः ॥
शण-कौशेय चर्म्मास्थि-कुतपैकशफा मृगाः ।
उदश्वित्केश पिण्याक पाकाद्यौषधयस्तथा ॥

एवमाद्यभिधाय नारदेनैतदुक्तम् तथाप्यन्यानि ग्राह्याणि तुल्ययोगक्षेमत्वात् ।

अत एव व्याख्यातं चण्डेश्वरेण-अविक्रेयाणि-धर्म्मशास्त्रेषु प्रतिषिद्धविक्रयाणीति । भूयसा उत्तमसाहसेन अविक्रेयस्य विक्रयी चोत्तमसाहसं दण्ड्य इति विष्णुसंवादात् ।

अथ संक्रमादिभेदे मनुः,—

संक्रमध्वजयष्टीनां प्रतिमानाञ्च भेदकः ।
प्रतिकुर्य्याच्च तत् सर्व्वं दद्यात् पञ्चशतानि च ॥

संक्रमो जलोपरिगमनोचितकाष्ठादिवन्धः । साँक इति प्रसिद्धः । ध्वजो राजद्वारदेवतायतनादिचिह्नम् । यष्टिर्हट्टनागायतनादियष्टिः । पुष्करिण्यादियष्टिरिति-मनुटीकायां कुल्लूकभट्टः । ग्रामादिपताकायष्टिरिति नारायणः । प्रतिमा देवताप्रतिकृतिः ।

सर्व्वज्ञस्त्वाह प्रतिमाऽच मनुष्यप्रतिकृतिर्देवप्रतिमासु वध एव कोष्ठागारेत्यादिना तदायतनभेद एव तस्योक्ते-रिति। तदेतद्वाक्यस्य चौर्य्यपरत्वादनादेयम्। प्रतिकुर्य्यात् पूर्व्ववत् संस्कुर्य्यात्।

कात्यायनः,—

हरेच्छिन्द्याद्दहेद्वापि देवानां प्रतिमा यदि।
तद्गृहञ्चैव यो भिन्द्यात् प्राप्नुयात् पूर्व्वसाहसम्॥

विष्णुः,—

प्रतिमाभेदकश्चोत्तमसाहसं दण्ड्यः।

शङ्खलिखितौ,—

प्रतिमाराम-कूप-संक्रम-ध्वज-सेतु-निपानभङ्गेषु तत्-समुत्थापनं प्रतिसंस्कारः, अष्टशतञ्च दण्डः।

निपानं गवादीनां जलपानार्थं कूपसमीपकृतो जला-धारः। सर्व्वभङ्गे समुत्थापनं तज्जातीयस्य करणम्। एकदेशभङ्गे तस्यैव संस्कारः।

हन्यादित्यनुवृत्तौ विष्णुः,—सेतुभेदकृतश्च।

याज्ञवल्क्यः,—

सेतुभेदकरञ्चाप्सु शिलां बद्धा प्रवेशयेत्।

अत्र प्रतिमाभङ्गे तदुत्कर्षापकर्षतारतम्यात् तद्भञ्जकस्य धनिकाधनिकत्वाभ्याञ्चोत्तमादिसाहसदण्डः पणशतात्मक-दण्डश्च व्यवस्थाप्यः।

सेतुभङ्गे तु यद्यसावधिकं तद्भङ्गं कुर्य्यात् यथोक्तो वधः। अन्यत्र शङ्खोक्तो दण्ड इति व्यवस्था।

अथ तडागादिभेदादौ मनुः,—

यस्तु पूर्व्वनिविष्टस्य तडागस्योदकं हरेत्।
आगमञ्चाप्यपां भिन्द्यात् स दाप्यः पूर्व्वसाहसम्॥
तडागभेदकं हन्यादप्सु शुद्धवधेन वा।
तच्चापि प्रतिसंकुर्य्यात् दद्याच्चोत्तमसाहसम्॥

पूर्व्वनिविष्टस्य पूर्व्वस्थितस्य स्नानपानाद्युपयुक्तस्येति यावत्। हरेदिति स्वसमीपतडागं नयेदित्यर्थ इति नारायणः। आगमोऽत्र तडागपूरणीनामपां प्रवेशमार्गः। भिन्द्यादित्यत्र वन्ध्यादिति मनुटीकायां कुल्लूकभट्टेन पठितम्। तडागभेदकं सेतुभेदादिना कृत्स्न-तडागजल-नाशकमिति तेनैव व्याख्यातम्।

नारायणेन तु तडागभेदकं तडागबहिर्जलनिःसारण[1]-मिति वदता कृत्स्नत्वं न विवक्षितम्। अप्सु मज्जनेनेति शेषः।

शुद्धवधेन जलादन्यत्र। गङ्गातीरत्वादि[2]नेति रत्नाकरः। नारायणेन शुद्धवधः शिरश्छेदः, यस्त्वङ्गुलीकरच्छेदादिना-वधः स दुःखहेतुत्वादशुद्ध इत्युक्तम्।

एतत् कामकृते। अकामकृते तु विगुणीभूतं तडागादि सम्यक्विधाय उत्तमसाहसं दद्यादिति व्याख्यातम्।

तच्चापीत्यत्र तद्वापीति पठित्वा कुल्लूकेन तूक्तं यद्वा यदि तडागं संस्कुर्य्यात्तदोत्तमसाहसो दण्ड इति।

शारीरोऽङ्गच्छेदो वेत्यनुवृत्तौ शङ्खलिखितौ—

वापीतडागोदपानभेदे।

---

१ क निःसरणम्। २ क नालीवन्धादिनेति।

अत्र स्वस्य संजीवनाद्यर्थं तडागोद्हरणे पूर्व्वसाहसम्। उपयोगतारतम्यादपकृष्टस्य तडागस्य भेदे अङ्गभेदः। उत्कृष्टस्य कृत्स्नजलभेदे शारीरो वधात्मकः। स च वधस्तडागोत्कर्षविशेषमादाय शुद्धो विचित्रो वेति व्यवस्था।

अपराधतारतम्याद्वा कामाकामभेदाद्वा साऽस्तु। अस्तु वा तोयाधारतारतम्यात् पूर्व्वसाहसाङ्गच्छेदयोः शुद्धविचित्रयोश्च व्यवस्था।

तत्र दशहस्ता वापी। शतहस्ताधिकस्तडागः। तदधिकं निपानमिति वैदेशिकस्मृतिः।

देवीपुराणे,—

क्रूपं पञ्चकरादूर्द्ध्वं यावद्दुर्गस्तदुत्तरम्।
वापी दण्डद्वयादूर्द्ध्वं दशबाह्वोर्न्नृपोत्तम॥
वाप्या दशगुणः प्रोक्तस्तडागोऽष्टविधो मया।

कपिलपञ्चरात्रे,—

शतधन्वन्तरा वापी पुष्करिणी चतुर्गुणा।
दीर्घौ नवशता कार्य्या त्रिशता विस्तृता स्मृता॥
[1]सहस्रेण तडागः स्यादयुतेन तु सागरः।

अथ विषाग्न्यादिप्रयोगे याज्ञवल्क्यः,—

विषाग्निदां स्त्रियञ्चैव पुरुषघ्नीमगर्ब्भिणीम्।
सेतुभेदकरीञ्चैव शिलां बद्धा प्रवेशयेत्॥
विषाग्निदां पतिगुरु निजापत्यप्रमापणीम्।
विकर्ण-कर-नासौष्ठीं कृत्वा गोभिः प्रमापयेत्॥

---

१ क पुस्तके अधिकः पाठः—
द्रोणैश्च दशभिर्वापी आहारो विप्रकैः स्मृतः।
आहारपञ्चकैस्तद्वत् सागरः परिकीर्त्तितः॥

अत्र मिताक्षरा, अपरवधार्थमन्नपानादिषु विषदानम्। दाहार्थं ग्रामादिषु अग्निदानम्। गोभिरिति अदान्तै-र्बलीवर्द्दैः प्रवाह्य मारयेदित्यर्थ इति।

यथोक्तायाः स्त्रिया यदा गर्ब्भो न भवति तदा शिलां वद्धा जले प्रवेशनम्। अन्यथा कर्णादिच्छेदपूर्व्वको वधः।

विषाग्निदामिति वाक्यभेदादपौनरुक्त्यम्। प्रथमे विषा-ग्निदानस्य पतिव्यतिरिक्तमरणोद्देश्यकत्वं विवक्षितं विषा-ग्निदां पुरुषघ्नीमिति निर्द्देशात्। द्वितीये पत्यादिमरणोद्देश्य-कत्वं विषाग्निदां पत्यादिप्रमापणीमिति निर्द्देशात्। उभ-यत्र हेतु-हेतुमद्भावेनान्वयस्यापेक्षितत्वादिति प्रतिभाति।

मिताक्षरायान्तु प्रथमे विषाग्निदामित्यत्र विप्रदुष्टा-मिति पठितं व्याख्यातञ्च विशेषतः प्रदुष्टामिति।

अत्र विषाग्निदामित्यादौ लिङ्गं न विवक्षितम्। अतः पुरुषस्याप्येष दण्डः। तेन विषादिना रसद्रव्यदूषणे शारीरोऽङ्गच्छेदो वेति शङ्खलिखितयोः सामान्याभिधानं घटत इति प्रतिभाति।

यमः,—

उल्कादिदायकाश्चैव घातकाश्चोपघातकाः।
स्वशरीरेण दण्ड्याः स्युर्नरा आह प्रजापतिः॥

निषिद्धब्राह्मणादीतरविषयमिदम्। स्वशरीरेण दण्डो-ऽप्यपराधानुरूपो विवक्षित इति रत्नाकरः।

युक्तञ्चैतत् मनुष्याणां पशूनाञ्चेत्यादिदण्डपारुष्य-प्रकरणोक्त-मनुवचनसंवादात्।

याज्ञवल्क्यः,—

क्षेत्र-वेश्म-ग्राम-वन-विवीत खलदाहकाः।
राजपत्न्यभिगामी च दग्धव्यास्तु कटाग्निना॥

क्षेत्रं पक्वफलशस्योपेतमिति मिताक्षरा। वनमटवी, क्रीड़ावनं वा। विवीतं गवाद्युपयोगार्थं रक्षितयवसो भूप्रदेशः। कटो वीरणमयः।

अथ राजकोषापहारादौ कात्यायनः,—

राजार्थमोषकाश्चैव प्राप्नुयुर्विविधं वधम्।

मनुः,—

राज्ञः कोषापहर्त्तृंश्च प्रतिकूलेष्ववस्थितान्।
घातयेद्विविधैर्दण्डैररीणाञ्चोपजापकान्॥

कोषो राज्ञोऽर्थसञ्चयः। राज्ञः प्रतिकूलेष्ववस्थितान् तदाज्ञाव्याघातकारिण इति मनुटीका। उपजापकान् राष्ट्रभेदकानिति रत्नाकरः। शत्रूणां राज्ञा सह वैर[1]बुद्धि-कारिण इति कुल्लूकभट्टः। अरीणां सम्बन्धिन उपजापकान् स्वप्रकृतिभेदकानिति नारायणः।

एतद्वचनं मिताक्षराकृता कोषापहरणादौ वध एवेति कृत्वावतारितं व्याख्यातञ्च विविधैः सर्व्वस्वापहाराङ्गच्छेद वधरूपैरित्यर्थ इति।

मनुटीकायान्तु अपराधापेक्षया कर-जिह्वाच्छेदना-दिभिरित्युक्तम्।

---

१ घ भेदबुद्धि—।

मत्स्यपुराणे,—

राज्ञः कोषापहर्त्तृंश्च प्रतिकूलेष्ववस्थितान्।
अरीणामुपकर्त्तृंश्च घातयेद्विविधैर्द्दमैः॥

मनुः,—

हन्याद्द्विट्सेविनस्तथा।

द्विट्सेविनो राजद्वेषिसेवकान्।

इह राजकोषहारिण इव राजविरोधिनोऽपि ब्राह्मणस्य वधादिप्रत्याम्नायेन धनदण्डेनासमापन्नस्य[1] प्रवासनेऽपि निश्चितविरुद्धाचारस्य (?) वैजात्यादागत्य वा तथैव विरुद्धानस्य[2] यावज्जीवं यावत्समापत्ति वा वन्धनमुचितं प्रथमपरिच्छेदोपान्तदर्शितव्यवस्थानुसारात्।

अथ प्रकृतिदूषणे मनुः,—

कूटशासनकर्त्तृंश्च प्रकृतीनाञ्च दूषकान्।
स्त्री-वाल-ब्राह्मणघ्नांश्च हन्याद्द्विट्सेविनस्तथा॥

प्रकृतीनाममात्यानां दूषकान् विनादोषं दोषोद्भावकानिति रत्नाकरः। एवमेव मिश्राः।

विष्णुः,—

स्वाम्यमात्यदुर्ग-कोष-दण्ड-राष्ट्रमित्राणि प्रकृतयः। तद्दूषकांश्च हन्यात्।

अमात्यमच प्रधानशिष्टः।

अथ अदासीदासीकरणे। शङ्खलिखितौ,—

शारीरोऽङ्गच्छेदो वेत्यनुवृत्तौ अदासी-दास-सम्प्रदानकरणे।

---

१ घ पुस्तके समासन्नस्य। २ ङ विरुद्धाचारस्य इति पाठः।

अदास्या दासाय दाने तदुत्कर्षापकर्षतारतम्याद्वधो-ऽङ्गच्छेदो वेत्यर्थः । आस्कन्दविषयमिदं विवाहादावनुमतौ तु न दोषः ।

अथ राजानिष्टप्रकाशने याज्ञवल्क्यः,—

द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा ।
विप्रत्वेन शूद्रस्य जीवतोऽष्टशतो दमः ॥

राजद्विष्टादेशकृतः—द्वितीये वर्षे राजा मरिष्यतीत्या-देशकारी । अत्र मिताक्षराकारः यो ज्योतिःशास्त्र-विद्गुर्व्वादिहिते (?) अव्यतिरिक्तो राज्ञो द्विष्टमनिष्टं संवत्-सरान्ते तु राज्यच्युतिर्भविष्यतीत्यादिरूपमादेशं करोति तस्याष्टशतो दण्डः ।

ब्राह्मणानुवृत्तौ यमः,—

राजद्विष्टानि यो भाषेद्दण्डो निर्व्विषयः स्मृतः ।

निर्व्विषयो देशान्निःसारणम् ।

अथ खिन्नवृषादिवाहने मनुः,—

गोकुमारी-देवपशूनुक्षाणं वृषभन्तथा ।
वाहयन् साहसं पूर्व्वं प्राप्नुयादष्टमं वधे ॥

गोकुमारी वृषेण संयुक्ता गौः । देवपशुर्देवतोद्देशे-नोत्सृष्टपशुः । उक्षा उक्ष सेचन इति धात्वर्थानुसाराद्वीज-मोक्ता वृषः । वृषभो जीर्णवृषः ।

वृषाधिकारे वृहस्पतिः,—

श्रान्तान् क्षुधार्त्तान् तृषितानकाले वाहयेत्तु यः ।
स गोघ्नो निष्कृतिं कार्य्यो दाप्यो वाप्यथवा दमम् ॥

कात्यायनः,—

श्रान्तान् क्षुधार्त्तान् तृषितानकाले वाहयेत्तु यः ।
खरगोमहिषोष्ट्रादीन् प्राप्नुयात् पूर्व्वसाहसम् ॥

अथात्मघाते अङ्गिराः,—

आत्मानं घातयेद् यस्तु रज्ज्वादिभिरुपक्रमैः ।
मृतोऽमेध्येन लेप्तव्यो जीवेच्चेद्द्विशतो दमः ॥

अन्येष्वप्येवंजातीयेष्वयं दण्ड इति प्रतिभाति न्यायसाम्यात् ।

तानाह मनुः,—

जलाग्न्युद्बन्धनभ्रष्टाः प्रव्रज्यानाशकच्युताः ।
विषप्रतपनप्रायःशस्त्रघातच्युताश्च ये ॥
सर्व्वे ते प्रत्यवसिताः सर्व्वलोकबहिष्कृताः ।

यत्तु प्रव्रज्यावसितानां प्रवासनाङ्कन-दासीकरणादि पूर्व्वमुक्तं तत् कामचारविषयमिदन्त्वशक्तिविषयमिति न विरोधः ।

---

अथ पुत्रादिहीनाया धनं गृह्णतः परस्य दण्डः ।

तद्भर्तृदायमित्युपक्रम्य कात्यायनः,—

अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता ।
भुञ्जीतामरणात् क्षान्ता दायादा ऊर्द्ध्वमाप्नुयुः ॥

मनुः,—

वशाऽपुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च ।
पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च ॥

जीवन्तीनान्तु तासां ये तद्धरेयुः स्वबान्धवाः ।
तान् शिष्याच्चौरदण्डेन धार्म्मिकः पृथिवीपतिः ॥

वशा वन्ध्या । अपुत्रा नष्टपुत्रा । निष्कुला प्रनष्टमातापितृकुलेति । मृते भर्त्तरि अधिकार्य्यन्तराभावात्तत्सम्बन्धेन वा यत् संक्रान्तं यच्च तासां सौदायिकं तदित्यर्थः ।

कात्यायनः,—

न भर्त्ता नैव च सुतो न पिता भ्रातरो न च ।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः ॥
यदि त्वेकतरोऽमीषां स्त्रीधनं भक्षयेद्बलात् ।
स वृद्धिं प्रतिदाप्यः स्याद्दण्डञ्चैव समाप्नुयात् ॥

दण्डं गृहीततुल्यमन्यच्च तथादर्शनात् ।

# अथ विशिष्टशूद्रस्य नियमातिक्रमदण्डः।

तत्र मनुनारदौ,—

> धर्म्मोपदेशं दर्पेण द्विजानामस्य कुर्व्वतः।
> तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः॥

धर्म्मोपदेशमिति कथञ्चिद्धर्म्मलेशमवगम्य अयं ते धर्म्मोऽनुष्ठेय इति ब्राह्मणस्याहङ्कारेणोपदिशत इत्यर्थः।

बृहस्पतिः,—

> धर्म्मोपदेशकर्त्ता च वेदोदाहरणान्वितः।
> आक्रोशकश्च विप्राणां जिह्वाच्छेदेन दण्ड्यते॥

गौतमः,—

> अथास्य वेदमुपशृण्वतस्त्रपुयतुभ्यां कर्णपूरणम्।
> उदाहरणे जिह्वाच्छेदो धारणे च शरीरच्छेदः॥

हारीतः,—

तस्माद्वेदश्रुतिश्रवणे शूद्रस्य त्रपुसीसौ विलाप्य कर्णौ पूरयेत्।

विलाप्य द्रवीकृत्य। हलायुधेन विद्राव्येत्येव पठितम्।

मनुनारदौ,—

> सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः।
> कट्यां कृताङ्को निर्व्वास्यः स्फिचञ्चास्यावकर्षयेत्॥

सहासनमभिप्रेप्सुरेकासनोपवेशी, अभिप्रेप्सुपदस्याभिप्राप्तिपरत्वात्।

तथाच विष्णुः,—

उत्कृष्टेन एकासनोपवेशी अपकृष्टजः कव्यां कृताङ्को निर्व्वास्य इति ।

उत्कृष्टो ब्राह्मणः । अपकृष्टजः शूद्र इति रत्नाकरः । नारायणेन तु उत्कृष्टस्योत्तमजातेरपकृष्टजः क्षत्रियादिरिति व्याख्यातम् । तथा कव्यामिति क्षत्रियविशोः । शूद्रस्य च तदुभयं, सहासनेच्छायां स्फिचमिति शूद्रस्य ब्राह्मणसहासनेच्छायामिति । कृताङ्कस्तप्तलोहशलाकया कृतचिह्नः । तच्चासनाकारमौचित्यात् । स्फिक् श्रोण्येकदेशः । स्फिचमित्येकत्वं विवक्षितमेव स्फिगेकञ्चास्य कर्त्तयेदिति मत्स्यपुराणदर्शनात् । तत् कर्त्तनञ्च तथा कार्य्यं यथा पुरुषो न म्रियेत इति कुल्लूकभट्टः ।

धर्म्मकोषे तु—मेढ्रं वाऽप्यस्य कर्त्तयेदिति पठितम् ।

गौतमः,—

आसन-शयन-वाक्-पथिषु समत्वेप्सुर्दण्ड्यः शतम् ।

वाक्समत्वं युगपद्वादः पथि समत्वं सहगमनम् ।

आपस्तम्बः,—

पथि शय्यायामासन इति समीभवतो दण्डस्ताडनम् । पूर्व्वञ्च शतदण्डत्वाभिधानं शूद्रस्य धनपरत्वपक्षे[१] ॥

कात्यायनः,—

प्रव्रज्यावसितं शूद्रं जपहोमरतन्तथा ।
वधेन शामयेत् पादं दण्ड्यो वा द्विगुणं दमम् ॥

---

१ ङ पुस्तके धनवत्त्वपक्षे ।

प्रव्रज्या चतुराश्रमपरिग्रहरूपा। सा च यद्यपि श्रुतिस्मृतिभ्यां शूद्रस्य नोक्ता तथापि शैवागमोक्तामपि तां गृहीत्वा यस्त्यजति स प्रव्रज्यावसितः। श्रुतिस्मृत्यनुक्ता अपि हि बौद्धादिधर्म्मा राज्ञा परिपाल्या एवेति रत्नाकरः।

द्विगुणो वधार्हस्य पाक्षिको यो दण्डस्तदपेक्षया बोद्धव्यः।

याज्ञवल्क्यः,—

विप्रत्वेन च शूद्रस्य जीवतोऽष्टशतो दमः।

विप्रत्वेन विप्रचिह्नोपवीतादिना।

अत्र मिताक्षराकारः,—

यः शूद्रो भोजनार्थमुपवीतादिब्राह्मणलिङ्गानि धारयति, तस्याष्टशतो दण्डः। श्राद्धभोजनार्थं पुनर्ब्राह्मणवेशधारिणस्तप्तशलाकया यज्ञोपवीतवन्धनस्थानमालिखेदिति स्मृत्यन्तरोक्तं द्रष्टव्यम्। वृत्त्यर्थन्तु ब्राह्मणलिङ्गधारिणो वध एव "द्विजातिलिङ्गिनः शूद्रान् घातयेत्" इति मनुस्मरणादित्याह।

अथ वृक्षादिच्छेदनदण्डस्तत्र कात्यायनः,—

वनस्पतीनां सर्व्वेषामुपभोगो यथा यथा।
तथा तथा दमः कार्य्यो हिंसायामिति धारणा॥

एतदनुक्तविशेषपरम्। इह चास्वामिकेषु वृक्षादिषु वृथाछिन्नेषु दण्डमात्रम्। सस्वामिके तु तत्स्वामिने तत् प्रतिनिधि—तन्मूल्ययोरेकतरदानमपीति प्रागुक्तमनुसन्धेयम्।

याज्ञवल्क्यः,—

प्ररोहिशाखिनां शाखा-स्कन्ध-सर्व्व-विदारणे।
उपजीव्यद्रुमाणाञ्च विंशतेर्द्विगुणो दमः॥

चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये।
जातद्रुमाणां द्विगुणो दमो वृक्षे च विश्रुते॥
गुल्म-गुच्छ-क्षुप-लता-प्रतानौषधिवीरुधाम्।
पूर्व्वस्मृतादर्द्धदण्डः स्थानेषूक्तेषु कर्त्तने॥

येषां शाखा अपि प्ररोहन्ति ते प्ररोहिशाखिनो वटादयः। येषां छायादिकमुपभुज्यते ते उपजीव्यद्रुमा आम्रादयः। यतो भागात् शाखा जायन्ते स स्कन्धः। सर्व्वशब्दो मूलपरः। तेषां छेदने विंशतिपणादारभ्योत्तरोत्तरं द्विगुणो दण्डो विंशतिपणश्चत्वारिंशत्पणोऽशीतिपण इति यावत्।

चैत्यमायतनं। विश्रुते पलाशादौ। गुल्मा अनतिदीर्घा लता मालत्यादयः। गुच्छा अवल्लीरूपा असवर्णप्रायाः कुरुण्टकादयः। क्षुपाः दुःशाखाः शाकोटकादयः। लता दीर्घायामिन्यो द्राक्षातिमुक्तकादयः। प्रतानाः काण्डप्ररोहरहिताः सरलायामिन्यः सारिवा[१]प्रभृतयः। ओषध्यः फलपाकान्ताः कदल्यादयः। वीरुधश्छिन्ना अपि या विविधं प्ररोहन्ति तालकुच्यादयः। स्थानेषु पूर्व्वोक्तेषु शाखास्कन्धमूलेषु।

दण्ड इत्यनुवृत्तौ विष्णुः,—

फलोपगमद्रुमच्छेदी तूत्तमसाहसम्। पुष्पोपगमद्रुमच्छेदी मध्यमसाहसम्। वल्लीगुल्मलताच्छेदी कार्षापणशतम्। तृणच्छेद्येकम्। सर्व्वं च तत्स्वामिनां तदुत्पत्तिम्।

एकं कार्षापणम्। तदुत्पत्तिं दद्युरिति शेष इति रत्नाकरः। कामधेनौ तथैव पठितम्।

---

१ क सारिरा प्रभृतयः।

वशिष्ठः,—

फलपुष्पोपगान् पादपान्न हिंस्यात्, कर्षणार्थं वोपहन्यात् गार्हस्थ्याङ्गे च।

कर्षणार्थं कृषिहेतुहलाद्यर्थम्। सम्भवासम्भवनिमित्तकविकल्पपरो वाशब्दः। गार्हस्थ्याङ्गं गृहकर्म्म दृष्टमदृष्टं वा। येन तद्गृहोपकरणं यज्ञोपकरणञ्च सिध्यति।

॥ इति प्रकीर्णके मुक्तकवर्गः ॥

---

# अथ विवादपदानि।

अत्र मनुः,—

तेषामाद्यमृणादानं निःक्षेपोऽस्वामिविक्रयः।
सम्भूय च समुत्थानं दत्तस्यानपकर्म्म च ॥
वेतनस्यैव चादानं सम्विदश्च व्यतिक्रमः।
क्रयविक्रयानुशयौ विवादः स्वामिपालयोः ॥
सीमाविवादधर्म्मश्च पारुष्ये दण्डवाचिके।
स्तेयञ्च साहसञ्चैव स्त्रीसंग्रहणमेव च ॥
स्त्रीपुंधर्म्मो विवादश्च द्यूतमाह्वय एव च[1]।
पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥

अत्र पारुष्यादीनां स्वातन्त्र्येणोपादानात् सन्निध्यतिक्रमादेः प्रकीर्णकानुप्रवेशाहणादानादावुत्सर्गतोऽपराधा-

---

१ मूले आह्वानमेव च इति पाठः।

नाधिक्यादपह्नवादिकमपेक्ष्य दोषत्वादतिशयेन लोकाना-मुद्वेगाभावाच्चास्वामिविक्रयादिमात्रमत्रोदाह्रियते।

तत्र मनुः,—

विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसम्मतः।
न तन्नयेत साक्ष्यन्तु स्तेनमस्तेनमानिनम्॥
अवहार्य्यो भवेच्चैव सान्वयः षट्शतं दमम्।
निरन्वयोऽनपसरः प्राप्तः स्याच्चौरकिल्विषम्॥
अनेन विधिना शास्यः कुर्व्वन्नस्वामिविक्रयम्।
अज्ञानाद् ज्ञानपूर्व्वन्तु चौरवद्दण्डमर्हति॥[१]

अवहारो दानमिति यावत् तेनावहार्य्यो दाप्य इत्यर्थः। एवमेव लक्ष्मीधर-ग्रहेश्वर-कुल्लूक हरिनाथाः। अवहार्य्यो दण्ड्य इति नारायण-चण्डेश्वरौ। तन्न दममित्यनेनानन्वयात्। सान्वयः स्वामिसम्बन्धी। तद्द्रव्ययोग्यसम्बन्धाभाववान्। यथा जीवति तस्मिन् विभक्तभ्रात्रादिः। निरन्वयः—अत्यन्तोदासीनः सम्बन्ध्याभासेनापि रहितः। सान्वयोऽप्यनपसरो अदेशे अकाले च विक्रयं कुर्व्वन्नित्यर्थ इति नारायणः।

अपसरत्यनेन स्वामिसकाशादन्यमित्यपसरः क्रयप्रतिग्रहादिः स यस्य नास्ति सोऽनपसर इति कल्पतरुकारः। एवमेव प्राञ्चो भागुरिमेधातिथिप्रभृतयः, अर्व्वाञ्चश्च

१ क पुस्तके मनुश्लोकादनन्तरं वचनमिदं विवादनिर्णये व्याख्यातमन्यच्चैतत्सम्बन्धि तत्रैवोक्तमिह तु सम्बन्धाविच्छेदप्रदर्शनार्थं लिखितम्।

एवं पाठादनन्तरं दत्ताप्रदानिके नारदः सुतरां तत्र पुस्तके इतःपरं क्रोटदण्डप्रकरणमेव यावन्नास्ति।

कुल्लूकभट्टादयो वृत्तिकृतः। पाठभेदव्याख्याभेदव्यवस्थिता अप्येते अर्था ग्राह्या न्यायानुरोधित्वात्।

यत्तु स्वामिसम्बन्धिना अन्येन धनस्य स्वामिगृहादपसारणमपसरः। स यस्य नास्ति किन्तु स्वयमेव तद्द्रव्यापसारी सोऽनपसर इति रत्नाकरकृतः। अनपसरोऽपलायित इति कृत्यसागर-स्मृतिसारयोरुक्तम्।

तच्चिन्त्यम्। तेन यः स्वामिनः सम्बन्धी, यश्चाज्ञानाद्विक्रीणीते स षट्पणशतानि दण्ड्यः। यस्तु तस्यासम्बन्धी, यश्च ज्ञात्वा विक्रीणीते, तस्य चौरवद्दण्ड इत्यर्थः। असम्बन्धिनः स्वयं द्रव्यापसारणे चौरवद्दण्डः। परकृते तस्मिन् षट्शताधिकमिति रत्नाकरः।

अथ स्वामित्वाभिमतस्य दण्डमाह कात्यायनः,—

यदि स्वं नैव कुरुते ज्ञातृभिर्नाष्टिको धनम्।
प्रसङ्गविनिवृत्त्यर्थं चौरवद्दण्डमर्हति॥

ज्ञातृभिरिति प्रमाणमात्रोपलक्षणम्। नाष्टिको नष्टधनस्वामी।

याज्ञवल्क्यः,—

पञ्चबन्धो दमस्तत्र राज्ञे तेनाविभाविते।

पञ्चबन्धो नष्टद्रव्यपञ्चमांशः।

बृहस्पतिः,—

अभावयंस्ततः पश्चाद्दाप्यः स्याद्द्विगुणं दमम्।

अत्र परद्रव्यं ज्ञात्वाऽपि लोभात् स्वमिति वदतो नष्टत्वाभिमतधनाद्द्विगुणदण्डः। भ्रमात्तथा वदतः पञ्चबन्धो दण्ड इति व्यवस्था।

कात्यायनीयन्त्वनुबन्धातिशयविषयमिति स्फुटमेव ।

अथ क्रेतुर्दण्डमाह बृहस्पतिः,—

येन क्रीतन्तु मूल्येन प्रागध्यक्षनिवेदितम् ।
न तत्र विद्यते दोषः स्तेनः स्यादुपधिक्रयात् ॥
अन्तर्गृहे बहिर्ग्रामात् निश्युपांश्वसतो जनात् ।
हीनमूल्यञ्च यत्क्रीतं ज्ञेयो दुष्टः परिक्रयः ॥

असतो जनात् असाधुत्वेन ज्ञातात् । एतद्वाक्यं "स्वामितोऽपि क्रयः कश्चिद्विरुद्धो भवतीत्युपक्रम्य कृत्यसागर-स्मृतिसारयोरवतारितं व्याख्यातञ्च । अत्राप्यस्वामिविक्रय-वद्व्यवहारः ।

तथाच विष्णुः,—

यद्यप्रकाशं हीनमूल्यञ्च क्रीणीयात्तदा क्रेता विक्रेता च चौरवच्छास्यौ ।

एतत्तु न मनोरमं चौरादिभियापि गोपनस्य धनिक-पीडादिनाऽप्युपपत्तेः ।

अत एव धर्म्मकोषे यदि तु क्रेता जानन् क्रीणाति, तदा सोऽपि दण्ड्य इति कृत्वा विष्णुवचनमवतारितम् । अतएवात्र कल्पतरावेष विशेषो न दर्शितः । कामधेनौ रत्नाकरादौ च वचनमेवैतन्न लिखितम् ।

नारदः,—

अथास्यानुमताद्दासात् क्रीणंस्तद्दोषभाग् भवेत् ।

याज्ञवल्क्यः,—

हीनाद्रहो हीनमूल्यं वेलाहीने च तस्करः ।

हीनान्नीचात् असम्भावितद्रव्यस्वामिभावात्। वेला-हीने क्रयार्हवेलाहीने। तेन हीनादसाधोर्दासाद्वा रहो हीनमूल्येन वेलामनाश्रित्य क्रयं कुर्व्वन् तस्करो भवतीत्यतिदेशात्तद्दण्डप्रापकः।

अथ स्वामिनो दण्डमाह याज्ञवल्क्यः,—

हृतं प्रनष्टं यो द्रव्यं परहस्तादवाप्नुयात्।
अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं पणान्॥

इदं मम अनेनापहृतमिति राज्ञेऽनिवेदयितुरयं दण्डः। तस्करप्रच्छादनेन राजाज्ञाखण्डनादिति कृत्यसागर-स्मृति-सारौ। एवमेव कल्पतरु-रत्नाकरादिस्वरसः।

अथ बृहस्पतिः,—

प्रमाणहीने वादे तु पुरुषापेक्षया नृपः।
सम-न्यूनाधिकत्वेन स्वयं कुर्य्याद्विनिश्चयम्॥
वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः।
अविज्ञाताश्रयात् क्रीतं विक्रेता यत्र वा मृतः॥
स्वामी दत्वाऽर्द्धमूल्यन्तु प्रगृह्णीत स्वकं[1] धनम्।
अर्द्धं द्वयोरपहृतं तत्र स्याद्व्यवहारतः॥
अविज्ञातक्रयो दोषस्तथा चापरिपालनम्।
एतद्द्वयं समाख्यातं द्रव्यहानिकरं बुधैः॥

वणिगिति। अविज्ञाताश्रयात् अनिश्चितवासस्थानात्। अयमर्थः—वस्तुतः परकीयमपि द्रव्यं वणिग्वीथीपरिगतं प्रकाशं यः क्रीणाति विक्रेतुरविज्ञाताश्रयत्वात्तमानेतुं न शक्नोति स विभावितस्वामिभावान्नाष्टिकादर्द्धमूल्यं गृहीत्वा

---

१ घ पुस्तके स्वयं।

तद्द्रव्यं तु नाष्टिकायार्पयेत् । नाष्टिकेन तद्धनं न रक्षितमिति तस्य दोषः । क्रेता तदविज्ञाताश्रयात् क्रीतमिति तस्य दोषः । तदेतद्दोषद्वयं उभयोरप्यर्द्धहानिकरम् ।

एतच्च स्वामिनोऽनवेक्षया यच्चान्येन द्रव्यमपहृत्य विक्रीयते तद्विषयम् तथा चापरिपालनमिति वचनादतो न विरोधः ।

एवञ्च यत्र स्वामिनो मूल्यस्य वा स्वत्वे क्रेतुर्व्वा प्रकाशक्रयादौदार्य्यं नावतरति तद्विषयं प्रमाणहीनेत्यादिवचनं तेषामभावे राजाज्ञा प्रमाणमिति व्यासवचनसम्वादात् । समेति पुरुषाणां धर्म्माधर्म्मयोः समन्यूनाधिकभावं निश्चित्येत्यर्थ इति रत्नाकरः ।

अथ दत्ताप्रदानिके नारदः,—

अदत्तन्तु भय-क्रोध-शोक-वेग-रुगन्वितैः ।
तथोत्कोचपरीहास-व्यत्यासच्छलयोगतः ॥

भयादिपरवशैरुत्कोचादिसम्बन्धेन च यद्दत्तं तददत्तमित्यर्थः ।

अत्र मिताक्षरायामुत्कोचनं[१] कार्य्यप्रतिवन्धनिरासार्थमधिकृतेभ्यो दत्तमिति व्याख्यातम् ।

[२][तत्रोत्कोचनमधिकृत्य नारदः,—

यस्य कार्य्यस्य सिद्ध्यर्थमुत्कोचा स्यात् प्रतिश्रुता ।
तस्मिन्नपि त्वसिद्धेऽर्थे न देया स्यात् कथञ्चन ॥

---

१ क पुस्तके उत्कोचेन ।

२ ङ पुस्तके [तत्रोत्कोचनमधिकृत्येत्यारभ्य प्रकीर्णके विवादपदवर्गः] इत्यन्तश्चिह्नितांशः पतितः ।

अथ प्रागेव दत्ता स्यात् प्रतिदाप्यः स तां बलात् ।
दण्डश्चैकादशगुणमाहुर्गार्गीय-मानवाः ॥

एकादशगुणं स्वीकृतोत्कोचापेक्षया। एवं नारदोक्त-मुत्कोचमनूद्य यादृशं तद्दत्तमप्यदत्तं भवति ।

तदाह कात्यायनः,—

स्तेन साहसिकोद्वृत्त-पारजायिकशंसनात् ।
दर्शनाद्वृत्तिनष्टस्य तथाऽसत्यप्रवर्त्तनात् ॥
प्राप्तमेतैस्तु यत्किञ्चित्तदुत्कोचान्न मुच्यते ।
न दाता तत्र दण्ड्यः स्यान्मध्यस्थश्च न दण्डभाक् ॥

उद्वृत्तो दुश्चरित्रो नष्टवृत्तिः स्ववृत्तिच्युतः, असत्य-प्रवर्त्तनात् साक्ष्यादीनामिति शेषः। मध्यस्थ उत्कोच-दापयिता। तेन स्तेनादीनां दर्शयित्रे साक्ष्यादीनसत्ये प्रवर्त्तयित्रे वा यद्धनं प्रतिश्रुतं तन्न देयम्। यथोक्तदण्डो ग्रहीतुर्न दातुर्नापि दापयितुरिति समुदायार्थः ।

एवञ्च प्रत्युपकारार्थमङ्गीकृताऽप्युत्कोचा देया। दत्ता चानाच्छेद्या यद्युपकारनिर्व्वाह इति द्रष्टव्यम्।

अत एव न कार्य्यमाचार्य्यं दत्तमुत्कोचाख्यं निवर्त्त्यमिति कार्य्यविशेषे तत्र कात्यायन इति कृत्वा कृत्यसागर-स्मृति-सारयोर्व्वचनमिदमवतारितमिति ।

प्रकीर्णके विवादपदवर्गः ।]

# अथ व्यवहारविषयदण्डः।

तत्र आज्ञासेधव्यतिक्रम इति प्रागुद्दिष्टमपि प्रकरण-सङ्गत्या अत्रोदाह्रियते।

तत्र बृहस्पतिः,—

यस्याभियोगं कुरुते तथ्येनाशङ्कयापि वा।
तमेवासेधयेद्राजा मुद्रया पुरुषेण वा॥

आसेधयेत् आनयेत्। मुद्रा स्वहस्ताङ्कितं द्रव्यम्[1]।

नारदः,—

वक्तव्येऽर्थे न तिष्ठन्तमुत्क्रोशन्तञ्च[2] तद्वचः।
आसेधयेद्विवादार्थी यावदाह्वानदर्शनम्॥

न तिष्ठन्तं निर्णयार्थमप्रवर्त्तमानं प्रत्युत वादिवचन-मुत्क्रोशन्तम् तिरस्कुर्व्वाणं, वादी तावन्निरुन्ध्याद् यावदसौ राज्ञाहूयत इत्यर्थः।

स चासेधश्चतुर्विधः।

तमाह,—

स्थानासेधः कालकृतः प्रवासात् कर्म्मणस्तथा।
चतुर्व्विधः स्यादासेधस्तमासिद्धो न लङ्घयेत्॥

अत्र कल्पतरौ,—

अदत्वा यद्यस्मात् स्थानाच्चलसि, यदि भोक्ष्यसे, यदि ग्रामं गच्छसि, यद्यध्ययनं करोषि तदैतावान् तव दण्ड इति स्थानासेधादयो व्याख्याताः।

एवमेव पारिजातादयः।

---

१ ङ पुस्तके स्वहस्ताङ्कितं पत्रं। २ घ पुस्तके उत्क्रामन्तञ्च।

रत्नाकरोऽप्येतदनुसार्य्यैव यदाह—

मम लभ्यमदत्वा स्थानात्त्वया न चलितव्यं न भोक्तव्यम् प्रवासोऽपि न कर्त्तव्यः कर्म्मान्तरं न कर्त्तव्यमिति।

दीपिकाकारस्तु यत्रापेक्षितस्थाने वादी न स्थाप्यते स स्थानासेधः। यत्रोपवासं कार्य्यते स कालासेधः। यत्र प्रोषितः क्रियते स प्रवासासेधः। यत्र श्राद्धादिकर्म्म न कार्य्यते स कर्म्मासेध इत्याह।

तथा,—

आसेधकाल आसिद्ध आसेधं योऽतिवर्त्तते।
स विनेयोऽन्यथा कुर्व्वन्नासेद्धा दण्डमर्हति॥
आसेधयंस्त्वनासेध्यं राज्ञा शास्य इति स्थितिः।

अन्यथा ताडनादिना।

अत्रैव नारद-कात्यायनौ,—

यस्त्विन्द्रियनिरोधेन व्याहारोच्छ्वसनादिभिः।
आसेधयेदनासेध्यैः स दण्ड्यो नत्वतिक्रमी॥

अनासेध्यैरासेधनानर्हैः।

अथानासेध्यमाह नारदः,—

नदीसन्तार-कान्तार-दुर्द्देशोपप्लवादिषु।
आसिद्धस्तु परासेधमुत्क्रोश[1]न्नापराध्नुयात्॥
निर्व्वेष्टुकामो रोगार्त्तो यियक्षुर्व्यसने स्थितः।
अभियुक्तस्तथाऽन्येन राजकार्य्योद्यतस्तथा॥
गवां प्रचारे गोपालाः शस्यवन्धे[2] कृषीवलाः।
शिल्पिनश्चापि तत्कालमायुधीयाश्च विग्रहे॥

---

१ मूले—उत्क्रामन्। २ शस्यारम्भे इति क्वचित् पाठः।

[1]अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती।
विषमस्थश्च नासेध्यो न चैतानाह्वयेत् नृपः॥

अत्र शस्यबन्धं विविनक्ति कात्यायनः,—

तद्युक्तः कर्षकः शस्ये तोयस्यागमने तथा।
आरम्भात् संग्रहं यावत् तत्काले न विवादयेत्॥

अत्र शिल्पिनश्चतुर्व्विधाः,—

शिक्षकाभिज्ञकुशला आचार्य्याश्चेति शिल्पिनः।

इत्युक्ताः। तत्काले तेषां स्व स्व कर्म्मकाले।

व्यासः,—

योगी यियक्षुरुन्मत्तो धर्म्मार्थी व्यसनी व्रती।
दानोन्मुखो नाभियोज्यो नासेध्यो नाह्वयेच्च तम्॥

कात्यायनः,—

कार्य्यातिपाति-व्यसनि-नृपकार्य्योत्सवाकुलान्।

नाह्वयेदित्यनुषङ्गः। अत्र कर्म्मातिपाती यस्य रक्षणीयं कार्य्यमुत्सेधेन रक्षति। सर्व्वमिदं रक्षित-ऋणादिविषयम्।

अन्यत्र त्वाह याज्ञवल्क्यः,—

नासेद्धव्यः क्रियावादी सन्दिग्धार्थे कथञ्चन।
आसेधयंस्त्वनासेध्यं तत्समं दण्डमर्हति॥

कात्यायनः,—

पीडयेद्यो धनी कश्चित् बालकं[2] न्यायवादिनम्।
तस्मादर्थात् स हीयेत तत्समञ्चाप्नुयाद्दमम्॥

---

१ एकत्र पुस्तके [ ] चिह्नितपद्यमधिकं सङ्गतत्वादेवास्माभिरुल्लिखितं।

२ घ ङ पुस्तकद्वये बली कश्चिद्बालकम्।

अथ कात्यायनः,—

आहूतस्त्ववमन्येत यः शक्तो राजशासनम् ।
तस्य कुर्य्यान्नृपो दण्डं विधिदृष्टेन कर्म्मणा ॥
हीने कर्म्मणि पञ्चाशन्मध्येऽपि स्यात् शतावरः ।
गुरुकार्य्येषु दण्डः स्यान्नित्यं पञ्चशतावरः ॥

अत्र व्यासः,—

परानीकहते देशे दुर्भिक्षे व्याधिपीडिते ।
कुर्व्वीत पुनराह्वानं न तु दण्डं प्रकल्पयेत् ॥

अथ याज्ञवल्क्यः,—

अवध्यं यश्च वध्नाति यश्च वध्यं प्रमुञ्चति ।
अप्राप्तव्यवहारञ्च स दाप्यो दण्डमुत्तमम् ॥

अवध्यं वन्धनानर्हम् । अप्राप्तव्यवहारं व्यवहारार्थमानीतमनिर्व्वाहितव्यवहारञ्च । तं न वध्नीयात्, न मुञ्चेत् । तथाविधं वध्नन् मुञ्चन् वा उत्तमसाहसं दण्ड्य इत्यर्थः ।

विष्णुः,—

दण्ड्यमुन्मोचयन् दण्डाद्द्विगुणं दण्डमाहरेत्[1] ।
नियुक्तश्चाप्यदण्ड्यानां दण्डकारी नराधमः ॥

दण्डादवरुद्धस्य यो दण्डस्तस्मात्, नियुक्तो राजपुरुषः । आलम्भकं रक्षेदर्थिप्रत्यर्थिनामिति वचनात् ।

यश्च दण्डनाधिकृतो दण्डानर्हाद्दण्डत्वेन यावद्गृह्णाति स तद्द्विगुणं दाप्य इत्यर्थः । अत्र वध्योन्मोचने वधदण्डस्य

१ घ पुस्तके आवहेत् ।

द्वैगुण्यासम्भवाद्वधप्रतिनिषिद्धेन सुवर्णशतग्रहणानन्तरं वध इति प्रतिभाति ।

याज्ञवल्क्यः,—

पारदारिक-चौरौ च मुञ्चतो दण्ड उत्तमः ।

यत्र क्षुद्रद्रव्यापहारी चौरोऽनुलोमागुप्तदास्यादिगामी च पारदारिकस्त्यज्यते तद्विषयमिदम् ।

अथ वादिनः प्रतिनिधिविषये नारद-कात्यायनौ,—

यो न भ्राता न च पिता न पुत्रो न नियोजितः ।
परार्थवादी दण्ड्यः स्याद्व्यवहारेषु विब्रुवन् ॥

कात्यायनः,—

दासाः कर्म्मकराः शिष्या नियुक्ता बान्धवास्तथा ।
वादिनस्ते न दण्ड्याः स्युर्यस्ततोऽन्यः स दण्डभाक् ॥

बृहस्पतिः,—

अप्रगल्भ-जडोन्मत्त-वृद्ध-स्त्री-बालरोगिणाम् ।
पूर्व्वोत्तरं वदेद्बन्धुर्नियुक्तोऽन्योऽथवा नरः ॥

पूर्व्वं भाषा ।

कात्यायनः,—

ब्रह्महत्या-सुरापाने-स्तेये-गुर्व्वङ्गनागमे ।
मनुष्यमारणे स्तेये परदाराभिमर्षणे ॥
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे ।
पारुष्ये कूटकरणे नृपद्रोहे तथैव च ॥
प्रतिवादी न दाप्यः स्यात् कर्त्ता तु विवदेत् स्वयम् ।

प्रतिवादी प्रतिनिधिः । पुनः स्तेयपदं प्रतिषेधातिशयार्थमिति रत्नाकरः ।

वस्तुतस्तु प्रथमं स्तेयपदं सुवर्णस्तेयपरं महापातक-साहचर्य्यात्। द्वितीयन्तु तदितरपरम्। ब्रह्महत्या-मनुष्य-मारणवत् गुर्व्वङ्गनागमन-परदाराभिमर्षणवच्चेति द्रष्टव्यम्।

कर्त्ता अभियुक्तः ।

---

# अथ सभ्य-दण्डः ।

तच्चोत्कोचमादायान्यथा निर्णयतस्तस्य दण्डः प्रकाश-तस्करप्रकरणे दर्शितः ।

उत्कोचग्रहणादिसम्भावनायामाह कात्यायनः,—

अनिर्णीते तु यद्यर्थे सम्भाषेत रहोऽर्थिना ।
[१]प्राड्विवाकोऽपि दण्ड्यः स्यात् सभ्यश्चैव न संशयः॥

अन्यच्च त्वाह,—

स्नेहादज्ञानतो वापि लोभाद्वा मोहतोऽपि वा ।
यत्र सभ्योऽन्यथावादी दण्ड्योऽसभ्यः स्मृतो हि सः॥

दण्डमाह नारदः,—

रागाल्लोभाद्भयाद्वापि स्मृत्यपेतादिकारिणः ।
सभ्याः पृथक् पृथक् दण्ड्या विवादाद्द्विगुणं धनम्॥

आदिपदादाचारापेतादिग्रहणम्। अत्र विवादात् विवादपराजयनिमित्ताद्दण्डात् द्विगुणमित्यर्थो न तु विवादास्पदीभूतादिति स्त्रीसङ्ग्रहणादिषु दण्डाभाव-प्रसङ्गादिति मिताक्षराकारः।

---

१ घ ङ पुस्तकद्वये प्राड्विवाकोऽप्यदण्ड्यः स्यादिति ।

बृहस्पतिः,—

अन्यायवादिनः सभ्या निर्व्वास्याः सर्व्व एव ते ।

एतद्वादिनोऽतिपीडाकरमहापातकादिविवादविषयं, वृत्तिच्छेदादिविषयं वा । शीलार्थणिनि प्रयोगात्ताच्छील्य-प्रतीतेरभ्यासविषयं वेति न विरोधः ।

इह यत्र सुवर्णादिषु क्षिप्तेषु प्रत्यर्थी सर्व्वमपह्नुते । अर्थी च तदेकदेशं विभावयति तत्र यदेकदेशेऽर्थिनः सत्यवादित्वात् प्रदेशान्तरेऽपि मूलमिदं सत्यमिदमसत्य-मित्यादिना तर्क्केण निर्णयः, तदा [1]वस्तुतस्तुल्यार्थस्यान्यथा-त्वेऽपि व्यवहारदर्शिनां न दोषः ।

तथाहि न्यायाधिगमे तर्क्कोऽप्युपायस्तेनाभ्युह्य यथास्थानं गमयेदित्युक्ता—

गोतमेनोक्तम्,—

तस्माद्राजाचार्य्यावनिन्द्याविति ।

अथ सन्दिग्धानाञ्च भाषणमिति यदुद्दिष्टम् ।

तत्र नारदः,—

कार्य्यस्य निर्णयं सम्यक् ज्ञात्वा सत्यन्ततो वदेत् ।
अन्यथा नैव वक्तव्यं वक्ता द्विगुणदण्डभाक् ॥

वक्ता अन्यथावक्ता । अत्रापि द्वैगुण्यं विवादविषया-पेक्षया, पराजयनिमित्तकदमापेक्षया वा ।

तथा,—

सभ्यदोषात्तु यन्नष्टं देयं सभ्येन तत्तथा ।
कार्य्यन्तु कार्य्यिणामेवं निश्चितं न विचालयेत् ॥

---

१ घ पुस्तके—तदा वस्तुतस्तस्यान्वयस्य ।

नष्टं हारितं जयिने दत्तं देयं हीनाय वादिन इति शेषः । सोऽयं न विचालयेदिति कल्पतरु-पारिजातादि-लिखितपाठानुगतोऽर्थः ।

व्यवहारदीपिकायान्तु कामधेन्वादौ दृष्ट्वा प्रविचारये-दिति पठितं व्याख्यातञ्च—अन्यथादर्शिना सभ्येन विचार्य्य निर्णीतमपि पुनः सम्यक् विचारयेदिति । एवञ्चैतन्मते-ऽन्यथादर्शननिमित्तोऽयं सभ्यदण्डः ।

युक्तञ्चैतत् दुर्दृष्टस्य पुनर्दर्शनविधानात् । पूर्व्वसभ्य-प्राड्विवाकयोर्दण्डविधानाच्च । कृत्यसागरे तु न विचालये-दित्येव पठितम् । वाद्यनुक्तमपि निश्चितं न विचालये-दिति तु व्याख्यातम् ।

[१]अथ कात्यायनः,—

प्राड्विवाकसदस्यानामुपजीव्यमतानि तु ।
तद्युक्तियोगाद्योऽर्थेषु निर्णयेत्तु स दण्डभाक् ॥

यः स्वयमज्ञः प्राड्विवाकाद्युक्तयुक्त्या निर्णयति सोऽपि दण्ड्य इत्यर्थः । एतदनधिकृतशूद्राद्यभिप्रायं क्वचिन्न स दण्डभागिति पाठः स च धर्म्मज्ञ-शास्त्रज्ञ-ब्राह्मणाभिप्रायक इति फलतो न विशेषः ।

तदाह बृहस्पतिः,—

नियुक्तो वाऽनियुक्तो वा धर्म्मज्ञो वक्तुमर्हति ।

---

१ अथ कात्यायन इत्यारभ्य अकूटसाक्षिदूषणादण्डनिर्णयं यावत् ग्रन्थांशः घ ङ पुस्तके प्रमादपतितः ।

तथा नारदः,—

नियुक्तो वाऽनियुक्तो वा शास्त्रज्ञो वक्तुमर्हति ।

इति रत्नाकरः ।

इह केचित्,—

अनिर्दिष्टाश्च ये कुर्य्युर्व्यवहारविनिर्णयम् ।
राजवृत्तिप्रवृत्तास्ते तेषां दण्डं प्रकल्पयेत् ॥

इति कात्यायनवचनमधार्म्मिकाशास्त्रज्ञविषयं येषां पुनरनियुक्तानामपि नाधर्म्मशङ्का राज्ञापि मत्कृत्यमेवैते कुर्व्वन्तीति सामान्यतो येऽनुमन्यन्तेऽनुकम्प्या एत इत्युपेक्ष्यन्ते वा । तैरनियुक्तैरपि व्यवहारदर्शने प्रवर्त्तितव्यमेवेत्याहुः ।

तत्र च नियुक्तो वेत्यादिवृहस्पति-नारदयोर्वचनं प्रमाणयन्ति स्म ।

---

## [1]अथादुष्टसाक्षिदूषणदण्डः।

तत्र बृहस्पतिः,—

साक्षिणोऽर्थिसमुद्दिष्टान् सत्वदोषेषु दूषयेत्।
अदुष्टान् दूषयन् वादी तत्समं दण्डमर्हति॥

तत्समं विवादविषयसममिति रत्नाकरः। स्त्रीसंग्रहणादौ तु पराजयनिमित्तकदण्डसममिति प्रागुक्तमनुसन्धेयम्।

अथ कात्यायनः,—

नातथ्येन प्रमाणेन दोषेणैव तु दूषयेत्।
मिथ्याभियोगे दण्ड्यः स्यात् साध्यार्थाद्वापि हीयते॥

दोषेण तथ्येनापि सिद्धेन नतु साध्येन।

तथाहि बृहस्पति-कात्यायनौ,—

सभासदां प्रसिद्धं यत् लोकसिद्धमथापि वा।
साक्षिणां दूषणं ग्राह्यं न साध्यं दोषवर्ज्जनात्॥

प्रसिद्धमेव ग्राह्यं दोषवर्ज्जनादित्यन्वयः, न तु साध्यं ग्राह्यं दोषसम्भवादिति भावः।

तद्दोषमाहतुस्तावेव,—

अन्यैस्तु साक्षिभिः साध्ये दूषणे पूर्व्वसाक्षिणाम्।
अनवस्था भवेद्दोषस्तेषामप्यन्यसम्भवात्॥

एवञ्च यत्रानवस्थादयो नापतन्ति तत्र साध्योऽपि दोषो ग्राह्य इत्येव गम्यते। एतच्च कृतशपथस्याशुचित्वलिङ्ग-

---

१ क पुस्तके एष दण्डविधिः पतितः।

रोगादावपि द्रष्टव्यं न्यायसाम्यात्। अन्यथा रात्रावस्यातिपीडाकरो ज्वरोऽभूदित्यभिधायैव वादी कृतकृत्यः स्यात्।

तत्रापि शपथाद्यनुसारणेनानवस्था स्यात्।

कात्यायनः,—

उक्तेऽर्थे साक्षिणो यस्तु दूषयेत् प्रागदूषितान्।
न च तत्कारणं ब्रूयात् प्राप्नुयात् पूर्व्वसाहसम्॥

पूर्व्वसाहसमुत्तमसाहसमिति रत्नाकरः।

---

## अथ कूटसाक्षिनिर्द्देशदण्डः[१]।

तत्र कात्यायनः,—

येन कार्य्यस्य लोभेन निर्द्दिष्टाः कूटसाक्षिणः।
गृहीत्वा तस्य सर्व्वस्वं कुर्य्यान्निर्विषयन्ततः॥

निर्विषयं विवादविषयशून्यमिति रत्नाकरः। एतच्चाभ्यासविषयं द्रष्टव्यम्। अनभ्यासे तु—कूटकृत् साक्षिणस्तथा विवादाद्द्विगुणं दण्डनीया इति याज्ञवल्क्यवचनमोवोपतिष्ठते। यः कूटान् साक्षिणः करोति स कूटकृदित्यर्थः[२]।

---

१ ख ङ निर्द्देशनदण्डः। २ क पुस्तके इत्यर्थात्।

# अथ कूटसाक्षिदण्डः।

स च उत्कोचादिग्रहणनिमित्तः प्रकाशतस्करप्रकरणे प्रदर्शितः।

लोभादिना कूटसाक्ष्ये दण्डमाह मनुः,—

लोभात् सहस्रं दण्ड्यस्तु मोहात् पूर्व्वन्तु साहसम्।
भयाद्द्वौ मध्यमौ दण्डौ मैत्र्यात् पुर्व्वं चतुर्गुणम्॥
कामाद्दशगुणं पूर्व्वं क्रोधात्तु त्रिगुणं परम्।
अज्ञानाद्द्वे शते पूर्णे बालिश्याच्छतमेव च॥

लोभोऽर्थलिप्सा सहस्रं पणानामिति शेषः, मोहो विपरीतज्ञानमिति कुल्लूकभट्टादयः। रत्नाकरेऽपि मिथ्याज्ञानमित्युक्तम्। वैचित्त्यमिति कल्पतरुः। पूर्व्वं साहसं सार्द्धं पणशतद्वयम्। द्वौ मध्यमौ साहसावित्यन्वयः, तेन पणसहस्रमित्यर्थः।

त्रिगुणं परमिति पूर्व्वापेक्षया परं मध्यमं तस्मिंस्त्रिगुणे पञ्चदशशतानि सम्पद्यन्ते इति कल्पतरुः। एवमेव रत्नाकरः। ग्रहेश्वरमिश्रास्तु परं सहस्रमित्याहुः।

नारायणसर्व्वज्ञोऽप्याह परमुत्तमसाहसमिति।

अज्ञानं तात्कालिको विपर्य्यय इति कल्पतरुः। अस्फुरणमज्ञानमिति मिताक्षराकारः। अत एव बालिश्यं यौवनोन्मेषप्राप्तो मद इति रत्नाकरः। ज्ञानानुत्पादो बालिश्यमिति मिताक्षराकारः।

यत्र तु लोभादिकारणविशेषपरिच्छेदो नास्ति।

तत्राह याज्ञवल्क्यः,—

पृथक् पृथक् दण्डनीयाः कूटकृत्-साक्षिणस्तथा।
विवादाद्द्विगुणं दण्डं[1] विवास्यो ब्राह्मणस्तथा॥

विवादात् विवादविषयादित्यर्थः, विवादपराजय-निमित्ताद्दण्डादिति मिताक्षराकारः।

दण्डश्चायमृणादि-विवादविषयः। तत्र संख्यानियमात्।

अन्यच्च तु,—

हीने कर्म्मणि पञ्चाशन्मध्यमे तु शतावरः।
गुरुकार्य्येषु दण्डः स्यान्नित्यं पञ्चशतावरः॥

इति वचनोक्तो दण्ड इति कृत्यसागरः। विवास्यो ब्राह्मण इति ब्राह्मणस्य विवासनमात्रं न तु दण्डः। अन्येषान्तु समुच्चयः। अन्यथा न्यायागतो ब्राह्मणे दण्डापकर्षो न स्यात्।

एतच्च पूर्व्वत्रापि द्रष्टव्यं तथाच लोभात् सहस्रमित्यादिकमभिधाय—

मनुः,—

कूटसाक्ष्यन्तु कुर्व्वाणांस्त्रीन् वर्णान् धार्म्मिको नृपः।
प्रवासयेद्दण्डयित्वा ब्राह्मणन्तु विवासयेत्॥

लोभादित्यादि सकृत् कूटसाक्ष्यविषयमिदन्त्वभ्यास-विषयम्। तत्र क्षत्रियादीन् पूर्व्वोक्तदण्डेन दण्डयित्वा राजा निर्वासयेत् ब्राह्मणन्तु दण्डव्यतिरेकेणैवेति कुल्लूकभट्टः। एवमेव नारायणः।

---

१ क्वचित् दण्ड्य इति पाठः।

गोविन्दराजस्तु,—

ब्राह्मणं पूर्व्वदण्डेन दण्डयित्वा नग्नं कुर्य्यादित्यर्थमाह ।

मेधातिथिस्तु,—

ब्राह्मणस्य विवासनं वासोऽपहरणं गृहभङ्गो वा इत्याह ।

अत्र मिताक्षराकारः,—

प्रवासयेत् मारयेत् प्रवासशब्दस्यार्थशास्त्रे मारणे प्रयोगात् । तत्रापि प्रवासनमोष्ठच्छेदनं जिह्वाभेदनं प्राणवियोजनञ्च कौटसाक्ष्यविषयानुरोधेन द्रष्टव्यं अभ्यासविषयञ्चैतद्वचनमित्याह ।

प्रवासयेदित्यस्य दण्डं विनैव स्वदेशान्निःसारेदित्यर्थ इति रत्नाकरः ।

मिताक्षरायान्तु,—

ब्राह्मणं दण्डयित्वा विवासयेत् स्वदेशान्निष्काशयेत् यद्वा वाससो विगतो विवासस्तं करोति इति णिचि णाविष्टवत् प्रातिपदिकस्येति टिलोपे विवासयेदितिरूपं तेन नग्नं कुर्य्यादित्यर्थः ।

अथवा वसन्त्यस्मिन्निति वासो गृहं तेन भग्नं गृहं कुर्य्यादित्यर्थ इत्यभिधाय ? एवञ्च ब्राह्मणस्यापि लोभादिकारणविशेषपरिज्ञाने सहस्रादिरर्थदण्ड एव । अभ्यासे त्वर्थदण्डो विवासनञ्च ।

तत्रापि जाति द्रव्यानुवन्धाद्यपेक्षया नग्नीकरणं गृहभङ्गो देशनिष्काशनमिति पक्षभेदव्यवस्था ।

यद्वा,—अल्पविषये चतुर्णामर्थदण्ड एव, महाविषये तु निर्वासनमेवेति व्यवस्था दर्शिता ।

याज्ञवल्क्यः,—

यः साक्ष्ये श्राविलोऽन्येभ्यो निह्नुते तत्तमोवृतः।
स दाप्योऽष्टगुणं दण्डं ब्राह्मणन्तु विवासयेत्॥

तमोवृतो रागाद्याक्रान्तचित्तो यथाज्ञातमर्थमन्येभ्यः[१] पूर्व्वं श्रावयित्वा निगदकाले यस्तं निह्नुतेऽपलपति सोऽष्टगुणं दण्डं दाप्यः।

अष्टगुणता तु विवादविषयापेक्षया तस्यैवोपस्थितत्वात् अतएव रत्नाकरादौ व्याख्यातं आगमत्वादस्यार्थस्येति।

मिताक्षरायान्तु,—

विवादपराजयनिमित्ताद्दण्डादष्टगुणमुक्तम्।

व्यवहारतरङ्गे तु ग्रहेश्वरमिश्रा आहुः,—

हीने कर्म्मणि पञ्चाशदित्यादिवचनबोधिताद्दण्डादष्टगुणत्वमेवेति। तन्मतेऽपि नियतसंख्यके ऋणादिविवादे तदपेक्षयैवाष्टगुणत्वं द्रष्टव्यं पृथक् पृथक् इत्यादिवाक्ये तेनैव तथा व्यवस्थाया दर्शितत्वात् ब्राह्मणस्य विवासनं देशनिष्काशनम्।

मिताक्षराकारमते तु नग्नीकरणं गृहभङ्गो देशनिष्काशनमिति त्रिविधं तद्विषयानुसारेण व्यवस्थितम्।

तथेतरेषां यथोक्तदण्डासम्भवे स्वजात्युक्तकर्म्मनिगडबन्ध-काराप्रवेशनादीनीति स एवाह।

दण्डाधिक्यञ्चेदमपराधगौरवादिति दृष्टानुबोधितैव। अतएव निह्नुत इत्यत्र निह्नवो विशेषकौटिल्यमिति व्याख्यातम्। कृत्यसागरे आह च

१ क अन्योऽन्यम्।

नारदः—

श्रावयित्वा तथाऽन्येभ्यः साक्षित्वं योऽतिनिह्नुते।
स विनेयो भृशतरं कूटसाक्ष्यधिको हि सः॥

विष्णुः,—

कूटसाक्षिणां सर्व्वस्वापहारः कार्य्यः।

एतच्च [1]वारंवारं कूटसाक्ष्य इति रत्नाकरः। एवञ्च याज्ञवल्क्योक्तदण्डोऽनभ्यासविषय इति गम्यते।

ग्रहेश्वरमिश्रास्तु अल्पधनस्य पूर्व्वसञ्ज्ञा दण्डाः, दण्डासम्पत्तौ सर्व्वस्वदण्ड इत्याहुः।

अथ मनु-नारदौ,—

यस्य दृश्येत सप्ताहादुक्तसाक्ष्यस्य साक्षिणः।
रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमञ्च सः॥

रोगादित्वमशुचित्वलिङ्गमात्रपरं, दमस्तु पूर्व्वोक्तः सहस्रादिः। विवादपदद्विगुणो वा पञ्चाशदादिर्वा।

यत्र दृष्टात् प्रमादात् कूटत्वनिश्चयो नास्ति तत्रादृष्टादपि तन्निश्चये यथोक्तो दण्ड इति तात्पर्य्यम्।

अत एव कालान्तरे साक्षित्वतत्त्वज्ञानाय मनुनारदयोरित्युपक्रम्य ग्रहेश्वरमिश्रैरवतारितम्।

भवदेवोऽप्याह,—

यदि कृतदिव्यस्य सप्ताहाभ्यन्तरे रोगादिकमुपलक्ष्यते तदासौ कूटसाक्षी ऋणं दाप्यो दण्ड्यश्चेति।

---

१ क अवान्तरं।

# अथ जानतः साक्षिणः कौटिल्या-दनिगदतो दण्डः।

तत्र मनुः,—

त्रिपक्षादब्रुवन् साक्ष्यमृणादिषु नरोऽगदः।
तदृणं प्राप्नुयात्सर्व्वं दशबन्धञ्च सर्व्वतः॥

अगद इति अपरिहरणीयप्रतिबन्धकाभावपरं दशबन्धो दशमांशः। तेन यः पृच्छमानो बाधकं विना पक्षत्रयेणापि न ब्रूते स दशमांशसहितमृणं प्राप्नुयात् तस्य दाता भवेदित्यर्थः। तत्र दशमांशः कलास्थान इति ग्रहेश्वर-मिश्राः। तेन राज्ञे दण्डोऽयमिति भ्रमः।

यत्तु,—

अब्रुवन् हि नरः साक्ष्यमृणं सदशबन्धकम्।
राज्ञा सर्व्वं प्रदाप्यः षट्चत्वारिंशत्तमेऽहनि॥

इत्यत्र मिताक्षरायां व्याख्यातम्। सर्व्वं सवृद्धिकमृणं धनिने दाप्यः सदशमांशश्च राज्ञो भवति। राज्ञाऽधमर्णिको दाप्यः साधितादंशकं शतमित्युक्तत्वात्। इति चिन्त्यम्।

राज्ञेत्यादि वाक्यस्य यत्र राज्ञो[1] धनसाधनं तद्विषयत्वात् साधितादिति श्रवणात्। यत्र धनिको दुर्वलः स्वयमशक्नुवन् राज्ञा साधितार्थो भवति तत्राधमर्णस्य दण्डमाहेति स्वयमेतस्यावतारणात्।

---

१ क राज्ञा।

दण्डस्तु कात्यायनेनोक्तः,—

साक्षी साक्ष्यं न चेद्ब्रूयात् समदण्डं वहेदृणम्।
अतोऽन्येषु विवादेषु त्रिशतं दण्डमर्हति॥

समदण्डमृणमिति बालविषयेणैवैतावानेव दण्डः स्त्री-संग्रहणादिविषये तु पणशतत्रयमित्यर्थः।

यत्तु,—

पारयन्तोऽपि ये साक्ष्यं तुष्णींभूता उदासते।
ते कूटसाक्षिणां पापैस्तुल्या दण्डेन चैव हि॥

इति विष्णुवचनं तच्च दण्डेन कूटसाक्षीत्युक्तेन लोभात् सहस्रमित्यादिना विवादपराजयदण्डद्विगुणेन वा त्वभ्यासे त्वर्थदण्डविवासनाभ्यामिति मिताक्षराकारः।

विष्णूक्त-सर्व्वस्वापहरणेनेति रत्नाकरः।

एवञ्चैतन्मते वचनमिदं वारंवारं कूटसाक्ष्यविषयम्। ग्रहेश्वरमते त्वल्पधनस्य यथोक्तसंख्यातासम्पत्तिविषयं पर्य्यवस्यति। एतच्चानन्तरप्रकरणे दर्शितम्।

अथ लेख्यविषये व्यासः,—

स्थावरे विक्रयाधाने लेख्यं कूटं करोति यः।
स सम्यक्भावितः कार्य्यो जिह्वापाण्यङ्घ्रिवर्ज्जितः॥

सम्यग्भावितो लोके तथाविधदुराचारतया ख्यापितः। स्थावर इति विक्रयाधान इत्युभयोरप्युपलक्षणम्।

तेन यादृशि विषये कूटलेख्यकरणं तदनुसारेण तत्-कर्त्तुर्जिह्वादिच्छेदः समुच्चयविकल्पाभ्यां कर्त्तव्य इति तात्पर्य्यम्।

---

# अथ [१]निर्णयोत्तरकृत्यम् ।

तच्च दिव्यैर्निर्णये जयपराजयावधारणे कात्यायनः,—

शतार्द्धं दापयेच्छुद्धमशुद्धो दण्डभाग्भवेत् ।

तं दण्डमाह स एव,—

विषे तोये हुताशे च तुला-कोषे च तण्डुले ।
तप्तमाषकक्कृत्ये च क्रमाद्दण्डं प्रकल्पयेत् ॥
सहस्रं षट्शतं द्वे च तथा पञ्चशतानि च ।
चतुस्त्रिद्वयमेकञ्च हीनं हीनेषु कल्पयेत् ॥

निह्नवे भावितो दद्यादित्याद्युक्तदण्डेनायं दिव्य-निवन्धनो दण्डः समुच्चीयते, इति मिताक्षराकारः ।

याज्ञवल्क्यः,—

निह्नवे भावितो दद्यात् धनं राज्ञे च तत्समम् ।
मिथ्याभियोगी द्विगुणमभियोगाद्धनं हरेत्[२] ॥

निह्नवे अपलापे भावितः प्रमाणेनाङ्गीकारितः । तत्समं विवादविषयसमम् ।

मिताक्षराकारः,—

प्राङ्न्याय-प्रत्यवस्कन्दनयोरप्येवापह्नवकारीति प्रत्यर्थिना भावितः [३][प्रमाणेनाङ्गीकारितः] प्रकृतधनसमं दण्डं राज्ञे दद्यात् । प्रत्यर्थी यदि भावयितुं न शक्नोति तदा स एव मिथ्याभियोगी ज्ञात इति प्रकृतधनमर्थिने दद्यात् राज्ञे च तद्द्विगुणं दण्डमेतच्च ऋणादानविषय एव पदान्तरेषु दण्डान्तराभिधानादधनव्यवहारेष्वस्यासम्भवाच्चेत्याह ।

---

१ क निर्णयोऽत्र न कृतं । २ क्वचित् पाठः—वहेत् ।
३ क पुस्तके [ ] चिह्नितांशो नास्ति ।

मनुः,—

अर्थेऽपव्ययमानन्तु कारणेन विभावितम् ।
दापयेद्धनिकस्यार्थं दण्डलेशञ्च शक्तितः ॥

अर्थेऽपव्ययमानमपलपन्तं कारणेन प्रमाणेन ।

तथा,—

यो यावन्निह्नवीतार्थं मिथ्या यावति वा वदेत् ।
तौ नृपेणाप्यधर्म्मज्ञौ दण्ड्यौ च द्विगुणं दमम् ॥

सर्व्वमिदमाशयापराधपरम् । अत एव तत्समं तद्विगुणं दण्डलेशानामधमर्णाशयदोषादुत्कर्षापकर्षाभ्यां व्यवस्था रत्नाकरकृतोक्ता । तदनवधारणे जात्यादिकमादाय व्यवस्था ।

एवञ्च विस्मरणादीनामपह्नवानपह्नवपूर्व्वकसम्प्रतिपत्तौ च दण्डाभाव एव तत्र वादिनोऽनपराधत्वात् ।

कल्पतरौ तु आशयदोषव्यतिरेकेण विस्मरणादिनाऽपह्नवविषये शक्तितो दण्ड इत्युक्तम् ।

इहोत्तमर्णस्याप्रयुज्यप्रयुक्तत्वाद्यभिलापः प्रायेणाशयदोषप्रयुक्त एवेति तत्राविशेषेण द्विगुणो दण्डो ध्रुवः ।

तत्रापि शूद्रे विशेषमाह नारदः,—

मिथ्याभियोगिनो ये स्युर्द्विजानां शूद्रयोनयः ।
तेषां जिह्वाः समुत्कृत्य राजा शूले निवेशयेत् ॥

अथ पुनर्न्यायविषये याज्ञवल्क्यः,—

[1]दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु ।
सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम् ॥

---

१ क घ पुस्तकद्वये पाठः मूले च—सम्यक् दृष्टा तु दुर्दृष्टानिति पाठः ।

दुर्दृष्टान् स्मृत्याचारप्राप्तधर्म्मोल्लङ्घनेन रागलोभादिभिरसम्यक्विचारितत्वेन शङ्क्यमानानिति मिताक्षरा।

विवादादिति—यस्मिन् विवादे पराजितस्य यो दण्डस्तस्माद्द्विगुणमित्यर्थः।

तथा तत्रैव,—

यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः।
सभायां तं पुनर्जित्वा द्विगुणं दापयेद्दमम्॥

मनुः,—

स्वामात्याः प्राड्विवाकाश्च ये कुर्य्युः कार्य्यमन्यथा।
तत् स्वयं नृपतिः कुर्य्यात् तान् सहस्रन्तु दण्डयेत्॥

एतदसंख्यातधनविषयं धनव्यतिरिक्तसंग्रहणादिविवादविषयञ्च।

तथा—उत्कोचग्रहणे ये नियुक्ता इत्यादिना सर्व्वस्वग्रहणाभिधानात्तदितरविषयमेतदिति मनुटीका।

याज्ञवल्क्यः,—

सपणश्चेद्विवादः स्यात् तत्र हीनं प्रदापयेत्।
दण्डञ्च स्वपणञ्चैव धनिने धनमेव च॥

पुनर्न्यायं विनापि यद्यहं परिशोधनं न शोधयामि। यदि वायं समग्रऋणं साधयति तदैतद्राज्ञे ददामीत्येवमाद्यभिधायाधमर्णो यद्यनेन गृहीतधनं न शोधयति[1] यदि वाऽयं परिशोधनं न बोधयति तदेतद्ददामीत्यनेन[2] धनिको यत्र विवदते शतपणो विवादस्तत्र पराजितोऽधमर्णः।

१ क बोधयामि। २ ददामीत्यभिधाय।

पराजयावगमित-मिथ्यापह्नवादिनिमित्तं तत्समादिदण्डं पणीकृतञ्चार्थं विवादपदमित्युचितञ्चेति त्रयं दाप्यः। धनिकस्तु ऋणवर्ज्जं द्वयमित्यर्थः।

अत एव भवदेवेन पुनर्न्यायं विना सामान्यमाश्रित्योक्तम्। व्यवहारश्चार्थिप्रत्यर्थिदार्ढ्यात् कदाचित् सपणोऽपि भवति यथा यदि मे भङ्गो भवति सहस्रं तदा मे देयमिति।

अत एव तद्यदि कृतपणबन्धो हीयते तदा राज्ञा स्वयं कृतं पणं दाप्यः। स्वयञ्च दण्ड्यः। तदाहेत्युपक्रम्य सामान्यविषयं नारदवचनमवतारितम्।

विवादे सोत्तरपदे द्वयोर्यस्तत्र हीयते।
सपणं स्वकृतं दाप्यो विनेयश्चापराजितः॥ इति।

[1][ अत्र सपणञ्चेति विशेषोपादानात् यत्रैक एव पणं करोति यत्र वैकः शतमन्यः पञ्चाशतं प्रतिजानीते तत्र येन यत् पणीकृतं] स एव तावदेव दाप्यो नत्वपरो नाप्यधिकमिति मिताक्षराकारः।

इह केचित्,—

तीरितञ्चानुशिष्टञ्च यो मन्येत विधर्म्मतः।
द्विगुणं दण्डमास्थाय तत्तैतत् कार्य्यमुद्धरेत्॥

इति नारदवचनदर्शनात् यत्र वादिना द्विगुणो दण्डः प्रतिज्ञायते तत्रैव तद्दानं स एव च पणः, एवञ्च सपणश्चेत्यादिकमपि पुनर्न्यायविषयमेव तीरितमित्यादिनैकमूलत्वादिति। तन्न,

१ क पुस्तके [ ] चिह्नितांशः पतितः।

याज्ञवल्क्यीये दुर्दृष्टानिति वाक्ये द्विगुणदण्डप्रतिपादके वादिनस्तदनङ्गीकाराश्रवणात् सत्यजयिनस्तदसम्भवाच्च सपणश्चेत्यत्र दण्डश्च पणश्चेति समुच्चयश्रुतिविरोधात् पणस्य प्रौढिप्रयुक्तत्वादन्यत्रापि सम्भवेन वाक्ययोर्विषयभेदस्यावश्यवाच्यत्वात् ।

यो यावन्निह्नवीतेत्यादिना पुनर्न्यायं विना विना च वादिप्रतिज्ञानं पराजितस्य द्विगुणदण्डप्रतिपादनाच्च ।

इदन्तु विचारमर्हति तीरितमित्यादौ किमपेक्षया द्वैगुण्यमिति ।

तत्र केचित्— विवादपदाद्द्वैगुण्यन्तस्यैवोपस्थितत्वेन प्रतियोग्याकाङ्क्षापूरकत्वाच्च यो मन्येताजितोऽस्मीत्यादि-याज्ञवल्क्यीयेनैकमूलकत्वाच्चेत्याहुः ।

तन्न— अपह्नवादेरुभयत्र समानत्वेऽपि पराजितस्य धृष्टतया वा दुराशयतया वा प्राड्विवाकादिवचनमनादृत्य पुनर्विवदमानस्यापराधगौरवेण दण्डगौरवस्यौचित्यात्[१] ।

तस्माद्यत्र प्राथमिको विवादस्तत्र तद्विषय एव द्विगुणो दण्डः । यत्र तु पुनर्विवादस्तत्र विवादविषयद्विगुणादपि द्विगुण इति युक्तं तत्र तस्यैवोपस्थितत्वेन बोधितत्वात् ।

तथाहि—

तीरितं साक्षिलेख्यादिना निर्णीतमनुद्धृतदण्डं दण्डपर्यन्ततान्नीतमिति यावदिति व्याचक्ष्यते ।

अन्यथा द्विगुणदण्डास्थानवैयर्थ्यात् विवादविषया-

१ क—दण्डगौरववैचित्यात् ।

पेक्षया द्विगुणदण्डस्य तदनास्थानेऽपि प्राप्तत्वात् गुरौ लघौ चापराधे दण्डसाम्यस्य न्यायविरुद्धत्वाच्च ।

एवञ्च यो मन्येत इत्यादिवाक्येऽपि द्विगुणापेक्षयैव द्विगुणो दण्ड इति स्थितम् ।

एतेन सपणश्चेदित्यत्र विवादविषय द्विगुणदण्डास्थानमेव पणपदार्थ इत्यपास्तं तस्य प्राप्तत्वेन प्रतिज्ञानानपेक्षितत्वा-द्दण्डञ्च सपणञ्चेति उभयविधिविरोधाच्चेति ।

किञ्चैवं सपण इत्यस्यान्यतः प्राप्तानुवादत्वं प्राप्तम् । तथाच यत्राल्पो दण्डो मुनिभिः स्मर्य्यते तत्रापि गुरुतर-दण्डपणीकरणाचारो निर्मूलः स्यात् ।

न चानुवन्धो यतः सभ्य इत्याद्युक्तं दण्डोत्कर्षनिमित्तं मूलमत्रेति वाच्यं पणं विनापि दण्डोत्कर्षकत्वादिति दिक् ।

इति प्रकीर्णके व्यवहारविषयवर्गः ।

न शक्यमन्योन्यविरुद्धधर्म्मिणो
गणैश्च वक्तुमपि ये प्रकीर्णकाः ।
उदाहृतास्तत्तदुपाधिकल्पना-
त्तथाप्यभीष्टार्थझटित्यवाप्तये ॥

इति महामहोपाध्याय वर्द्धमानकृतौ दण्डविवेके

प्रकीर्णकदण्डपरिच्छेदः सप्तमः ।

श्रीविल्वपञ्चान्वयसम्भवेन श्रीमद्भवेशस्य तनूद्भवेन ।
श्रीवर्द्धमानेन विदेहभर्त्तुः कृते कृतो दण्डविधौ विवेकः ॥

परकृतिमपि दृष्ट्वा निर्म्मितेऽस्मिन् निवन्धे
समुचितवचनोत्था लक्ष्यते कापि लक्ष्मीः ।
स्फुरति हि कुसुमानां शेखरे योजितानां
नव इव समुदायद्योतमानो विनोदः ॥
कल्पतरु कामधेनु हलायुधांश्च धर्म्मकोषं
स्मृतिसार-कृत्यसागर-रत्नाकर-पारिजातांश्च ।
टीकासहिते द्वे संहिते मनुयाज्ञवल्क्योक्ते
व्यवहारे तिलकञ्च प्रदीपिकाञ्च प्रदीपञ्च ॥
दृष्ट्वा कृतो निवन्धो निर्वन्धान्निर्वन्धादेशवर्षेण ।
तदिमानिमञ्च दृष्ट्वा गुणदोषौ कल्पयन्तु मे सन्तः ॥
दोषोद्घोषणसम्मुखोऽस्तु मुखरो ज्ञात्वाऽर्थतत्त्वं गिराम्
सर्व्वाः पूर्व्वकृतीर्विलोक्य विदुषां तोषो निवन्धेऽधुना ।
तत्तस्मादुभयेऽपि तेन जड़ितास्तुष्णीं चिरादासता-
मास्तां किञ्च विहाय दूषणरसं लोको गुणग्राहकः ॥

इति विल्वपञ्चकीय-महामहोपाध्याय-धर्म्माधिकरणिक-
श्रीवर्द्धमानकृतो दण्डविवेकः समाप्तः ।

श्रीगुरवे नमः ।

---

१ क पुस्तके परिचयश्लोका न सन्ति ।

# अथ दण्डविवेकोक्तर्षिनाम्नामकारादिक्रमेण सूचिपत्राणि ।


| | पृः | पं | पृः | पं |
|---|---|---|---|---|
| अङ्गिरा | ११ | १, | ३१९ | ४। |
| आपस्तम्बः | ३८ | १४, | ६८ | १४, |
| | ७१ | ७, | ७१ | ९, |
| | ७३ | ११, | ८६ | १२, |
| | १५२ | २, | १५२ | ३, |
| | १५६ | १७, | १७१ | १३, |
| | १७३ | ९, | १८४ | ८, |
| | २३१ | ९, | २४२ | १३, |
| | २६० | २०, | २७५ | ८, |
| | ३२२ | १७। | | |
| उशनाः | ७१ | १०, | २०४ | १८, |
| | २८१ | २०, | ३०३ | १५। |
| कात्यायनः | ६ | ८, | १३ | ३, |
| | १३ | १३, | १४ | ६, |
| | १५ | १, | १६ | १२, |
| | १८ | १२, | १९ | ७, |
| | २७ | १३, | २८ | १४, |
| | २९ | ३, | ३० | १५, |
| | ३१ | १, | ३७ | १७, |
| | ३८ | १५, | ३९ | १४, |
| | ३९ | २५, | ४६ | १, |
| | ५० | ५, | ५० | १६, |
| | ५१ | २, | ५२ | १६, |
| | ५६ | १८, | ५७ | १५, |
| | ५८ | १३, | ५८ | २०, |
| | ६६ | १, | ६६ | १४, |
| | ६७ | १७, | ७५ | १३, |
| | ८३ | १३, | ८३ | २०, |
| | ८४ | २१, | ८६ | १९, |
| कात्यायनः | ८६ | २१, | ८७ | ११, |
| | ८९ | १५, | ८९ | १८, |
| | ९० | १, | १५७ | १६, |
| | १५८ | २, | १५८ | ३, |
| | १६४ | २२, | १९७ | ६, |
| | १९७ | १५, | १९९ | १, |
| | २०४ | १८, | २१४ | १०, |
| | २१५ | १४, | २२० | ८, |
| | २२१ | १, | २२९ | १४, |
| | २३२ | ९, | २३३ | '१४, |
| | २३४ | ८, | २४० | १३, |
| | २४१ | १, | २४१ | १०, |
| | २४३ | १८, | २४७ | ८, |
| | २४७ | १२, | २४८ | २२, |
| | २४९ | २, | २५१ | १७, |
| | २५२ | १२, | २५२ | १४, |
| | २५३ | १, | २५६ | १५, |
| | २५९ | १४, | २६३ | १, |
| | २६५ | ३, | २६५ | २२, |
| | २६७ | १२, | २६८ | ४, |
| | २६८ | १८, | २७० | ९, |
| | २७२ | १, | २८० | ६, |
| | २८० | ११, | २८३ | १५, |
| | २९७ | १६, | २९८ | १, |
| | २९९ | ९, | ३०० | २०. |
| | ३१२ | ५, | ३१६ | ७, |
| | ३१९ | १, | ३२० | ७, |
| | ३२२ | २०, | ३२३ | १५, |
| | ३२७ | १२, | ३३२ | ५, |

| | पृः | पं | पृः | पं |
|---|---|---|---|---|
| कात्यायनः | ३३४ | ३, | ३३५ | १, |
| | ३३६ | १०, | ३३७ | ८, |
| | ३३९ | १२, | ३४१ | ६, |
| | ३४२ | ४, | ३४२ | ९ । |
| गौतमः | ४० | ७, | ४१ | १६, |
| | ४२ | ६, | ४४ | १०, |
| | ५१ | १०, | ५२ | ३, |
| | ६५ | १८, | ९४ | ७, |
| | १४७ | १६, | १५१ | ७, |
| | १७२ | २१, | १७३ | १७, |
| | १७४ | १८, | १८० | १०, |
| | २८३ | ७, | ३२१ | ९, |
| | ३२२ | १४, | ३२८ | १३ । |
| दक्षः | | | २७१ | १ । |
| देवलः | | | २१७ | १६ । |
| नारदः | १२८ | १८, | १३१ | १, |
| | १३१ | १७, | १३१ | १९, |
| | १३३ | १२, | १३३ | १७, |
| | १४० | ८, | १४३ | ६, |
| | १४३ | ८, | १४४ | ९, |
| | १४४ | १३, | १४५ | २, |
| | १४९ | १९, | १५० | ७, |
| | १५९ | १९, | १७८ | ११, |
| | १८० | १५, | १८३ | ९, |
| | १८८ | १०, | १८९ | ५, |
| | १९० | २०, | १९४ | ७, |
| | १९४ | १३, | १९६ | २, |
| | २०४ | १०, | २०६ | १४, |
| | २०९ | १७, | २१३ | ११, |
| | २१४ | २०, | २१५ | २२, |
| | २१६ | २३, | २२३ | ९, |
| | २३१ | १५, | २३२ | १, |
| | २३३ | ३, | २४७ | २०, |
| | २४७ | २२, | २४८ | १४, |
| नारदः | २४८ | २०, | २४९ | ८, |
| | २५३ | ८, | २५४ | १०, |
| | २५८ | ६, | २६० | ४, |
| | २६१ | ११, | २६१ | १५, |
| | २६२ | ८, | २६६ | १०, |
| | २६६ | २०, | २६८ | ११, |
| | २७१ | ५, | २७९ | १०, |
| | २८० | २१, | २८२ | ७, |
| | २८४ | ८, | २८४ | २२, |
| | २८५ | ६, | २८५ | १९, |
| | ३११ | १, | ३२१ | १, |
| | ३२८ | २०, | ३३० | १२, |
| | ३३२ | ८, | ३३३ | १७, |
| | ३३७ | १४, | ३३८ | १६, |
| | ३४० | १, | ३४१ | १ । |
| पैठिनसिः | | | ७६ | ७ । |
| बृहस्पतिः | १२ | ७, | १४ | २०, |
| | १५ | ५, | १६ | १२, |
| | १८ | १९, | २० | २, |
| | २० | २०, | २३ | ९, |
| | ५७ | १३, | ५८ | १०, |
| | ५८ | १६, | ६१ | १५, |
| | ६३ | ८, | ६४ | ३, |
| | ६८ | १९, | ७० | १०, |
| | ७४ | २०, | ८० | २०, |
| | ८५ | ३, | ८५ | १२, |
| | १०० | ७, | १०० | २१, |
| | १०१ | ८, | १०५ | १३, |
| | १०६ | १६, | १०८ | ५, |
| | १०८ | १२, | ११२ | २, |
| | ११५ | २, | ११५ | ७, |
| | ११६ | २०, | ११८ | १, |
| | १२२ | ७, | १२४ | ९, |
| | १२४ | २१, | १२६ | ४, |

पृः पं पृः पं

बृहस्पतिः १२६ १४, १३० १०,
१३४ ३, १४१ ३,
१४२ ११, १५४ १४,
१५५ २०, १५६ ७,
१५६ ११, १५९ ८,
१६४ १३, १६५ १३,
१७१ १०, १७१ १९,
१७४ १६, १९८ १०.
२०० २, २०५ २,
२१६ ३, २१६ ११,
२१९ २, २२७ ११,
२३३ १०, २३३ १८,
२३६ १६, २४८ २,
२४८ ९, २४९ ३,
२४९ ८, २५० २,
२५१ ७, २५२ २०,
२५५ १४, २५९ १६,
२६० १४, २६७ ६,
२६९ १, ३१८ २१,
३२१ ६, ३२७ १९,
३२८ २, ३२९ ११,
३३२ ४, ३३६ १३,
३३८ १, ३३९ १९ ।
वृद्धमनुः ५९ ४, ८८ ६ ।
बौधायनः ८ १४, १७ १५,
४६ २२, ४७ १,
७० १५, ७१ ९,
९४ १७, २४६ १६ ।
मनुः ३ १, ४ २,
५ २, ५ १९,
८ २, ८ २०,
९ २, ९ ३,
१२ २, १३ १६,
१४ १२, १४ १८,

पृः पं पृः पं

मनुः १५ १०, १६ ४,
१६ १५, १८ १३,
२१ ९, २३ १,
२३ १४, २६ १३,
२९ ११, ३३ ४,
३७ १, ३८ १,
३८ २१, ४० १५,
४१ १, ४१ ११,
४५ १०, ४६ ३,
४७ १९, ४९ १३.
५४ २०, ५७ ७,
६० ३, ६२ १८,
६३ १३, ६५ १,
६७ १४, ७३ ७.
७४ १६, ७७ १२,
८० ३, ८१ ८,
८२ १, ८३ ७,
८४ १, ८५ २१,
८७ १, ९० १९,
९२ ८, ९३ ६,
९६ २०, ९७ ४,
९८ २, ९८ ६,
१०१ १९, १०२ १२,
१०४ १३, १०४ २२,
१०५ २२, १०६ ४,
१०७ ६, १०९ २१,
११२ ७, ११४ ४,
११५ ११, ११८ १५,
१२० ८, १२१ २,
१२१ १२, १२३ ११,
१२३ १२, १२३ १७,
१२४ १७, १२५ १४,
१२८ ९, १२९ ३,
१३१ १०, १३२ १६,

| | पृः | पं | पृः | पं |
|---|---|---|---|---|
| मनुः | १३३ | ९, | १३४ | ५, |
| | १३४ | ९, | १३७ | ३, |
| | १३७ | १०, | १३७ | १८, |
| | १३८ | १, | १३८ | ११, |
| | १४२ | ४, | १४३ | १८, |
| | १४४ | १५, | १४६ | ४, |
| | १४६ | १२, | १४८ | १, |
| | १५० | ५, | १५० | ७, |
| | १५० | १०, | १५२ | ९, |
| | १५२ | १२, | १५५ | १४, |
| | १५६ | ३, | १५६ | २२, |
| | १५८ | १०, | १५८ | २१, |
| | १५९ | ९, | १५९ | २०, |
| | १६१ | १८, | १६६ | १४, |
| | १६६ | १८, | १६७ | ९, |
| | १६७ | ११, | १६७ | २०, |
| | १६८ | १, | १६८ | २०, |
| | १६९ | २२, | १७० | २, |
| | १७० | १४, | १७२ | १, |
| | १७३ | ६, | १७४ | २१, |
| | १७५ | ५, | १७६ | २, |
| | १७६ | ५, | १७६ | १६, |
| | १७६ | १८, | १७७ | ४, |
| | १७८ | ५, | १७८ | १९, |
| | १७८ | २२, | १७९ | १६, |
| | १८१ | ५, | १८१ | ११, |
| | १८२ | ८, | १८२ | १२, |
| | १८२ | १९, | १८३ | १, |
| | १८३ | १२, | १८३ | १८, |
| | १८४ | १३, | १८४ | १९, |
| | १८५ | १६, | १८६ | १४, |
| | १८६ | २१, | १८८ | १८, |
| | १८९ | १९, | १९० | १, |
| | १९१ | ३, | १९१ | ६, |
| मनुः | १९२ | ६, | १९६ | ११, |
| | १९७ | २, | २०१ | ८, |
| | २०४ | १०, | २०५ | २१, |
| | २०६ | १४, | २०७ | १९, |
| | २११ | ४, | २११ | १९, |
| | २१२ | ९, | २१३ | १, |
| | २१३, | २२, | २१७ | १३, |
| | २१७ | १७, | २१७ | २२, |
| | २२० | १३, | २२२ | ४, |
| | २२४ | ४, | २२४ | १५, |
| | २२९ | २१, | २३० | २२, |
| | २३४ | ५, | २३६ | ७, |
| | २३६ | ८, | २३६ | १८, |
| | २३७ | २०, | २३९ | १, |
| | २३९ | ७, | २३९ | ११, |
| | २३९ | २१, | २४० | ८, |
| | २४२ | ५, | २४३ | ६, |
| | २४३ | ११, | २४४ | १७, |
| | २४५ | १२, | २४६ | १६, |
| | २५० | २१, | २५३ | ८, |
| | २५४ | २, | २५४ | १०, |
| | २५५ | १, | २५८ | १, |
| | २५९ | १२, | २६० | ७, |
| | २६१ | ७, | २६१ | १२, |
| | २६४ | २१, | २६६ | २, |
| | २६७ | १६, | २७० | ३, |
| | २७१ | २२, | २७२ | २३, |
| | २७३ | १, | २७३ | ६, |
| | २७३ | १०, | २७३ | १२, |
| | २७३ | १४, | २७४ | १, |
| | २७४ | १८, | २७४ | १९, |
| | २७६ | २१, | २७८ | १, |
| | २८० | ३, | २८१ | ११, |
| | २८४ | १५, | २८५ | २१, |

| | पृः | पं | पृः | पं |
|---|---|---|---|---|
| मनुः | २८६ | १०, | २८७ | १, |
| | २८८ | ६, | २८८ | ११, |
| | २९७ | ११, | २९८ | १८, |
| | २९९ | १५, | ३०२ | १८, |
| | ३०३ | ५, | ३०४ | १७, |
| | ३०५ | ९, | ३०९ | १७, |
| | ३१० | ११, | ३११ | १६, |
| | ३१३ | १, | ३१६ | ८, |
| | ३१७ | ४, | ३१८ | १५, |
| | ३१९ | ९, | ३२१ | १, |
| | ३२५ | ९, | ३२६ | ३, |
| | ३४३ | ४, | ३४४ | १६। |
| यमः | १८ | २२, | ४६ | २२, |
| | ४७ | ११, | ५० | १, |
| | ६१ | ६, | ६१ | १७, |
| | ६७ | ३, | ७८ | १८, |
| | १७४ | ४, | १७७ | १०, |
| | १८० | ७, | ३१५ | १७, |
| | ३१८ | १२। | | |
| याज्ञवल्क्यः | ७ | १, | ८ | ६, |
| | १३ | ७, | २३ | ४, |
| | २५ | ५, | २५ | १४, |
| | ३९ | १०, | ५२ | १७, |
| | ५७ | १०, | ६४ | २०, |
| | ७० | २, | ७५ | ४, |
| | ७९ | १५, | ८१ | १४, |
| | ८३ | १९, | ८४ | १३, |
| | ८५ | १५, | ८७ | ५, |
| | ८७ | २१, | ८९ | ८, |
| | ९० | १४, | ९२ | १८, |
| | ९६ | १५, | ९७ | १२, |
| | ९७ | २०, | ९९ | १३, |
| | १०० | १, | १०० | १२, |
| | १०२ | ४, | १०२ | १७, |

| | पृः | पं | पृः | पं |
|---|---|---|---|---|
| याज्ञवल्क्यः | १०२ | २१, | १०४ | १७, |
| | १०६ | ११, | १०७ | १३, |
| | १०८ | ११, | ११० | ११, |
| | ११३ | १, | १३० | ४, |
| | १३३ | ३, | १३३ | १६, |
| | १४३ | १, | १५७ | ७, |
| | १५७ | १५, | १६६ | १६, |
| | १६७ | ५, | १६८ | ८, |
| | १७६ | १०, | १७७ | १८, |
| | १७९ | १३, | १७९ | १८, |
| | १८२ | १५, | १८५ | ४, |
| | १८६ | ४, | १८९ | १४, |
| | २१० | १६, | २११ | ८, |
| | २१३ | १९, | २१४ | ८, |
| | २२० | ४, | २२१ | १६, |
| | २२३ | १२, | ३२३ | १६, |
| | २३६ | १६, | २३९ | १०, |
| | २४९ | ११, | २५० | ४, |
| | २५० | १५, | २५२ | ३, |
| | २५२ | २३, | २५३ | १९, |
| | २५५ | १२, | २५७ | १, |
| | २५७ | ८, | २६३ | २१, |
| | २६४ | २३, | २६५ | १७, |
| | २६७ | १०, | २६८ | १४, |
| | २६९ | १६, | २७१ | १६, |
| | २७२ | ११, | २७४ | १३, |
| | २७७ | १३, | २७९ | १, |
| | २८४ | ३, | २८४ | १२, |
| | २८७ | १८, | २८८ | ३, |
| | २९८ | १०, | ३०० | १, |
| | ३०३ | ४, | ३०७ | ५, |
| | ३०८ | १६, | ३१० | १७, |
| | ३१२ | १७, | ३१४ | १८, |
| | ३१८ | १, | ३१८ | १४, |

पृः पं पृः पं

याज्ञवल्क्यः ३२२ ६, ३२७ १७,
३२८ १२, ३२९ ५,
३३४ १६, ३३५ ९,
३३६ १ ।

विष्णुः २३ १, ३६ १४,
८८ १, ९३ १७,
९४ २, १०५ १,
१०६ १, १०७ १,
१०८ १४, १३० १३,
१३२ ८, १४५ १०,
१४९ ८, १५३ ४,
१९४ २, १९५ २,
२०८ १६, २१० १२,
२१३ ७, २२१ ९,
२२२ १४, २२३ १५,
२९७ २१, २९९ १३,
३०१ ११, ३०२ ७,
३०३ २०, ३०४ ११,
३०६ १, ३०७ १८,
३०८ २, ३०९ १२,
३१२ ८, ३१७ १४,
३२२ १, ३२४ १८,
३३५ १६ ।

वशिष्ठः ६ १४, ७१ २०,
९५ ४, १११ १५,
१७० १३, १७४ १५,
२३० १३, २३४ ५,
२३६ १६, २७५ ११,
२७५ १७, २७६ ३,
२७६ १२, २८७ १०,
२८९ ३ ।

पृः पं पृः पं

व्यासः १४ १५, ५० ११,
५३ १०, ७६ १५,
१०५ ८, १०५ १९,
११९ ९, १२१ १३,
१२४ ४, १३० ७,
१३० ९, १३२ १,
१३२ १३, १५६ ४,
१६४ ७, १८८ २,
२०८ ५, ३३४ ९,
३३५ ६ ।

शङ्खः ५४ ७, ५४ ८ ।

शङ्खलिखितः २२ २, ४३ १२,
४८ १३, ५२ १५,
५७ १९, ६० १०,
७३ ३, ९० २,
९० ६, ९२ २२,
९६ ४, ९७ ९,
९८ १४, १२७ १४,
१३० १५, १३२ ५,
१४५ ६, १४५ १३,
१४५ २१, १४७ ७,
१५० २१, १५१ १७,
१५१ २०, १५९ १२,
२०५ ८, २१२ १७,
३१२ १०, ३१३ २२,
३१५ १५, ३१७ १८,
२८३ १७, २८४ ६ ।

हारीतः १९२ १४, १७३ ७२,
२०२ ८, २०६ १२,
२१५ १९, ३२१ १२ ।

# दण्डविवेकधृतसंग्रहकारनामानि तद्धृतटीकाकारनामानि च।


| | पृः | पं | पृः | पं |
|---|---|---|---|---|
| कुल्लूकभट्टः | ५ | २२, | ११ | ११, |
| | १७ | १२, | ४५ | १९, |
| | ४८ | २३, | ५५ | ५, |
| | ७३ | ८, | ८२ | ७, |
| | ९१ | ९, | ११५ | १९, |
| | ११६ | १, | ११७ | १४, |
| | ११९ | १६, | १२३ | १९, |
| | १२९ | १२, | १३७ | २१, |
| | १३८ | ९, | १४८ | २१, |
| | १४९ | ६, | १५० | १४, |
| | १६० | ७, | १६१ | १२, |
| | १६२ | १८, | १६३ | २, |
| | १६८ | १७, | १६९ | ४, |
| | १७० | ३, | १७६ | ६, |
| | १७७ | १३, | १८२ | १३, |
| | २०१ | १८, | २०६ | ४, |
| | २०७ | ७-२०, | २०८ | ३, |
| | २१२ | ४, | २२६ | २१, |
| | २२८ | २२, | २२९ | ९, |
| | २३० | ४, | २५३ | १३, |
| | २५४ | १३, | २६८ | १, |
| | २७३ | ९-२२, | २८१ | १५, |
| | २८६ | १४, | २८७ | ९, |
| | ३१३ | ९, | ३२२ | १२, |
| | ३२६ | ११, | ३४४ | २१। |
| गार्गीयमानवः | ५१ | ९, | ५२ | २। |
| गोविन्दराजः | ४ | ८, | १० | ११ |
| | १८ | २, | १२३ | १८, |

| | पृः | पं | पृः | पं |
|---|---|---|---|---|
| गोविन्दराजः | १४५ | १, | १४९ | ३, |
| | ३४४ | २३, | ३४५ | १। |
| ग्रहेश्वरमिश्रः | | | ३२६ | १४, |
| | ३४३ | १५, | ३४६ | ११, |
| | ३४७ | १८। | | |
| चण्डेश्वरः | २५ | १, | १३५ | १२, |
| | १८७ | १९, | ३१० | २४, |
| | ३२६ | ११। | | |
| दीपिकाकारः | | | ३३३ | ४। |
| नारायणः | १० | ४, | १८ | ४, |
| | २० | ६, | ४१ | ११, |
| | ४५ | १३, | ४९ | १-१६ |
| | ५५ | २-१५, | ५६ | ७-१६ |
| | ८२ | ४, | ९१ | १०-२२, |
| | १०५ | ५, | १०६ | १०, |
| | ११२ | १५, | ११४ | १६, |
| | ११९ | ३, | १२९ | १३, |
| | १३२ | २०, | १३७ | १७, |
| | १३८ | ५, | १३९ | १४, |
| | १४४ | ३-१६, | १४७ | ५, |
| | १४८ | १५-१९, | १४९ | ७, |
| | १५८ | १६, | १५९ | ३, |
| | १६० | ८, | १६२ | १८, |
| | १६३ | ३, | १६७ | १९, |
| | १७० | १६, | १७१ | ९, |
| | १७५ | ५, | १७७ | १६, |
| | १८२ | १३, | १८३ | ५-१९ |
| | १८७ | १-१४, | २०२ | ३, |

पृः पं पृः पं

नारायणः २०४ १७, २०७ २१,
२२० २३, २२४ ८-१७,
२२५ २४, २२६ ६-२३,
२२९ ३-१२, २३१ १४,
२३७ २१, २४० ८,
२४२ ५, २५६ ५,
२६६ ६, ३१० ८,
३१३ ८, ३१६ १५,
३२६ ११, ३४४ २२ ।

नारायणसर्व्वज्ञः १४४ ३,
१४८ १५, २२६ २३,
२२९ ३ ।

पारिजातः १५० १९, २०६ १ ।

भट्टः १२० ४, १७५ ५ ।
१८३ १६ ।

भवदेवः ३४७ १९ ।

भाष्यकारः २९ ५ ।

महार्णवकारः १३५ १० ।

मिताक्षराकारः ३२३ ८,
३३७ २०, ३४३ १८,
३४४ ५ ।

मिश्राः ६४ १०, ६५ १२ ।

मेधातिथिः ५ ८, १० ११,
१७ १३, १८ ५,
२१२ १० ।

रभसपालः २७ ३ ।

रुद्रः २७ ५ ।

पृः पं पृः पं

लक्ष्मीधरः ३१ १४, ३२६ १६ ।

वादरायणः १८ १० ।

विज्ञानेश्वरः १९३ २, २८६ १३,
२८७ १९ ।

विष्णुगुप्तः २६ ३, २७ १० ।

शूलपाणिः २४० १० ।

सर्व्वज्ञः २२६ १७, ३१२ १ ।

हरिनाथः ३२६ ११ ।

हलायुधः ४५ १, ५६ १६,
६० ९, ६१ ११,
७२ ३६, ७६ ५,
७९ ७, ८२ १५,
९१ ४-१८, ९४ १३,
९५ ३-१३, ९६ १,
९९ १-४, १०२ ७,
११७ १८, ११८ २,
११९ २१, १४० १,
१४४ १७, १४६ १०-२०,
१४९ १३, १५० १७,
१५१ १३, १५२ १४,
१६२ १७, १८५ १३,
१९७ २०, १९८ १७,
२२२ २-२०, २९९ ३,
३०१ ४, ३०७ १६,
३१० २४ ।

हेमाद्रिः १३६ २ ।

# दण्डविवेकधृतसंग्रहग्रन्थनामानि तद्धृतटीकानामानि च ।


पृः पं पृः पं

कल्पतरुः १६ ६, २३ १२,
२८ ४, ३४ २०,
६० २२, ६३ १८,
६६ ८, ७१ १६,
७२ २, ७५ १०-२२
८५ ८, १३६ ३-१०,
१३७ १४, १३८ २२,
१४६ २०, १५७ २३,
१५८ ६, १६१ १४,
१६२ ३, १६३ ९,
१७१ १७, १७२ १४,
१७४ १७, १७६ १५-१८,
१८७ २, १९७ १८,
२१७ २१, २४५ २२,
२४६ १८, २६० १९,
२६१ २, २६२ २०,
२७६ १२, ३२६ १८,
३२८ १८, ३३२ १८,
३४३ १४, ३५१ १४ ।

कामधेनुः २८ ४, ३४ २०,
७१ १५, ७२ २,
९४ १३, १२६ ५,
१२८ १, १३१ ८,
१३८ २२, १४४ १४,
१५० ३-१६, १५२ १,
१५३ ६, १६३ २१,
१६६ १४, १७६ ८,
१९८ १, २१७ २१,
२२७ १६, २५४ ४,

पृः पं पृः पं

कामधेनुः २७९ १८, २८० १०,
३०७ ९, ३२४ २३,
३२८ १८ ।

कृत्यसागरः २२२ १९, २७८ ११,
२८६ ४, ३२७ ६,
३२८ ८, ३२९ ९,
३३९ ९, ३४४ १० ।

कृत्यसारः २८ ४ ।

गोपथब्राह्मणम् १३४ ११,
३३६ १६ ।

चतुर्वर्गचिन्तामणिः २७ १३,
१३४ २० ।

द्वैतविवेकः ७६ २२ ।

पराशरभाष्यम् २७९ ९ ।

पारिजातः १८ ३, १५० १९,
१७३ २२, १७७ ३-१२,
१८१ २०, २०६ १,
२२९ ८, २६० १९,
३३२ २२ ।

प्रदीपिका १८ ४ ।

भूपालपद्धतिः १३६ ७ ।

मनुटीका ३ १७, ४५ १०,
४८ ४-२३, ५५ ५,
८२ ६, ९१ ९,
९८ १२, ११५ १९,
११७ ९-१४, ११९ १९,
१२९ १२, १३८ १५,

| | पृः | पं | पृः | पं |
|---|---|---|---|---|
| मनुटीका | १४४ | २, | १५७ | ५, |
| | १६० | ७, | १६२ | ९-१८, |
| | १७० | २-१४, | १७२ | १३, |
| | १८१ | १०, | १८२ | १३, |
| | १८३ | १५, | १८४ | १६, |
| | १८५ | २, | १८६ | २०, |
| | २२५ | १५ । | | |
| मिताक्षरा | ७ | ५, | ८ | १८, |
| | १० | ९, | १४ | २, |
| | १७ | ३-१४, | २९ | १८, |
| | ३३ | २३, | ३४ | ४, |
| | ४२ | ३, | ५२ | १७, |
| | ५९ | ८, | ६५ | १५, |
| | ७१ | २२, | ३०८ | ८-२४, |
| | ३१५ | २१ । | | |
| रत्नाकरः | ३ | ११-१८, | २६ | १६, |
| | २८ | ३, | २९ | १५. |
| | ३० | २१, | ३१ | १६, |
| | ३७ | १४, | ४५ | १५, |
| | ५१ | १९, | ५४ | १६, |
| | ५५ | १३, | ५८ | ८, |
| | ६२ | १, | ६४ | १२, |
| | ६५ | ६-१०, | ६७ | २-१०, |
| | ६८ | २, | ७२ | ४-१३, |
| | ७४ | १०, | ७५ | ७-२२, |
| | ७६ | २०, | ७८ | १०, |
| | ७९ | ६-१७, | ८२ | ५-१०, |
| | ८७ | २, | ९० | ९-१४, |
| | ९१ | १९, | ९३ | ४-१४, |
| | ९४ | १३, | ९७ | १६, |
| | १०० | २३, | १०१ | १९, |
| | १०५ | २२, | १०८ | २१, |
| | ११२ | १४, | ११७ | ८-१०, |
| | ११९ | १५, | १२१ | ५, |

| | पृः | पं | पृः | पं |
|---|---|---|---|---|
| रत्नाकरः | १२२ | ६, | १२५ | ७-८, |
| | १२६ | ११, | १२७ | १८, |
| | १२८ | ५, | १३१ | १४, |
| | १३२ | ११, | १३४ | ८, |
| | १३६ | ६, | १३७ | ९-१४, |
| | १३८ | १४, | १३९ | १६-२२, |
| | १४२ | ३, | १४३ | ६, |
| | १४५ | ९-१२, | १४६ | १९, |
| | १४७ | १, | १४९ | २, |
| | १५० | १५, | १५१ | १८, |
| | १५२ | १४, | १५३ | १-६, |
| | १५५ | १६, | १५७ | ४, |
| | १५८ | १, | १५९ | ४-१७, |
| | १६० | ११-२१, | १६२ | २-१४, |
| | १६४ | १०-१२, | १६५ | ४, |
| | १६६ | ७-१९, | १६७ | १९, |
| | १६८ | २०, | १७२ | १०, |
| | १७३ | २१, | १७५ | ४-१७, |
| | १७६ | ४-१४, | १७७ | २१, |
| | १७९ | १७, | १८३ | १४, |
| | १८४ | ६-१६, | १८७ | ३, |
| | १८८ | १९, | १८९ | १८, |
| | १९१ | ६, | १९४ | १२, |
| | १९७ | १९, | १९८ | १६, |
| | २०२ | १२-२१, | २०४ | १३-२१, |
| | २०५ | २०, | २०६ | ५-१२, |
| | २०७ | ४-१८, | २११ | १४-२२, |
| | २१३ | २ ८, | २१४ | १२, |
| | २१६ | ३-१३, | २१७ | १०-२०, |
| | २२२ | ३, | २२४ | २१, |
| | २२६ | ८-२१, | २२८ | २१, |
| | २३१ | १०, | २३२ | १३-२३, |
| | २३४ | २, | २५२ | २, |
| | २५४ | २, | २५५ | १०, |

